by strife and turmoil during and for a considerable time after Kumbhā's period which prevented S. Rāj. receiving publicity in other parts of the country. It is really surprising how a copy of S.Rāj. chanced in such difficult circumstances to come to Somanātha's hand in the far away South but to no writer of Northern India.

What is still more curious is the fact that although as many as twelve MSS. of this work were deposited in the Bikāner Library presumably since the reign of Mahārājā Anupasingh in the 17th century A.D., Bhāva Bhaṭṭa a writer of treatises on Saṅgīta patronised by the said Mahārājā and one most likely to have had access to the MSS. of Saṅgītarāja should have omitted to make any reference to this work or to Kumbhā in the books written by him (Bhaṭṭa).

Out of the eleven works on Saṅgīta written by Bhāva Bhaṭṭa which are deposited in the Anūpsingh Library of Bikāner in MS. form the following three were published by Pt. V. N. Bhatkhande from Poona under the editorship of D. K. Joshi.

(1) Anūpa Saṅgīta Ratnākara (published in 1919)
(2) Anūpa Saṅgīta Aṅkuśa ( do )
(3) Anūpa Saṅgīta Vilāsa ( do 1920)

As these works are out of print since long the Editor did not have a chance of examining them personally, but a scholar who was specially requested to examine them and to find out whether or not Kumbhā or his S.Rāj. were referred to in them has reported that he has not been able to spot out any such reference. Bhāva Bhaṭṭa quotes from S.R., Saṅgīta Sṛṅgārahāra of Hammīra and the authors Ahobala, Somanātha, Puṇḍarīka Vitthala, etc. but is presumed to be totally silent about Kumbhā's S. Rāj. If the silence was intentional the hereditary unfriendly relations between the Rāthors of Mārwār and the Sisodiyās of Mewār might be conjectured as a possible reason for it.

It is to be hoped that the publication of this work now, five hundred years after its composition, will secure for it the position that it deserves in the classical literature on Indian Saṅgīta Śāstra.

There can be no other befitting end to this Introduction than one in the words of the author himself in the following verses :—

यदि प्राचां ते ते जगति जयिन सन्ति शतशो
निबन्धा संगीते स्वमतिपरिणामावधिकृता ।
तथाप्येतल्लोकेऽभिनवभरतत्वान्नृपतिना
कृतं कुम्भेनेदं जयति तत एवाधिकगुणम् ॥२॥

क्वचित् कैश्चित् (किञ्चित्) कैश्चित् क्वचिदपि यदि स्वस्वधिषणा-
मुपादाय प्रोक्तं विविधमुनिवाक्यानुगमनात् ।
तथाप्येतत्तेभ्य किमपि सविशेषं यदिह ता
परं सम्यङ् न्यस्ता भरतमुनिवाच स्फुटतराः ॥५॥

शश्वद्विश्वजनीनकर्मनिरता सन्मार्गसंदर्शका
सम्मानैकधनार्थिन सहृदया सन्त सुहृन्मानिन ।
तेषामेव निवेशितं पदयुगस्याग्रे मया भक्तित-
स्ते गृह्णन्तु कृपापरा मयि परं वाक्य प्रसूनाञ्जलिम्[1] ॥१३॥

॥ ग्रन्थसमाप्तिपरीक्षणम् ॥

---

1 The modesty exhibited by the author in this verse bears a striking contrast with his sense of self-esteem which is evident elsewhere throughout the work In the introductory section also verses 43 and 44 (p 6) are expressive of a similar attitude of humility on the author's part.

# विषय-सूची

## प्रथमः पाठ्यरत्नकोशः (पृ० १-७०)

### तत्र प्रथमोऽनुक्रमणिकोल्लासः (पृ० १-१५)

#### तत्र कर्तृप्रशंसा नाम प्रथम परीक्षणम् (पृ० १-७)



#### आरम्भसमर्थन नाम द्वितीयं परीक्षणम् (पृ० ८-१०)



#### सगीतस्तुतिर्नाम तृतीय परीक्षणम् (पृ० ११)



#### अनुक्रमणिका नाम चतुर्थ परीक्षणम् (पृ० १२-१५)

# विषय-सूची

## प्रथमः पाठ्यरत्नकोशः (पृ० १-७०)

### तत्र प्रथमोऽनुक्रमणिकोल्लासः (पृ० १-१५)

#### तत्र कर्तृप्रशंसा नाम प्रथमं परीक्षणम् (पृ० १-७)



#### आरम्भसमर्थनं नाम द्वितीयं परीक्षणम् (पृ० ८-१०)

## प्रस्तारपरिपाटी नाम चतुर्थं परीक्षणम् (पृ० ५०, ५१)



## चतुर्थोऽलङ्कारोल्लासः (पृ० ५२-७०)

## तत्र उद्देशो नाम प्रथम परीक्षणम् (पृ० ५२)

विषयानुक्रमः श्लोकाङ्काः

लक्षणं नाम द्वितीयं परीक्षणम् (पृ० ५३-६२)

| विषयानुक्रमः | श्लोकाङ्काः |
|---|---|

लक्षण नाम द्वितीयं परीक्षणम् (पृ० ५३-६२)

# द्वितीयो गीतरत्नकोशः (पृ० ७१-६२३)

## तत्र प्रथमः स्वरोल्लासः (पृ० ७१-२६२)

### तत्र स्थानादि नाम प्रथमं परीक्षणम् (पृ० ७१-१६०)

षड्जग्रामगा जातयः (पृ० १९४-२१०)



मध्यमग्रामगा जातयः (पृ० २१०-३९)

| विषयानुक्रमः | श्लोकाङ्काः |
|---|---|

## द्वितीयो रागोल्लासः ( पृ० २६५-४४० )

### तत्र ग्रामरागादि नाम प्रथमं परीक्षणम् ( पृ० २६५-४०२ )

भाषाङ्गं नाम तृतीयं परीक्षणम् (पृ० ४२३-३६)

## तृतीयः प्रकीर्णकोल्लासः (पृ० ४४१-७०)

### तत्र वाग्गेयकारो नाम प्रथम परीक्षणम् (पृ० ४४१-४६)

विषयानुक्रमः | श्लोकाङ्काः

## शब्दभेदादि नाम द्वितीयं परीक्षणम् (पृ० ४४७-५४)



## गमकनिरूपणं नाम तृतीयं परीक्षणम् (पृ० ४५३,५४)



## स्थायवागो नाम चतुर्थं परीक्षणम् (पृ० ४५५-७०)

## चतुर्थः प्रबन्धोल्लासः (पृ० ४७१-६२३)

### तत्र गीतकं नाम प्रथम परीक्षणम् (पृ० ४७१-५५०)

विषयानुक्रमः श्लोकाङ्काः

## सूडप्रबन्धा नाम द्वितीयं परीक्षणम् (पृ० ५५१-९२)

## आलिक्रमप्रबन्धा नाम तृतीयं परीक्षणम् (पृ० ५९३-६०७)

प्रकीर्णप्रबन्धा नाम चतुर्थं परीक्षणम् (पृ० ६०८-२३)

ॐ

# संगीतराजः

## श्री-राजाधिराजेन्द्र-श्री-कुम्भकर्ण-विरचितः

## प्रथमः पाठ्यरत्नकोशः

## प्रथमोऽनुक्रमणिकोल्लासः

### तत्र कर्तृप्रशंसा नाम प्रथमं परीक्षणम्

श्रीगणेशाय नमः ।[1] श्रीवनचामुण्डायै नमः । श्रीदत्तात्रेयाय नमः । श्रीकामाक्ष्यै नमः । श्रीभरताचार्याय नमः । संगीताधिष्ठातृदेवताभ्यो नमः । स्वस्ति शारदायै नमः ।

उद्यद्भास्वच्छतप्रख्यं[2] महो माहेश्वरं नुमः ।
यत्प्रकाशे प्रकाशन्ते भक्तराजीवराजयः ॥१॥

यो गीतानुगतो(तो)घनत्वपरमो वाद्यावनद्धाननो
[3]नन्दा (न्द्या)द्येकततोवतरूपसुखि(षि)रो नृत्यप्रधानोऽव्ययः ।
भास्वत्सर्वरसैकगम्यमहिमा विभ्राजते योगिभिः
संगीताय शिवाय शुद्धमहसे तस्मै परस्मै नम ॥२॥

निर्मथ्यागमसागरं परिलसद्विज्ञानमन्थाद्रिणा
संगीतामृतमुज्जहार जगतामत्यद्भुतानन्ददम् ।
स्फूर्जन्मोहमहाहिदष्टजनतातापापनुत्यै नम-
स्तस्मै श्रीभरताय दिव्यमुनये स्याच्चन्द्रचूडात्मने ॥३॥

यो वेदाश्चतुरोऽवगाह्य चतुरो यत्नैश्चतुर्भिश्चतु-
र्वर्गाप्त्यै चतुरस्रं(स्र)मुख्यरुचिरं वर्णैश्चतुर्भिर्युतम् ।
विज्ञानैकनिकेतनाय भरताचार्याय राज्ञोचिता-
चाराहं चतुरङ्गनृत्यमदिशत्तस्मै नमो ब्रह्मणे ॥४॥

---

[1] B begins श्रीगणेशाय नम । दत्तात्रेयाय नम । Then the first verse follows.

[2] B. भास्वशत and च् is added above the line before श ।

[3] A. नन्दाद्येकघनोवनरूपसुषिरो । B. नन्दाद्येकततोक्तरूपशिखरो ।

श्रुत्यादिस्वविभूतिभिर्जगदिदं व्याप्यैव नित्यं स्थिता
दुःखोन्मूलनमूलहेतुरखिलं(ल)स्वर्वासिवन्द्यप्रिया ।
ब्रह्मानन्दरसातिशायिसुखदा ब्रह्मादिभिः संस्तुता
विद्या काचन नूतना विजयते संगीतरूपा शिवा ॥५॥

श्रीवत्सदेवाप्तवरप्रसादोऽस्ति व्याघ्रचामीकरवंशसिन्धुः ।
यो बिभ्रदत्युज्ज्वलधामराज-रत्नानि रत्नाकरतां बिभर्ति ॥६॥

तत्रोदितो मन्दिरमिन्दिरायाः श्रीतामराजो द्विजराज आसीत् ।
चित्रं क्षमाभृत्कमलाकरस्य प्रकाशने भासुरवासरेशः ॥७॥

तस्मिंस्ततः पल्लवितः प्रतापैः प्रसूनशोभी यशसां प्रतानैः ।
[1]विनायकप्रत्तघनैः फलाढ्य आमोदनामाजनि कल्पवृक्षः ॥८॥

अमुष्योर्वीभर्तुः प्रतिभटचमूः सङ्गरमुखे
समुल्लासिप्रासप्रमुखधृततत्प्रहरणा ।
कराग्रप्रोद्घु(द्घू)ताचिररुचिसकाशासिफलके-
-ऽनुबिम्बव्याजेन प्रविलयमगादद्भुतमहो ॥९॥

तन्नन्दनो निन्दितचन्दनेन्दुः[2] कुन्दावदातैर्यशसां कदम्बैः ।
श्रीरामनामा प्रबलारिवर्ग-स्वर्गार्गलाभेदनकृन्नृसिंहः[3] ॥१०॥

[4]कल्पान्तोद्धतचण्डवेग[5]-पवनप्रख्यातिविख्यातिभृ-
त्खड्गाग्रप्रविघूर्णनानवरतप्रज्ञापितोद्घट्टनम्[6] ।
क्षत्राकृत्युडुसङ्घमुज्ज्वलयितुं श्रीब्रह्मशैलाम्बर-
व्यापिम्लेच्छघनाभ्रसंयमनधः प्रभ्रंशयामास यः ॥११॥

श्रीपेडराजस्तनयस्तदीयः शुक्लक्षपाजीवितकृत्सदृक्षः ।
अक्षप्रसादाप्तविपक्षपक्षच्छेदैकदाक्ष्यः(दक्षः)क्षणयुक्सपक्षः ॥१२॥

ततोऽवनिं पूर्वजराजगुप्तामुल्लासयन्[7] द्राक् फलिनीं प्रतापैः ।
श्रीह्लाङ्गराजः क्षितिपालपाल(:)पद्मावतीप्राणपतिः समासीत् ॥१३॥

---

[1] A. वनीपेक प्रत्तघनै- । B. वनयक प्रत्तघनै- ।

[2] K. gives the reading 'निन्दितशारदेन्दु' ।

[3] A. क्रन्नृसिंह ।

[4] A. क्ल्पातोद्धत ।

[5] B. चडवेगऽपवन ।

[6] A. प्रज्यापितोद्घट्टनम् । B. प्रज्यापितोद्घटनम् । K. प्रज्ञापितोद्घाटनम् ।

[7] A. B. मुल्लास्यघाद्रीफलिनी । K. has suggested the above reading

निर्दूषणस्यापि सतोऽस्य नूनमिद जना वाच्यमुदाहरन्ति ।
प्रत्यर्थिकीर्तिप्रमदाहृतो यन्मृधे मृधे मे [१]सुजगत्प्रसिद्धम् ॥१४॥

य प्रत्यह तुल्यसुवर्णराशिदानेन देवैश्चकित व्यलोकि ।
कदाचिदाच्छिद्य नु नो निवासगिरिं द्विजेभ्य खलु दास्यतीति ॥१५॥

अमु गयाया जगतीविमुक्तिहेतोर्विमुक्तेर्यवनानुरोधात् ।
शशासुरस्यान्वयिन परेऽपि जेष्यन्ति देवा यवनानतिद्राक्[२] ॥१६॥

ततस्तामराजोऽष्टदिक्पानुभावो भुवो भारजातस्य वोढाविरासीत् ।
जगन्मङ्गलश्रीशसेवानुभावाज्जगन्मङ्गल य जगुर्जन्मतोऽपि ॥१७॥

दिग्दन्तावलदन्तकान्तिहरणप्रावीण्यवित्कीर्तिना[३]
तत्तद्राजगुणैकदेशमिलनप्रेप्सेप्टसन्मूर्तिना ।
के वान्ये सदृशा भवन्तु गुणिनानेन क्षमापालका
ग्रामीणीकृतराजकेन[४] कवय किं साम्पत [५] श्राम्यथ ॥१८॥

यस्मिन् शासति काश्यपीं नयपरे श्रीरामचन्द्रो नु किं
लोकोक्ति परयोपिदीक्षणकृतभ्रातृत्वमेतीत्ययम् ।
किं सत्सत्यतया त्रिशकुतनय श्रीजामदग्न्यो नु किं
प्रत्यर्थि(प्र)नरेश्वरान्तकरण शार्दूलविक्रीडितम् ॥१९॥

पूर्वराजगुणान् सर्वानेकत्रस्थान् दिदृक्षुणा ।
निर्मितो विधिना तोय (सोऽय) सर्वराजगुणातिग ॥२०॥

कृतेऽमुना कृते सम्यक् कलिना लुप्तकेलिना ।
न कालोऽस्य चिर स्थातुमिति स्वर्गातिथि कृत ॥२१॥

ततस्त त विनिर्जेतुकाम( )काम इवापर ।
कालसेनोऽस्ति तत्पुत्रो राजा साम्राज्यभाजनम् ॥२२॥

गर्जन्मदोत्सिक्तगजोर्मिमालतौरुष्कसैन्यार्णवमध्यमग्नाम्[६] ।
श्रीब्रह्मशैलावनिमुद्धरन्त वराहमाद्य यमिह स्तुवन्ति ॥२३।

अपूर्वा दूतिका काचित् खड्गवल्यस्य भूपते ।
अनम्रान्[७] हि भिया चित्र तत्परान् कुरुते परान् ॥२४॥

---

[१] B जगत्प्रसिद्धम् ।
[२] K suggests यवनानितिद्राक् which is also a possible reading
[३] A प्राविण्यवित्कीर्तिना ।
[४] B ग्रामणीकृतराजकेन ।
[५] B शाम्यत ।
[६] B तौरप्क etc ।
[७] A अनमान हि भियया ।

अपकुर्वन्नयं चित्रमुपकर्त्ता रिपुष्वपि ।
त्याजयन् पूर्ववनिताः संयोजयति तान् भिया ॥२५॥

मत्सैन्यैर्लुट्यमानेऽस्मिन् गौर्जरे मालवोऽपि किम् ।
दहत्यस्तं[१] पुरं शश्वन्-निश्शेषीकृतवानमुम् ॥२६॥

गुर्जराधिपतिदन्तवक्त्रतः श्रुत(त्त)दन्तनिवहस्य निभेन ।
चित्रमेष भुवने निजकीर्त्तेर्बीजवापनविधिं विदधाति ॥२७॥

यः पुराणतिलचर्वणमन्दीभूतकोष्ठघहुतभुक्सुरसङ्घान् ।
प्रेष्ठनूत्नयवनाहुतिदीव्यत्तन्मुखान्[२] वितनुते रणयज्ञे ॥२८॥

यः[३] सुरान् सुखयतीह गुग्गुलु[४](स्निग्ध)धूपनिवहेन धूपितान् ।
दह्यमानरिपुराजवेश्मगा(न्) गुर्वमेयघनसारचन्दनैः ॥२९॥

चैतन्यं यदि संश्रयेत् सुरतरुः स्वर्गौः[५] पशुत्वं त्यजे-
च्चिन्ताश्मापि सुरत्वमेति फणिनामीशः सुरेज्यो भवेत् ।
पुंस्त्वं वागधिदेवता यदि [६]भजेदीशो विवादातिग-
श्चेत्तत्तद्गुणसाम्यतस्तदुपमां श्रीकालसेनो भजेत् ॥३०॥

स राजराजः करदीकृतान्यनरेश्वरः शासितदृप्तराजः ।
तनोति पुष्टचै शिशयोः शिवात्मा संगीतकं दिक्पतिगीतकीर्त्तिः ॥३१॥

दृ(द्र)ष्टव्यं कृतकृत्यतामुपगत(ते)नेदं विधातुं तया-
धीत्या[७]-शेषमहागमान् वसुमतीं कृत्वा वशे चाखिलाम् ।
दानौघैः[८] परितर्पयन् द्विजवरानर्चन् सुपर्वव्रजं
कामं याचककामदो वितनुते संगीतमुर्वीश्वरः ॥३२।

---

[१] A. B इत्यारतल्पुर । K suggests the above reading, but is not certain

[२] A. तन्मुखे ।

[३] B य सुखान् ।

[४] A वल्प्त for स्निग्ध which is suggested by K. B omits this word.

[५] B स्वर्गे । B divides this verse into two verses numbering 30 and 31.

[६] B भुजेदीशो ।

[७] A. धीत्योशेष ।

[८] B. दानोघे. ।

केचिद्दानैकनिष्ठा कति च (वितरणे[1]) लम्पटा केचिद्वृक्षा[2]
केचित् धार्मिकताना क्वचन कतिपयेऽगण्यनैपुण्यपण्या ।
श्रीमान् कालाख्यसेनो नृपतिगुणगणार्णोधिरीशप्रसत्त्यै
सगीत तद्रसाना जनिरिति तनुते विश्वविश्वोपकृत्यै ॥३३॥

दाक्ष्य साक्षादिहास्ति व्यवहृतिरतुला राजकार्यावधार्या
नार्याश्चेष्टात्र चेष्टा नयविनयनयो सप्ततिद्वे कलाश्च ।
औदार्यस्यै(र्य)धैर्याकरनिधिरखिलविघ(?)[3]ज्ञानविज्ञानवेत्ता
श्रीमत्कालाख्यसेनो नृप इति तनुतेऽदभ्रसन्दर्भमत्र[4] ॥३४॥

काम सन्ति पर शता क्षितिभुजो भूता परे भाविन
स्तैस्तै स्वाचरणक्रमै स्वसमयप्रोद्यत्प्रभाभास्करा ।
जात कोऽप्यतुलप्रभावविभव(व)प्राग्भारविश्वभरो
जीयान्निर्जितपूर्वराजचरित श्रीकालसेनो विभु ॥३५॥

य पूर्व भरताय नाट्यनिगम पद्मोदभव प्रोक्तित
साङ्ग शम्भुरदीदृशत् स समयाद्गुतसन्नकल्पोऽभवत् ।
लोकाना हितकाम्यया स भगवान् श्रीकालसेनक्षमा-
धीशव्याजमुपेत्य वीतविशय त वक्ति प्र[5](?) भूयो वशी ॥३६॥

ग्रन्थान सम्यगधीत्य बुद्धिविषय नीत्वानुभूयार्थत
कृत्वा दर्शनगोचरानभिनयैर्नानाभिनेयाश्रितै ।
तान् शिष्यप्रतिशिष्यशिष्य(क्ष)णपथ नेतु यथावस्थितान्
श्रीमत्कालुजिभूपति प्रयतते स्वोपज्ञसन्दर्भत ॥३७॥

य पूर्व चतुराननेन चतुर सस्मृत्य वेदास्तत
स्ततत्रैवर्णिकता विधानपरता चावेक्ष्य सम्यक स्थित[6] ।
श्रीमत्कालुजिभूपति शिवपर शास्ताखिलक्ष्माभृता
स[7](बध्नाति हि) सावर्णिकमिम वेद विद्यामग्रणी ॥३८॥

---

[1] A तरणभुलपटा । B तरण लपटा with space left blank fc a letter after ण। वितरण suggested by K

[2] A केचिदक्षा ।

[3] विघ does not fit in the metre

[4] B दभ्रसदर्भमत्र ।

[5] प्र does not fit in the metre

[6] A स्मृत ।

[7] A B सद् then space for two letters left blank, followe by तकि सार्ववर्णिकमिम In A there is a horizontal line in the blanl space The above reading is suggested by K

यः श्रुत्वा[1] भरतं चतुर्भिरखिलैर्भाष्यैश्च रत्नाकरं
सोपायं बहुशो विलोक्य निखिलाम्नाट्यागमान् वीक्ष्य च ।
गौरीनन्दिमते मतङ्गशिवसङ्गीते सशार्दूलके
दृष्ट्वा दत्तिलदुर्गशक्तिभणितीस्ता नारदोक्तीरपि ॥३९॥

वायुस्वातिमहेन्द्रकश्यपमरुत्सून्वर्जुनाद्यैः कृतान्
रम्भातुम्बुर(रु)कम्बलाश्वतररक्षोराजसन्दर्भितान् ।
श्रीसोमेश्वरभोजराजरचितान् ग्रन्थान् विलोक्य स्वमुं
तत्सारेण समुच्चितेन कुरुते श्रीकालसेनो नृपः ॥४०॥

संगीतरत्नानि गवेषितुं वो यद्यस्ति काङ्क्षा सुधियस्तदानीम् ।
तेषां प्रदानेऽतितरं प्रवीणः संगीतराजः क्रियतां सुसेव्यः ॥४१॥

मान्यज्ञानमदान्धराजसदने[2] शास्त्रौघकोशान्तरे
गुप्तान्याप्तिपयां(यं)न ति(यान्ति)सुधियः संगीतरत्नान्यहो ।
तेषां चिन्तितमात्रमाप्तुमय चेदिच्छास्ति तत् सेव्यतां
श्रीमत्कालुजिभूभुजा[3] विर(चितः) संगीतराजोऽन्वहम् ॥४२॥

भरतमतमतीवदुर्गमं यन्मतिविमतेरवगाहितुं प्रवृत्तः ।
सदखिलमपि मे महानुभावाः स्खलितमपि क्षमयोररीकुरुध्वम्[4] ॥४३॥

यस्मात्[5] स्थावरजङ्गमात्मजगतो वृत्तानुकारादिदम्
तत्तापेक्षमतोऽतिमात्रगहनं दुर्ज्ञेयमस्मादृशैः ।
किन्तु स्वानुभवाय बालिशतया सन्दर्भितं यन्मया
तत् सर्वत्र समानदृष्ट्य इदं संशोधयन्तूत्तमाः ॥४४॥

---

[1] A. शृत्वा ।

[2] A. मा then something written and deleted by putting two small vertical strokes above; the letter is not at all legible; then न्य, here the line ends and the next line begins with a letter which is lost due to a damage in the paper; it ends in ज्ञा and is followed by न; the word is evidently मान्यज्ञानमदान्ध । B. मान्य then space for two letters blank मदान्ध follows. (K.) In spite of this note K. gives the reading मान्यरत्न in the text.

B. divides this verse (No. 42) into two verses.

[3] B. भूभुजा; then space for two letters blank and चेत. follows; evidently an obvious damage in the letter चि *in A must* have been there when B was transcribed. (K.)

[4] B. क्षमयोरीकुरुध्वम् ।

[5] B. यस्मात्स्था स्थावर ।

दुस्तरं भरताम्भोधिं[1] तरीतुं तरिरेकिका ।
जडान् प्रवचनं(नान्)कर्तुं यद्रामानुकृतिः सताम् ॥४५॥

न प्रार्थयेऽहं सुधियोऽप्युक्तयुक्तकृतिं प्रति ।
स्वतस्त उपकुर्वन्ति यत्त(त)श्चन्दनवृत्तयः ॥४६॥

अथवा सर्वभावेन श्रये सहृदयाम्य(न् य) तः ।
ते स्वभावेन कुर्वन्ति श्रयन्तं सममात्मना ॥४७॥

ननु सति गणनातोऽगोचरे नाट्यशास्त्रे
किमिह तव नवोद्यत्तद्विधानप्रयासे ।
इति खलु न नियोज्यं तत्र तत्त्वानिरुक्ते-
र्वदति खनिमनुष्यात्(न्)कौस्तुभः किं मणीन्द्रः ॥४८॥

विचार्यमाणमत्रैव तत्त्वं ग्रन्थान्तरे न[2] तत् ।
मथ्यमाने हि दुग्धाब्धावमृतं न मरुस्थले ॥४९॥

यत्किचिद्भरतादिभिर्निजनिजे ग्रन्थेऽस्ति सन्दर्भितं
यच्चान्यद्विवृतं विशेषविदुषां वृन्दैः स्ववृत्तिष्वपि ।
यद्य(न्य)स्तं क्वचिदेव किञ्चिदपि चातज्ज्ञैः स्वमत्यं(त्या)वृतं
सर्वं चर्वितचर्वणेन रहितं तदत्रिवहालोक्यताम् ॥५०॥

क्वचिल्लक्ष्म-परीक्षार्थे(र्थं)मुक्तस्यातिशयाय वा ।
सम्बन्धस्मारणार्थं वा पुनरुक्तिर्न दुष्यति ॥५१॥

इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण गुर्जराम्भोधिनाय-*मन्यमहीधरेण त्रिसंध्याक्षेत्रसमुद्रसभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन* प्ररूढपत्र-यवनदवदहनदावानलेन प्रत्यर्थिपृथ्वीपतितिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावै-धव्यदीक्षादानदक्षोद्दण्डकोदण्डदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीब्रह्मादिविभुना[3] *अभ्युष्टतमनरेश्वरेण* गजनरतुरङ्गाधीशराजत्रितयतोडरमल्लेन वेद*मार्गस्थापनचतुराननेन* याचककल्पनाकल्पद्रुमेण वसुन्धरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिंकरेण भवानीपतिप्रसादाप्तवरप्रसादेन[4] राजगुर्वादिबिरुदावलीविराजमानेन राजाधिराजश्रीकालसेनेन विरचिते सङ्गीतराजे पाठ्यरत्नकोशे[5] अनुक्रमणिकोल्लासे *कर्तृप्रशंसा नाम प्रथमं परीक्षणं* समाप्ति समगात् ॥

॥ इति विततमतीनामभिमतसिद्धिरस्तु ॥

---

[1] B. भरताभोधिं । Then an ambiguous mark above the first भ ।

[2] A. B. and K, *ग्रन्थान्तरेण तत् ।*

[3] B. ब्रह्मादिविभुना ।

[4] B. प्रसादाप्ताप्रसादवरप्रसादेन ।

[5] B. *रत्नाकरे ।*

# आरम्भसमर्थनं नाम द्वितीयं परीक्षणम् ।

आरम्भणीयं[1] ननु शास्त्रमेतन्माङ्गल्यरूपं जगतोऽखिलस्य ।
आनन्ददं तुष्टिकरं परं च सुरासुराणां भुवि भूपतीनाम् ॥१॥

नारम्भणीयं[2] ननु धर्मशास्त्रविरोधतो नाटकशास्त्रमेतत् ।
प्रयोजनाभावतया प्रवृत्तिः प्रेक्षावतामत्र न[3] जाघटीति ॥२॥

न शास्त्रतामुष्य तु शङ्कनीया विना प्रवृत्ती(त्ति) भरतोपदेशात् ।
महाजनानामपरिग्रहाच्च मूलप्रमाणप्रविहाणतश्च ॥३॥

नो धर्माय विधायकोक्तिविरहाना(न्ना)र्थाय तत्कुत्सना-
न्नो कामाय चिरादनन्यमनसोर्यूनोः स पुंभिः स्मृतः ।
ज्ञानादेव तु सावधारणवचोगुम्फैरिति ज्ञानतो
नान्यस्मादिह मुक्तिरित्यनुचितं संगीतसंकीर्तनम् ॥४॥

ऊचुः प्राग्विद एकजातिविषयं धर्मं त्वमुं नो ततः
प्रायोऽयं विषयो द्विजातिजनुषां धर्मोऽस्तु गानादिकः ।
गाने प्रत्युत तन्निषेधवचनान्युक्तानि मन्वादिभि-
स्तत्प्रामाण्यविचारचारुमतिभिर्माध्यस्थ्यमालम्ब्यताम्[4] ॥५॥

किञ्चात्र स्मरणं प्रमाणपदवीमाटीकते ब्रूतत (ब्रूत चेत्[5])
तन्मूलश्रुतिबाधितं क्वचन किं निमू(र्मू)लमुन्मीलति ।
इत्याद्युक्तनयेन धातिनिपुणं संरुध्यमानं स्थिरं
शास्त्रं नैव विचारचारुरतामारोहतीह स्फुटम् ॥६॥

ब्रूमोऽत्र प्रतिपक्षपक्षविसरत्तत्तद्दोषोल्लस-
द्वाचोयुक्तिपिशाचिकाभ्रमभरप्रोद्धूननध्वंसकृत् ।
तन्त्रं तु प्रसरीसरीति सरणिः सत्पक्षरक्षागिरा-
मङ्गीकारिधुरीणबालुकपरा[6]-वागीशवाक्योत्करः ॥७॥

नारम्भणीयं यदवोचदेतत् वर्णिपङ्क्तिपरिचिन्त्य विचारचारु ।
तदत्र चित्रं तदहो यदस्य जगत्प्रसिद्धेऽप्यपलापतापः ॥८॥

---

[1] B. आरम्भणीयमनु ।

[2] B. नारम्भणीयमनु ।

[3] B. omits न ।

[4] B. मालम्बमालम्बताम् ।

[5] K. suggests this reading

[6] B. बालुकपरा ।

यद्धर्मशास्त्रेण विरुद्धमेतद्ब्रुवत तदज्ञानविजृम्भित[1] ते ।
निदानता धर्मतरोरमुष्य [2]मन्वादिभिर्यद्गदिताभियुक्तै ॥९॥[3]

उपवीणयतो(ता)मखद्विप स च योगिप्रवरोऽभ्यभाषत ।
अमृताभरणस्य[4] तद्वच कथमावि (प्)कुरुते न मानताम् ॥१०॥

नि (ष्)प्रयोजनता योक्ताभियुक्तैरस्य सा कथम् ।
सुखाप्तेर्दु खहानेश्च[5] मुख्यत्वे सति नो वृथा ॥११॥

ब्रह्माद्वयानन्दरसातिरेकसहोदरास्वादसुखानुभूते ।
परात्मतुष्टि परमास्ति काचित् सा चेत् स्वय नो मनुषे[6] मनीषिन् ॥१२॥

राजेवात्रोपदेश्यो रघुपतिकुणपाधीशवृत्तोक्त्यनुक्त्या-
चारप्राप्तप्रकर्षेतरफलविभवादेयहेयाप्ततत्त्व ।
अर्थो धर्मानुषङ्गात(त्त)दनुरपि(भि)मतो रङ्गकोत्तीर्णनर्त-
कयन्वेषात्तत्प्रवृत्त्यै[7] न हि भवति कथ शास्त्रमेतन्निवृत्त्यै ॥१३॥

तस्मादेव तु शास्त्रतास्य नियता [8]तच्छासनाशसना-
द्ब्रह्माद्याप्तपरिग्रहाच्च न तु भो नो मूलमाकाक्षति ।
वेदत्वादिह निर्मितेर्निगमिता धातु प्रमाणीकृता
तत्सारेण तु सार्ववर्णिकममु निर्मित्सत पञ्चमम् ॥१४॥

किं रूपवेद[9] एवाय साम्न· सामैव वा पुन ।
सामाख्या गीतिषु प्रोक्तेत्यतोऽस्माच्च प्रमाणता ॥१५॥

वेदेनाप्यात्ममूलत्वादिदमेव ह्यपेक्षितम् ।
स्वरजातमुदाराद्यस्वि(स्मि)न्नायत्त यत स्मृतम् ॥१६॥

तथाहि नादधर्मोऽयमुदात्तादि स्मृत स च ।
नाद प्राणाग्निसयोगाज्जात [10]श्रुत्यादिभेदभाक्[11] ॥१७॥

श्रुतिभ्य·[12] स्यु स्वरा· षड्जर्षभगान्धारमध्यमा ।
पञ्चमो धैवतश्चाथ निषाद इति तेषु च ॥१८॥

---

[1] A B विजृभन ।
[2] A. मन्वादिभियद्गदिता ।
[3] A B. combine the 8th and 9th verses.
[4] A. and B अमृता(B ता)भरण सुज्ञतद्वच । K. suggests the above reading.
[5] A. omits विसर्ग of दु ख ।
[6] B. मानुषे ।
[7] B कयन्वेषातत्प्रवृत्यै
[8] तछासनाशसना
[9] K. suggests वेदरूप
[10] A. श्रुत्यादि
[11] B भेदभाग्
[12] B श्रुतिभ्य

उदात्ता[1] समपा प्रोक्ता स्वरितौ च रिधौ स्वरौ ।
अनुदात्तौ गनी तस्माज्जगतोऽप्यस्य हेतुता[2] ॥१९॥

अङ्गत्वेनाथवा स्यात्[3] (तत्) प्रामाण्य तत्त्वमृत्विजाम् ।
चार्याध्य(?)क्रतया होमविधानात् खटकेन[4] च ॥२०॥

मानान्तरानधिगतेगा(र्गा)थतीति विधि स्फुट ।
औद्गात्रस्य विधानाच्च त्रैकाल्ये नाट्यदर्शनात् ॥२१॥

अश्वमेधक्रतौ गानविधानमपि दृश्यते ।
ब्राह्मणस्य दिवारात्रौ राजन्यस्य च शासनात्[5] ॥२२॥

नाराशस्यनुगामित्व यन्निषेधस्य तत्र हि ।
नृदेवो न निषेध्येत नृमात्रस्य निषेधनात् ॥२३॥

शाम्येद्यथाहिदष्टस्य विषेण विषमुल्बणम् ।
तथास्मिन्[6] विषयाकाङ्क्षा विषयासक्तचेतस ॥२४॥

जीमूतवाहनदधीचिमुखाधिपाना नाट्ये विलोक्य चरित स्वभिनीयमानम् ।
प्राणैरपि प्रयतते[7] न हित परस्य कर्तुं मन खलु नरस्य लघीयसोऽपि ॥२५॥

न नृत्येदिति यन्नृत्यनिषेध कामवर्गत ।
तद्ब्रह्मचारिविषये वचन पर्यवस्यति ॥२६॥

द्विजातिविषयो गाननिषेधो यत्र कुत्रचित् ।
तद्विदा यदपात्रत्व तत्[8] तद्विद्योपजीविनाम् ॥२७॥

अस्येतिहासवदय समय प्रदिष्टोऽनध्यायरूप ऋषिणा निगमानुरोधात् ।
आसादितादिवरगीतकसप्रयोगाद्धर्मार्थवाप्तिरुदितेह परा मुनीन्द्रैः ॥२८॥

प्रत्यक्षादिप्रमाणानि यथायथमिहार्थत ।
अष्टावपि विलोक्यानि पुराण इव सूरिभि ॥२९॥

अप्रस्तुतत्वात्तल्लक्ष्म न वय व्याहरामहे ।
प्राकट्यमुपयास्यन्ति प्रयोगादेव तानि यत् ॥३०॥

इति श्रीराजाधिराजमहेन्द्रश्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे अनुक्रमणिकोल्लासे आरम्भसमर्थन द्वितीयं परीक्षणम् ।

---

[1] cf नारदीयशिक्षा १।८।८

[2] B. हेतुता।

[3] A. अगत्येनाथवास्यात्तु ।

[4] K suggests कण्ठकेन ।

[5] B combines two verses viz 22 and 23 into one

[6] B तथास्मिन्निविषया।

[7] K. Suggests प्रयतते(ऽभि)हित परस्य ।

[8] B. omits तत् ।

## संगीतस्तुतिर्नाम तृतीयं परीक्षणम्

सिद्धप्रमाणभावस्य संगीतस्य निरूप्यते ।
स्वरूपस्य विचारोऽय कालसेनेन भूभुजा ॥१॥

ऐक्यं जीवपरात्मनोर्दिशति यद्वालेश्वरो संमदं
तुल्यं लम्भय(द)द्भुतं[१] विगलिताशेषेन्द्रियार्थग्रहौ[२] ।
मायान्तःपतितं म(य)त्यविरतं संमोहयेन्मायिनं
लोकातीतचमत्कृतं[3] श्रुतिगतं गीतं परं तत् स्तुमः ॥२॥

जीवातुर्मदिनां प्रियाविरहिणां ध्येयं परं योगिनां
दीनानामतिदुःखिनामपि नृणां विश्रांतिभूमिः परा ।
निःस्वानां परशेवधिर्नवनवो भोगोत्करो भोगिनां
गीतं किञ्चिदमेयरूपमहिम — प्राग्भारमुज्जृम्भते ॥३॥

गीतमेव वशीकारकार्मणं वशिनामपि ।
त्यक्तान्यकार्यसम्भारा मुनयो यदुपासते ॥४॥

स्वर्गतं पुनरानेतुं शक्तिर्यस्य जगत्त्रये ।
अगोचरः कविगिरां तद्गीतं केन वर्ण्यते ॥५॥

इति राजाधिराजमहीमहेन्द्रश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे अनुक्रमणिकोल्लासे संगीतस्तुतिर्नाम तृतीयं परीक्षणम् ।

---

[१] A. B लभययद्भुत ।

[२] A. B. विगलिताशेषेन्द्रयार्यग्रहो ।

[3] A. चमत्क, then a letter written and scored; तिश्रुतिगत follows.

# अनुक्रमणिका नाम चतुर्थं परीक्षणम्

यस्तु निर्वचनं कर्तुमवतीर्णोस्तु(ऽस्ति)भूतले।
तेन श्रीकालसेनेन क्रियते गीतनिर्णयः ॥१॥

सम्यग्गीतं तु संगीतं गीतादित्रितयं तु वा।
समष्टिव्यष्टिभावेन शब्देनानेन गीयते ॥२॥

त्रिविक्रमक्रमासक्तचेतसा तामराजिना।
उपक्रमः क्रमं तस्य विधातुं संविधीयते ॥३॥

पाठ्यं नाट्यतनुः परेति परमादृग्वेदतः सामतो
गीतं गीतमनोहराल् कमलभूरादाय वै सृष्टवान्।
नैपथ्याभिनयौ यजुर्निगमतोऽथाथर्वतस्तान् रसान्
संगीतस्थितपाठ्यगीतविवरे वाद्यं पुनस्तद्द्वयात् ॥

पाठ्यं वाक्यात्मकं वाक्यं सर्वाभिनयमूर्द्धनि।
भरतेनाभिषिक्तं तद्वाचि [1]यत्नं विधित्सता ॥५॥

प्रबोधस्य प्रबन्धाना विशेषादस्य हेतुता।
आदावतो नरेन्द्रेण सर्वस्यैतद्विविच्यते ॥६॥

संगीतराजे तत्र स्यू रत्नकोशाः क्रमादमी।
पाठ्यगीतवाद्यनृत्यरसाह्वास्तत्र च क्रमात् ॥७॥

प्रतिरत्नकोशमुक्ता उल्लासा वेदसम्मिताः[2]।
परीक्षणानि चत्वारि प्रत्येकं तेषु च क्रमात् ॥८॥

अनुक्रमणिका चाथ स्वरूपं पदवाक्ययोः।
छन्दांसि भूषणानीह पाठ्योल्लासाः स्मृता अमी ॥९॥

स्वरोत्पत्तिस्तथा रागाः प्रकीर्णकमथापि[3] च।
प्रबंधाख्यश्च ते गीतरत्नकोशे द्वितीयके ॥१०

ततं च सुषि(षि)रं चाथ घनं चैवावनद्धकम्।
उल्लासाः क्रमतो वाद्यरत्नकोशे प्रकीर्त्तिताः ॥११॥

अंगसंज्ञस्तथा चारीसंज्ञकः करणाभिधः।
प्रकीर्णकाभिधो नृत्यरत्नकोशे क्रमान्मताः ॥१२॥

रसलक्ष्मविभावादिरनुभावाभिधस्तथा।
ततः सञ्चारिसंज्ञश्च रत्नकोशे रसाभिधे ॥१३॥

---

[1] A. B. यत्तं।

[2] B. सम्मताः।

[3] B. प्रकीर्णमथापि।

अनुक्रमणिकोल्लासे कर्तृशंसनमादित ।
आरम्भसार्थता चेति सगीतस्य स्तुतिस्तत ॥१४॥

अनुक्रमणिका चेति चतुर्थं परिकीर्त्तितम् ।
पदलक्षणमेतस्मिन् वाक्यलक्षणमेव च ॥१५॥

संज्ञा च परिभाषा चेत्युल्लासे पदनामनि ।
अनुष्टुप्शासन वृत्तार्थयो[१] शासनमेव च ॥१६॥

प्रस्तारपरिपाटी च छन्दउल्लास ईरिता ।
उद्देशो लक्षणानीह ततोऽलङ्कृतय पुन ॥१७॥

गुणदोषाश्च तस्यैनोल्लासेऽलङ्कारसंज्ञके ।
स्थानश्रुतिस्वरग्राममूर्च्छनातानसञ्ज्ञका ॥१८॥

साधारणं तथा वर्णा सालङ्काराश्च जातय ।
दश स्वरगते भेदाश्चतुर्भिश्च परीक्षणं ॥१९॥

ग्रामरागादिरागाङ्गोपाङ्गे भाषाङ्गनिर्णय ।
क्रियागा(ङ्गा)नि च[२] वर्ण्यन्ते रागोल्लासे क्रमादिति ॥२०॥

वाग्गेयकारकथन शब्दभेदाश्च तत्त्वत ।
गमकाश्च तथा स्थाया वर्णनीया प्रकीर्णके ॥२१॥

गीतकानि तथा सूडत्रयमालिक्रमस्थिता ।
प्रकीर्णका[३] प्रबधाश्च प्रबधोल्लासगोचरा ॥२२॥

ततोल्लास एकतन्त्रीपञ्चक नकुलादित ।
मत्तकोकिलिका चाथ किन्नरी परिकीर्त्यते ॥२३॥

सौखि(षि)रे[४] वेणुनिर्माण स्वरोत्पत्तिस्तदाश्रिता[५] ।
गुण(णा) दोषाश्च पात्रादि साङ्गोपाङ्ग[६] निरूप्यते ॥२४॥

मार्गतालास्तथा देशीतालास्तत्प्रत्यया अपि ।
काललक्षणमेतस्मिन् घनोल्लासे समाप्यते ॥२५॥

अवनद्धसमुल्लासे वाद्य पुष्करसञ्ज्ञकम् ।
पाटा वाद्यप्रबधाश्च पटहादिर्निगद्यते ॥२६॥

अङ्गप्रत्यङ्गभणितिरुपाङ्गाना[७] क्रिया तथा ।
आहार्याभिनयश्चैवमङ्गोल्लासे प्रकाश्यते ॥२७॥

---

[१] B वृत्तायशो ।
[२] B इच ।
[३] B. प्रकीर्णकाश्च ।
[४] B सोखरे ।
[५] A B श्रिता ।
[६] A B सागोपाग ।
[७] B रूपकाना

स्थानकानि तथा चार्यः शुद्धदेशीविभेदतः ।
मण्डलानि तद्वत्यानि चारिकोल्लासके क्रमात् ॥२८॥

करणानि तथा शुद्धदेशीभेदविभेदतः ।
अङ्गहारा रेचकाश्च करणोल्लास ईरिताः ॥२९॥

वृत्तयश्च तथा न्याया लास्याङ्गानि च तद्विदः ।
पात्रलक्षणमित्यस्मिन् प्रकीर्णोल्लास उच्यते ॥३०॥

सभापतिः सभायाश्च निवेशो रसकीर्तनम् ।
रसस्वरूपकथनं[1] रसतत्त्वस्य च वर्णनम् ॥३१॥

रसाश्रयाभिधं चान्यद्रसलक्षणसंज्ञकम् ।
परीक्षणानि चत्वारि रसोल्लासे तु रस्यते ॥३२॥

नायकानां प्रकथनं नायिकालक्षणं तथा ।
चेष्टादीनां विभावानां विभावतमतः परम् ॥३३॥

उद्दीपनविभावाख्यं विभावोल्लासके क्रमात् ।
अनुभावास्त्ववस्थायाः स्वरूपं सात्त्विकाः पुनः ॥३४॥

प्रवासाद्यनुभावाश्चानुभावोल्लासगोचराः ।
निर्वेदादिप्रतिरसं भावावस्थानसूचकम् ॥३५॥

रससङ्करनामाद्यं[2] ग्रन्थस्य च समापनम् ।
परीक्षणानि संचारिसंज्ञकोल्लासके क्रमात् ॥३६॥

येनानुक्रमतः शकान् विशकलीकर्तुं रणप्राङ्गणे
तत्तद्गुर्जरदाक्षिणात्यनरपा[3] नीता(:)सद्दुर्गा वशम् ।
दुर्गेशा[4] महिषाद्रिणा निजसमुन्नत्या स्वया[5] संपदा
सार्कं तेन चिरादनुक्रमणिकोल्लासः समुल्लासितः ॥३७॥

इति श्रीजगदीश्वरवनदेवनिजगणेन [6]जगदम्बिकाकामाक्षीचरणकिङ्करेण श्रीकामेश्वरीगिरिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसर्वाद्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्त्तिपूरपराजिताचलनायकेन[7] संगमतीर[8]-दुर्गोद्धरणोद्धृत-

---

[1] A. रसतत्त्वस्य च वर्णनम् B. there is some letter started and left off, then follows रसत्वगस्य वर्णनम्, K. suggests the above reading.

[2] B रसशाकर

[3] B. नगरी

[4] B. दुर्गेशा

[5] K reads स्वय

[6] B. वामाक्षा

[7] B. पुरपराजित etc.   [8] B. नीर

सकलमण्डलाधीश्वरेण दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिपमेवजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण[1] अष्टादशगिरिशिखरपरिवारिताञ्जनादि[2]-गिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनर्धर्षितमहोरगपुरेण[3] श्रीवनदेवस्वामिप्रसादरचनापरमेश्वरेण त्र्यम्बकेश्वरसन्निधिकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभीमस्वर्गतायथार्थीकरणरचितचारुयशेन श्रीकामाक्षा[4]-गिरिनवीननिर्मितिपराजितसुमेरुणा[5] श्रीमहिपाचलोपरि श्रीहरिशरणरचिताचलदुर्गेण[6] अभिनवभरताचार्येण वीणावादनप्रवीणेन-यवनकुलाकालकालरात्रिरूपेण त्रिसंध्याक्षेत्रसमुद्भसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजराजश्रीराजमानमृगाङ्कतामराजनंदनेन महाराज्ञी[7]सौभाग्यवती[8]श्रीजसमाम्बिकाहृदयनंदनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवतीश्रीलघुमादेवीहृदयाधिनाथेन राजाधिराजश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां[9] पाठ्यरत्नकोशे अनुक्रमणिकोल्लासे अनुक्रमणिका नाम चतुर्थं परीक्षणम् ।

उल्लासस्य(श्च) प्रथमः [10]समाप्तिमगात् ॥

इति विततमतीनामभिमत[11]-सिद्धिरस्तु ॥

---

[1] B. Omits परितोषितशाकम्भरी

[2] A. B. परिवारिताञ्जनाद्रि and omit गिरि K. reads as above.

[3] B. धर्षिता

[4] K. reads कामाक्षा

[5] B. पराजिति

[6] B. दुर्गेण

[7] K. adds श्री

[8] K. Omits श्री before जसमाम्बिका

[9] A. संगीतमिमासाया

[10] B. समाप्ति समगादिति

[11] B. Omits मत

# द्वितीयः पदोल्लासः

## पदं नाम प्रथमं परीक्षणम्

अध्यासिताया निजपूर्वपुंभिः पदं सरीसर्त्ति न यः कदाचित् ।
विशुद्धिमत्याः[1] सरणेः स राजा पदं चरीकर्त्ति विचारवर्त्ति (र्त्ती) ॥१॥

पाठ्यं तु द्विविधं ज्ञेयं संस्कृतं प्राकृतं तथा ।
यथावदनयोरङ्गान्याख्यामः पाठ्यसिद्धये ॥२॥

नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृतः ।
समासाश्च[2] स्वराश्चैव सन्धयोऽस्य विभक्तयः ॥३॥

व्यञ्जनान्यङ्गकैरेतैर्नानाधातूपबृंहितम्[3] ।
प्रयोगार्हं[4] प्रविज्ञेयं संस्कृतं पाठ्यमित्यदः ॥४॥

नादादिहेतुको यः स्यादक्षराणां समुच्चयः ।
आनुपूर्वीसमुल्लेखः स शब्दव्यपदेशभाक् ॥५॥

साध्यसाधनसंयोगसामानाधिकरण्यकाः ।
पदार्थप्रतिपत्तिश्च तद्गुणाः पञ्च कीर्त्तिताः ॥६॥

अधिष्ठानं स्वभावश्च गुणाः कार्यान्वयस्तथा ।
तादात्म्यं चेति शब्दस्य विधिः पञ्चविधः स्मृतः ॥७॥

तस्य सप्तविधं प्राहुरधिष्ठानं पुरातनाः ।
मुख्यतादिस्वभावोऽस्य साध्यादिश्च गुणो मतः[5] ॥८॥

प्रसिद्धसाध्यसंबन्धः कार्यान्वय इतीरितः ।
शब्दस्यार्थस्वभावो यस्तादात्म्यं तत्प्रकीर्त्तितम् ॥९॥

प्रकृतिप्रत्ययासत्तौ पदमर्थोपलंभने ।
तत्राभिधत्ते यो मुख्यमर्थं मुख्यः[6] स उच्यते ॥१०॥

---

[1] B. विशुद्धिमत्या ।

[2] A. समसाश्च ।

[3] B. व्यञ्जनान्यङ्गकैरेतैनानाधातूपवृ हितम् ।

[4] B. स विज्ञेय ।

[5] B गुणोत्तम; then the figures 1 and 2 above म: and त spectively to show that these two letters should be trns- )sed. (K)

[6] B. मुख्य ।

तथा लाक्षणिको मुख्याश्रितमर्थं ब्रवीति यः ।
व्यङ्ग्यप्रयुक्तो[१] व्यञ्जकः स्यादेषां व्यापृतिरुच्यते ॥११॥

अभिधा लक्षणा चाथ[२] व्यञ्जना क्रमतो मता ।
रूढयौगिकमिश्राख्यास्ते शब्दास्त्रिविधाः स्मृताः ॥१२॥

प्रकृतिप्रत्ययद्वारा नत्वर्था रूढिमाश्रिताः ।
मण्डपाखण्डलाद्यास्तु न व्युत्पत्तिमुपाश्रिताः ॥१३॥

गुणेन क्रियया चापि संबन्धेन च यो भवेत् ।
परस्परार्थानुगमः स योग इति कीर्त्यते ॥१४॥

गुणतो नीलकण्ठाद्याः संख्यातः ख(प)ण्मुखादयः ।
क्रियातः स्रष्टृप्रमुखाः संबन्धाद् भुजगादयः ॥१५॥

मत्वर्था अपि संबन्धे कपालिप्रमुखास्ततः ।
जन्याकृत्सुतिधात्राद्या विश्वकृत्प्रमुखास्ततः ॥१६॥

जनकाद्योनिमुख्याः स्युरात्मयोनिमुखास्ततः[३] ।
अपत्यप्रत्ययाद्येभ्य आदितेयादिकाञ्जगुः ॥१७॥

धार्यधारकसम्बन्धे वृषध्वजपिनाकिनः ।
भोज्यभोजकसंबन्धेऽमृतभुक्तद्व्रतादयः[४] ॥१८॥

पत्युः कांता(ः)प्रिया(स्)तुल्याः शिवकान्तादिकास्ततः ।
पत्न्याः प्राणेश्वरमुखा गौरीप्राणेश्वरस्ततः ॥१९॥

सख्युः सखिप्रभृतयस्ततः[५] शिवसखादयः ।
वृषवाहनमुख्याः स्युर्वाह्यवाहकभावतः ॥२०॥

ज्ञात[६] (ति)स्वसृदुहित्राद्यैर्हिमवद्दुहितृप्रथाः ।
आश्रयाश्रयिभावेन दिवो(वौ)कःप्रमुखा अपि ॥२१॥

स्युर्वध्यवधकत्वे तु पुरजिन्मुरजिन्मुखाः ।
पतिधार्यत्ववाह्यत्वसंबन्धो हि विवक्षया ॥२२॥

रुद्रे वृषात्तदेकस्मात् पतिलाञ्छनवाहनाः ।
स्याद्यत्किलवाचको जातिशब्दोऽपि व्यक्तचिह्नतः ॥२३॥

दक्षिणा दिग्यथार्थास्ति(स्त्य)निवासत्वेन कीर्त्यते ।
त्रिपञ्चाविपदे(ऽ)याज्यो(स्याप्यो)शब्दो[७]हि विषमायुजो ॥२

[१] B. व्यगयुक्तो ।
[२] B. Omits चाथ ।
[३] मुखास्ततः ।
[४] B. (ऽ) मृतभुक्तव्रतादयः ।
[५] A. स्तत शिवसखादयः ।
[६] B ज्ञातस्वमृ etc.
[७] B. शब्दो ।

तेन त्रिनेत्रो विषमनेत्रोऽप्ययुङ्नेत्र इत्यपि ।
गुणो विरोधिनं यत्तीतरान्तो नञ्पूर्वकः ॥२५॥
सितेतरोऽसितस्तस्मात् कृष्णो (ऽ) यो व्यपदिश्यते ।
जलादिषु प्राक्पदेषु पर्यायपरिवर्त्तनम् ॥२६॥

जलदस्तोयदस्तस्माज्जलधिर्नीरधिस्तथा ।
जनिरुध्प्रभृतिषु[१] तूत्तरेषु परिवर्तनम् ॥२७॥
सरोरुहं सरोजं च ततः[२] स्यादेवमादिकम् ।
सुरपत्यादिषु प्राय उभयोः परिवर्तनम् ॥२८॥

ततः सुरपतिर्देवराजः स्यात्त्रिदशेश्वरः ।
इत्याद्या यौगिकाः शब्दाः परिवृत्त्यसहाश्च ये[३] ॥२९॥
गीर्वाणप्रमुखाः शब्दास्ते मिश्राः परिकीर्त्तिताः ।
एतेषां कविरूढ्यैव ज्ञेयोदाहरणावलिः ॥३०॥

तथा हि समयं प्राहुः कवीनामिह तद्विदः ।
जात्यादिनियमापेक्ष्यमर्थं बध्नन्ति कुत्रचित् ॥३१॥
असन्तमपि बध्नन्ति न सन्तमपि कुत्रचित् ।
दिङ्मात्रमेतदत्रोक्तं [४]नाम्नामन्यान्यपि स्वयम्[५] ।
कालसेनोपदेशेन तर्कमेवनया दिशा ॥३२॥

यद्यशः पदमायातुं त्रिलोक्यां गोः पदं व्यधात्[६] ।
अपि विष्णुपदं तेन पदं राज्ञा[७] स्थिरीकृतम् ॥३३॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे पदोल्लासे पदपरीक्षणं प्रथमं समाप्तम् ॥

---

[१] A. जनिरुध्प्रभृतिष्वस्युत्तरेषु । B. जनिरुध प्रभृतिषु स्यूत्तरेषु K. suggests the above reading.

[२] B. तत् ।

[३] K. suggests सहाश्रयै.

[४] A. B. नाम्नामन्यापि । K. suggests the above reading.

[५] B. numbers this verse as 32. at the end of two lines.

[६] A. B. व्ययात् ।

[७] K. reads राजा।

# वाक्यं नाम द्वितीयं परीक्षणम्

अतोतो वाक्यमार्गं यो वेदमार्गेण मृग्यते ।
वाक्यवाच्यादिरूपेण तमवाक्य भजे शिवम् ॥१॥

यत सर्वं पदार्थोऽय वाक्यार्थे पर्यवस्यति ।
ततस्तेषा समूहोऽत्र वाक्य वाक्यविदोच्यते ॥२॥

पदव्यवहृतिर्वाक्ये पदबन्धागता[२] मता ।
द्विविध तत् पद ज्ञेयं निबद्धं चूर्णमेव च ॥३॥

तत्र चूर्णपदस्यादौ लक्षण सगुणाम्यहम् ।
अनिबद्धपद[३] छन्दोहीन चानियताक्षरम् ॥४॥

अर्थापेक्षाक्षरोपेत ज्ञेय चूर्णपद बुधैः ।
यतिछ(च्छ)न्द( )समायुक्त तथा च नियताक्षरम् ॥५॥

पादैश्चतुर्भिर्नियत निबद्ध पदमीरितम् ।
एव नानार्थसयुक्तं पदैर्वर्णविभूषितं ।
पदबन्धा प्रकर्तव्या यथालक्षणलक्षित (ता॰) ॥६॥

आद्येष्वष्टसु देवता निगदिता वर्गेषु सोम॰ कुजो
ज्ञेज्यौ शुक्रशनी रविस्तम इति स्यात्तत्फल च क्रमात् ।
आयुर्वाच्यपद धन सुभगता कीर्तिश्च मान्द्य मृति ।
शून्यत्व मुखतस्तदक्षरवशाद्वर्णस्य गीतादिषु ॥७॥

एव मित्रावरुणसदनादुच्चरत्प्राणशक्त्या–"सगप्रोद्यत्पवनहतिततस्यानजीर्णोत्करेण[६] ।
आरब्धे तत्पदघटनया[७] कारणं गीतकादेर्लोके[८] सर्वव्यवहृतिपद वाक्यमन्यन्यरूपि[९] ॥८॥

---

[१] A वाक वाक्यादिरूपेण । B वाक् वाक्यादिरूपेण K suggests the above reading.

[२] A पदबधागतो ।

[३] B अनिबद्धपद ज्ञेय छदोहीन चानियताक्षरम् ।

[४] B Numbers this verse as 6 at the end of two lines and includes the third line in the seventh verse.

[५] B सगप्रोद्यत्पवहति etc ।

[६] A. जार्णोत्करेण ।

[७] B. घट्टनया ।

[८] A गीतकादे लोके ।

[९] A. B वाक्यमन्यत्र रूपि ।

प्राकृतं चापि विज्ञेयं संस्कृतस्य विपर्ययात् ।
तद्भवं तत्समं देशीत्येवं त्रैविध्यमस्य तु ॥९॥

स्वरवर्णान्यतां वापि न्यूनतां वापि ये पदे।
न्यस्ता गच्छन्ति संयुक्तास्तद्भवास्ते[1] प्रकीर्तिताः ॥१०॥

तरङ्गलोलसलिलकमलामललक्षणाः ।
तुल्याकृतिधरा ये तु संस्कृते ते च तत्समाः ॥११॥

महाराष्ट्रादिदेशानां भाषामाश्रित्य वर्तते ।
यत्तद्देशीति विज्ञेयं सुज्ञेयम(मि)ह तद्विदाम् ॥१२॥

भाषा चित्रप्रबंधेषु गाथादावुपयुज्यते ।
यद्यप्येतत्तथाप्यत्र नास्माभिरिह तन्यते ॥१३॥

यद्वाक्यं राजवृन्देन शिरसा विष्णुमाल्यवत् ।
धार्यते कालसेनेन तेन वाक्यं निरूपितम् ॥१४॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते[2] संगीतराजे षोडशसाहस्रयां संगीतमीमांसायां पाठ्यरत्नकोशे पदोल्लासे वाक्यपरीक्षणं द्वितीयं समाप्तम् ।

---

[1] B सयुक्तातद्भवास्ते ।

[2] श्रीराजाधिराजवाल्सेनेन विरचिते ।

# संज्ञा नाम तृतीयं परीक्षणम्

व्याकृते जगता येन नामरूपे नमाम्यहम् ।
तमरूपमनामान[1] शङ्कर लोकशङ्करम् ॥१॥

गीत[2] वाद्य तथा नृत्य त्रय सगीतमुच्यते ।
तद्द्विधा भिद्यते मार्गदेशीभेदेन तत्त्वत ॥२॥

मार्गितत्वाद्विरिञ्चेन प्रयुक्तत्वात्तया(थ)पिणा ।
महोदयनिमित्तत्वाद् विख्यातो[3] मार्ग उ(च्य)ते ॥३॥

तदेव रुचिवैचित्र्यात् चित्तरञ्जनकृज्जनै ।
प्रयुक्त स्वस्वदेशे यत् ततो देशीति कीर्त्तितम् ॥४॥

छादनावपयत्यादेरुक्ताद्य छन्द ईरितम्[4] ।
उपमाद्या अलकारा पाठ्यालकृतिहेतव ॥५॥

स्वरयन्ति मनासीह श्रोतृणां स्वार्थतो यत ।
षड्जादिका स्वरास्तेन चेत (ते च) साद्यक्षराभिधा ॥६॥

यया गोत्रकुलाचारोत्पन्न पुनाम सम्मतम् ।
तया ज्ञेया रसाना च स्वरानामभिधा इमा ॥७॥

विभूषयन्ति च रस केयूरादिवदङ्गिनाम्(नम) ।
श्रवणाच्छ्रुतयस्ताश्च तीव्राद्या स्वरहेतव ॥८॥

श्रुत्युत्कर्षापकर्षौ हि विकृति( )प्रकृतिर्मतौ(ता) ।
व्यवस्थितश्रुतियुता यत्र सर्वासि(दि)न स्वरा ॥९॥

मूर्च्छनाद्याश्रयो नाम स ग्राम इति सज्ञित ।
आरोहेणावरोहेण क्रमेण स्वरसप्तकम ॥१०॥

रागादेर्मूच्छनादत्र[5] मूर्च्छना परिकीर्त्तिता ।
ता एव शुद्धताना स्यु षाडवौडुवितीकृता ॥११॥

पूर्णापूर्णविभेदेन द्विधा या मूर्च्छना स्मृता ।
ता एव कूटताना स्युर्व्युत्क्रमोच्चारितस्वरा ॥१२॥

---

[1] B तमरूपनामान ।
[2] A गीतवाद्य ।
[3] B द्विपयतो ।
[4] B इरितम् ।
[5] A रागादेमूर्च्छनादत्र । B रागादेर्मूछनादत्र ।

प्रस्तारे पूर्वरूपाणि तेषां मूलक्रमाः स्मृताः ।
साधारणीकृताशेषभूभुजा तामराजिना ॥१३॥

साधारण्यात् स्वरजात्योः साधारणमिहोदितम् ।
स्थाय्यादिभिश्चतुर्धासौ[1] वर्णो गानक्रिया मतः ॥१४॥

एक एव स्वरो यस्तु स्थित्वा स्थित्वा पुनः पुनः ।
प्रयुज्यते स तु स्थायी परावन्वर्थनामकौ ॥१५॥

आरोही चावरोही च संचारी तद्वियोगजः ।
प्रतिपक्षक्षमापालभालं(ला)लंकाररूपिणा ॥१६॥

विशिष्टो वर्णसंघातोऽत्रालंकार उरीकृतः ।
अतारविश्रम[2]-स्वांशापन्यासन्यासभूषणात् ॥१७॥

क्रियते कालसेनेन शुद्धजातिपरिग्रहः ।
स्वनामस्वरविश्रामविशिष्टत्वेन तद्बहिः ॥१८॥

शुद्धलक्ष्मविनाभूता विकृताः किं न[3] (तु)[4] सम्मताः ।
गीतमुद्ग्राह्यते येन स स्वरो ग्रह उच्यते ॥१९॥

प्रयोगे बहुलोऽशः स्यान्न्यासो गीतसमाप्तिकृत् ।
विदारी गीतखण्डः स्यादपन्यासस्तदन्तकृत् ॥२०॥

विन्यास. स विदार्यंश[5]–पदप्रान्ते स्थितस्तु यः ।
अंशाविवादी संन्यासो धनदेवगणोदितः ॥२१॥

यस्मात्तारस्य मद्रस्य[6] च गतिरनुवादी च संवादिसंज्ञो
यस्यान्यः[7] स्याद्विवादी स्वर इह जनयेद्यस्तु गेयेऽत्र रक्तिम् ।
न्यासापन्याससंन्यासकविधिकलविन्यासवर्गे ग्रहत्वं
प्राप्तोंऽशो योग्यतातो भवति च बहुलो वो विदार्यां स वादी ॥२२॥

---

[1] B स्यायादिभि etc ।

[2] B अतारवि॰श्रम ।

[3] A किन ।

[4] किंच also a possible reading

[5] B विदार्यंस ।

[6] A B मद्रस्यावगतीरनुवादी च । K. suggests the above reading

[7] A य स्यान्य स्याद्विवादी । B य, then space for two or three letters blank and स्याद्विवादी follows. K reads य स्याद्वादी विवादी ।

राजा स स्याद्विवादी रिपुरिव विवदन् मुख्यमग्रीव तस्मिन्
संवादी संवदन् योऽनुवदति[१] खलु त सोऽनुवादी स्वरोऽस्मिन ।
अशत्व व्यापकत्वे सति पुनरुदित गेयकर्मण्यमुष्य[२]
क्षोणीसुश्रोणिभर्त्रा[३] तदनु च बहुलत्व सुगानप्रयोगे ॥२३॥

षाडव षट्स्वर प्रोक्त तत्पञ्चस्वरमौड(डु) वम् ।
पुनरावृत्तिरभ्यास ईषत्स्पर्शोऽत्र लङ्घनम् ॥२४॥

अलङ्घन तथाभ्यासो बहुत्वे लक्ष्म चक्षते ।
षादिसवाद्यनपर्याय तु तदिष्यते[४] ।
अनशविषयोऽल्पत्व बहुत्वस्य विपर्ययात ॥२५॥

हित्वा न्यासादे स्थिति य स्वराणां
मध्ये मध्येऽल्पत्वभाजां कदाचित ।
सङ्गोऽशाद्यै कोऽपि वैचित्र्यहेतु
प्रोक्तो मार्गे सोऽन्तराख्य स्वरज्ञै २६॥

अल्पप्रयोग ( ) सर्वत्र काकली चान्तर स्वर ॥२७॥

मन्द्र प्रसन्नो मृदुसन्नकश्च लिपौ भवेद्बिन्दुशिरा स एव ।
तारस्तु दीप्त परमूर्ध(र्ध्व) रेखा शिरालिपौ त्रिवचनात प्लुत स ॥२८॥

स्यान्मूर्च्छनाया प्रथम स्वरोऽत्र मन्द्र स एव द्विगुणस्तु तार ।
तत्पूर्वपूर्वो भवतीह मन्द्र पर परोऽन्य स विभूषणेषु ॥२९॥

स्वरसाधारणमुदित समपेष्वशेषु नियतमनुरूपम ।
पञ्चमिकामध्यमिकाजात्योस्तु सषड्जमध्यमयो ॥३०॥

अल्पद्विश्रुतिकासु जातिषु तथा रागेषु भाषास्विदम
तावशौ यदि षडजमध्यमिकया न स्यात सहस्थास्तुकम् ।
एव कौतुकिनात्र[५] (कैमुतिकेन) निश्चितमिद तत्रापि तस्याश्रया
प्राय स्युर्विकृता[६] इहैव भणितौ श्रीब्रह्मशैलेशितु ॥३१॥

सलयतालपदा स्वरराजिता विविधवर्णविभूषणभूषिता ।
गमकपेशलगानगुणाञ्चिता[७] मुनिवरैरिह गीतिरुदाहृता ॥३२॥

---

[१] A B यो ननुवदति K suggests the above reading

[२] B शक्तिम ।

[३] B भर्ता ।

[४] B ends this verse here and numbers it as 25 and the difference of numbering continues till the end of the परीक्षण ।

[५] A एव कौमुतिकेन B एव कौतवेन K suggests कौतुकिना

[६] B स्युर्वीकृता ।

[७] B गानपुणाचिता ।

विचित्रवर्णालंकारो विशेषे(षो)यो ध्वनेरिह ।
ग्रहादिस्वरसन्दर्भो रञ्जको राग उच्यते ॥३३॥

तत्र ग्रामसमुद्भूतपञ्चगीतिसमाश्रयात् ।
शुद्धादिभेदसंभिन्नो ग्रामराग इतीरितः ॥३४॥

तदुद्भवश्चोपरागो रागो रञ्जनकृत्ततः ।
भाव्यते येन तछा(च्छा)या स भाषां (षा) राग उच्यते ॥३५॥

तामाश्रित्य[1] प्रवृत्ता या विभाषा भाषितात्र सा ।
भाषाविभाषयोरन्तरुत्पन्नान्तरभाषिका ॥३६॥

भाषाद्या गीतयस्तिस्रो याष्टिकेयो(नो)ररीकृताः ।
तत्र भाषा समाख्याता मुख्यानन्योपजीविनी ॥३७॥

स्वरनाम्ना स्वराख्या तु देशाख्या देशनामतः ।
ग्राम्यस्तिसृभ्यो जायन्ते[2] यास्ताः स्युरुपरागजाः ॥३८॥

स्वजात्युद्योतकत्वे येऽनुवर्त्तन्ते तु तामिह ।
अन्यजातिविरूपा ये ते शुद्धा राज(ग)सत्तमाः (राजसम्मताः) ॥३९॥

श्रुतिभिश्च स्वरैश्चैव शुद्धत्वेन च जातिभिः ।
चतुर्भिर्भिद्यते यस्तु स भिन्न इति कीर्त्यते ॥४०॥

रागाङ्गत्वं ग्रामरागच्छायामात्रोपजीवनात् ।
भाषाणामाश्रिता छाया यैस्तदङ्गानि तानि च ॥४१॥

क्रियाङ्गानि च कथ्यन्ते दीपकादिक्रियायुजः ।
श्रोतृचित्तोत्साहकरणयोगाच्च कोविदैः ॥४२॥

अङ्गाश्रयसमुत्पन्नान्युपाङ्गानि च मेनिरे ।
देशीरागत्वमप्यस्य रागाङ्गादेरुदीरितम् ॥४३॥

पदं वागभिधेया स्यात् सा मातुरभिधीयते ।
गेयं धातुस्तयोः कर्त्तोच्यते वाग्गेयकारकः ॥४४॥

गान्धर्वो[3] मार्गदेशीवित् स्वरादिर्मार्गरोविदः ।
गान्धर्वं तत्र विज्ञेयं स्वरतालपदात्मकम् ॥४५॥

पुरा प्रणष्टां देवेभ्यो वाचं गोरूपधारिणीम् ।
अपारयदिति प्रोक्तं गान्धर्वमिह सूरिभिः ॥४६॥

---

[1] B. तामाश्रित्य there are both आ and इ marks.
[2] K rightly suggests भिद्यन्ते for जायन्ते ।
[3] B. गन्धर्वं ।

अत्यर्थमिष्टं देवानामत एव प्रकीर्त्तितम् ।
यज्ञवीणाशरीरेभ्य प्रभवस्तस्य समत ॥४७॥

तयोक्तम्— पदस्थ( ) स्वरसघात(स्)तालेन सुमितस्तया ।
प्रयुक्तश्चावधानेन गान्धवमभिधीयते ॥४८॥

पुनर्गीत पुनर्वाद्यमेव[१] योज्य पुन पुन ।
अलातचक्रप्रतिम रसभावविभावकम्[२] ॥४९॥[३]

श्रोतुश्चित्तस्य सुखदो गमक स्वरकम्पनम् ।
स च वाग इति स्थायी रागस्यावयव स्मृत ॥५०॥[४]

यत्ततोऽतिशयारोपो रागस्य भजन मतम् ।
गमकस्थायवर्णाढ्या नानालङ्कृत्यलकृता ॥५१॥

रागाल(ला)पनमालप्तिर्भूरिभङ्गिमनोहरा ।
प्रयोगाढ्या तयालापसज्ञा साक्षरवर्जिता ॥५२॥

*अनिबद्ध च तामाहुर्गीत गीतविशारदा ।*
गातृणा वादकाना च समूहो वृन्दमुच्यते ॥५३॥

रागोऽभिधीयते गीत दशलक्षणलक्षित ।
लक्षणानि च तत्राशन्यासौ षाडवमौडुवम् ॥५४॥

अल्पत्व च बहुत्व च ग्रहोऽपन्याससयुत ।
मन्द्रता तारता चापीत्येव ज्ञेयानि सूरिभि ॥५५॥

प्रबन्धो रूपक वस्तुनिबद्ध गीतमुच्यते ।
निबद्धावयवो धातुध(र्ध)राधीशस्य समत ॥५६॥

कलाकालप्रमाणेन ताल इत्यभिधीयते ।
अध(र्ध) मात्रा द्वे च तिस्रो द्रुतोलघुगुरुप्लुता ॥५७॥

क्रमात्तेषा चतुर्णा स्यु सज्ञा दलपगा(गपा) इति ।
द्रुते स्याद्देवता शम्भुर्हिमवद्दुहिता लघौ ।
शिवौ गुरुणि सप्रोक्तौ प्लुते ब्रह्मादयस्त्रय ॥५८॥

द्रुते व्यञ्जन व्योम बिन्द्वधमात्र लघौ व्यापक ह्रस्वमृज्वेकमात्रम् ।
गुरौ वक्रदीर्घो[५] कला च द्विमात्र प्लुते सामजव्यञ्ज दीप्तत्रिमात्रा ॥५९॥

---

[१] B पुनर्वाद्यमेव ।
[२] B सभावविभावकम् ।
[३] cf N. S २८।७ ।
[४] cf S. R. ३।८७, ९७ ।
[५] A दीर्घो ।

द्रुतलघ्वादिरूपाद्यक्रियामानोपलक्षितः ।
गीतादिकं परिच्छिन्दन्[1] कालस्ताल इतीरितः ॥६०॥

पञ्चलघ्वक्षरोच्चारमिता मात्रा कला च सा ।
मार्गभिन्नलयोपेता छोटिका चात्र मार्गिता ॥६१॥

ततः कलाकालकृतो लयः सलयमीरितः ।
तत्प्रवृत्तेर्नियमनं यतिर्यतिभिरीरिता ॥६२॥

ततं वीणादि सुखि(षि)रं वंशादि मुरजादि च ।
अवनद्धं घनं कांस्यं[2] तालादि परिकीर्त्तितम् ॥६३॥

वाद्यवर्णसमूहस्तु पाटः पटुवियां मतः ।
वाद्यमात्रोच्यते तत्तत् पाणियोगेन वादनम् ॥६४॥

रूपादिकं तत्करणं वाद्यप्रकरणे मतम् ।
स्वरास्ते घातवः प्रोक्ता ये प्रहारविशेषजाः ॥६५॥

गुणप्रधानभावेन यासौ व्यवहृतिर्मता ।
वृत्तिर्निगद्यते साद्या वाद्यविद्याविशारदैः ॥६६॥

गीतानुगं त्रिःप्रकारं मतं[3] वाद्यं ततादिकम् ।
विन्यासाः पाटवर्णानां वाद्यानि मुरजादिषु ॥६७॥

स्कन्धादिकम्पः सञ्चः स्यात् कोणः कुल(त?)प इत्यपि ।
वीणादिवादनो दण्डः प्रवीणैरुपवर्ण्यते ॥६८॥

उद्ग्राहादिविधा वाद्यप्रबन्धाः पाटवर्णजाः ।
विभावयन् विचित्रार्थानङ्गाद्यैः प्रयोगतः ॥६९॥

रसाविर्भावको द्रष्टुर्नटेऽर्थोऽभिनयस्तु सः ।
स चतुर्धा बुधैर्ज्ञेयस्तत्राङ्गं दर्शितो मतः ॥७०॥

आङ्गिको वाचिकश्चैव नाटकादिषु तत्त्वतः ।
वाचा विरच्यते यस्तु विज्ञेयः सात्त्विकः पुनः ॥७१॥

विभावितस्तु यो भावः सात्त्विकैर्भावकेन हि ।
आहार्यः स तु विज्ञेयः किरीटादिविभूषणैः ॥७२॥

---

[1] A. B. परिछिदन K. suggests the above reading.

[2] A. कार्स्य ।

[3] A. B. वाद्य ततादिकं मतम् K. suggests the change to accord ith the metre.

शोभामाहृत्य जनितो नटेऽनुकृतितः सतः ।
तत्राङ्गाभिनयस्यैतत् त्रयं मुख्यं प्रकीर्तितम् ॥७३॥

शाखा चैवांकुरश्चैव नृत्तं चेति समासतः ।
व्यापाराः करयोर्यत्र विचित्रार्थावबोधकाः ॥७४॥

ते स्मृता वर्तनास्तज्ज्ञैस्ताः[1] शाखाः परिकीर्त्तिताः ।
भूतवाक्यार्थविषयमुपजीव्य प्रवर्त्तितः ॥७५॥

चित्तवृत्त्यर्थकोऽङ्गानां व्यापारोऽङ्कुर इ(ई)रितः ।
स एव सूचासंज्ञः स्याद् भाविवाक्योपजीवकः ॥७६॥

अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ।
एतच्चतुर्धाभिनयेनोपेतं नाट्यमुच्यते ॥७७॥

नृत्यं तत्राङ्गिकैरेवाभिनयैर्व्यञ्जकं तु यत् ।
भावानां मार्गशब्देन[2] तदेवात्रोपदर्शितम् ॥७८॥

आङ्गिकोक्तेन विधिनाभिनयैर्यद्विना कृतम् ।
गात्रविक्षेपणं तद्धि[3] नृत्तमत्रोपवर्णितम् ॥७९॥

नाट्यादित्रितयं ह्येतद् द्विविधं परिकीर्त्तितम् ।
लास्यतांडवभेदेन तत्र लास्यं तदुच्यते ॥८०॥

ललनाललिताङ्गैर्यत् साधितं कामवर्द्धनम् ।
आसारितादिभिर्गीतैरुद्धतप्रायवर्द्धनैः ॥८१॥

करणैरङ्गहारैश्च निवृत्तं विषमैरिह ।
ताण्डवं तण्डुना प्रोक्तं नृत्तं नृत्तविदो विदुः ॥८२॥

केचिद्भेदत्रयं चान्यत् नृत्यस्याहुर्मनीषिणः ।
विषमं विकटं लघ्वित्यत्र तद्विषमं मतम् ॥८३॥

यदभ्यासवशाद्रज्जुभ्रमणादि प्रदृश्यते ।
विकटं रूपवेषादौ वैरूप्येण प्रवर्त्तितम् ॥८४॥

लघुः स्यात् करणैरल्पैरञ्चितार्थैविशेषितम् ।
नन्वत्र नाट्यशब्दोऽयं नर्त्तने वर्तते कथम् ॥८५॥

यतोऽत्र मुख्यया वृत्त्या रसाविर्भावकत्वतः[4] ।
अभिधत्ते रसं नैतद्वृत्त्या लक्षणया स्वयम् ॥८६॥

---

[1] B. वर्तनास्तज्ज्ञैस्ता. ।

[2] B. मागशब्देन ।

[3] B. तन्नद्धि ।

रसाभिव्यञ्जकत्वेनाभिनयादिविचिकीर्षतः ।
नर्तने नाट्यशब्दोऽयं वर्तते नात्र दूषणम् ॥८७॥

अभिनेयपदार्थस्योल्लेखने प्रक्रिया पुनः ।
कुत्रचिल्लोकधर्मीति नाट्यधर्म्यपि कुत्रचित् ॥८८॥

तत्रादौ लोकधर्म्यास्तु लक्षणं प्रोच्यते मया ।
स्वभावाच्चेतसो वृत्तेरुपगन्त्री, विवर्जिता ॥८९॥

विकारेण, विशुद्धा च लोकवार्ताक्रियायुता ।
स्वभावाभिनयोपेता ह्यङ्गलीलां विना कृता ॥९०॥

नानास्त्रीपुंश्रिता लोकधर्मी,नाट्यक्रिया स्मृता ।
न श्रूयते यत्र वाक्यं योग्यं श्रवणकर्मणः ॥९१॥

अनुक्तमपि वा यत्र श्रूयते कुतुकादिव ।
लोके यदप्रसिद्धं तु नाट्ये केचित् (कैश्चित्) प्रयुज्यते ॥९२॥

मूर्तिमत् साभिलाषं च नाट्यलक्षणलक्षितम् ।
अतिवाक्यक्रियोपेतं स्वरालकारसयुतम् ॥९३॥

लीलाङ्गहाराभिनयं रागाभिव्यक्तिकारणम् ।
अत्रवत्यपुरुषोपेतमतिसत्त्वविभावकम् ॥९४॥

शैलयानविमानानि चर्मबर्मायुधध्वजा.[१] ।
मूर्तिमन्त. प्रयुज्यन्ते नृत्यते गम्यतेऽपि वा ॥९५॥

ललितैरङ्गविन्यासैस्तयाक्षिप्तपदक्रमैः ।
सुखदु खक्रियारूपः स्वभावो यस्तु लोकगः ॥९६॥

सोऽङ्गाभिनयसयुक्तो[२] दिव्यमानुषरक्तिदः ।
ब्रह्मोक्तश्चेतिहासोऽयं नाट्यधर्मीति कीर्तिता ॥९७॥

यस्मात् सर्वोऽपि रागोऽयं नह्यङ्गाभिनयादृते ।
सर्वोऽप्यभिनयो ह्येष पदार्थज्ञानसभवः ॥९८॥

अङ्गालकारचेष्टादि नाट्यधर्म्यां प्रतिष्ठितम् ।
अङ्गानि शिर आदीनि प्रत्यङ्गानि तथैव च ॥९९॥

ग्रीवादीनि तथोपाङ्गं दृष्टिपार्श्वादिकं मतम् ।
व्यञ्जकाः स्युर्मनोवृत्तेर्मुखरागा रसाश्रयाः ॥१००॥

---

[१] A. चर्मधर्मायुध B. चर्मधर्मायुध K. suggests the above reading.
[२] A. संयुक्तो ।

करप्रचारा करयोर्व्यापारा करणानि च ।
क्रियाविशेषो हस्तस्य स्वतन्त्रोऽभिनयाय[1] यः ॥१०१॥

निष्पत्तिविषये तानि धूननाद्यास्तु तत्क्रिया ।
विश्रान्तिस्थानकं क्षेत्रं सविलासं करस्य तु ॥१०२॥

सविलासा रसोपेता करपादादिका क्रिया ।
करणं नृत्यकरणं तदेव परिकीर्त्तितम् ॥१०३॥

तदेवो(त्)प्लुतिपूर्वं स्यात् उद्धतप्रायनर्तने ।
अङ्गहारोऽङ्गविक्षेपः करणैरुपबृंहितः ॥१०४॥

चालनं करपादादे रेचकः सविलासकम् ।
विचित्रं चरणादीनां कर्म चारीसमं कृतम् ॥१०५॥

चारीणां चरणं चित्रं मण्डलं सम्प्रचक्षते ।
स्थानं स्यादक्रियं कश्चित् सन्निवेशः शरीरगः ॥१०६

पुमर्थसाधनी चेष्टा वाङ्मनःकायसंभवा ।
वृत्तिः स्यात्, स्वान्यशस्त्राणां[2] कर्त्तुं च्यावनपातने ॥१०७॥

उचिता वर्तनाङ्गस्य सङ्ग्रामे न्याय उच्यते ।
मनोहरा स्थितौ रेखा त्वङ्गानां मेलके सति ॥१०८॥

योग्यः श्रमविधिः पात्रं नर्तनाधार इष्यते ।
तदेव गौण्डलीं प्राहुः स्वयं गायननर्तनात् ॥१०९॥

स्यादाचार्य उपाध्याय ( ) सम्प्रदायस्तु तद्विदाम् ।
वृन्दमाहुः पद्धतिश्च नृत्यस्य परिपाटिका ॥११०॥

वर्णकैरुपलिप्ताङ्गो लयतालविचक्षणः ।
सभाजनमनोहारी यो नृत्यति स प्रेरणी ॥१११॥

नटोऽभिनयवेदी स्यान्नर्तको मार्गनृत्यवित् ।
रस्यते यः सहृदयैः स रसो रसिकप्रियः ।
शेषं स्वावसरे [3]लक्ष्माभिधास्ये [4]लक्ष्मविन्मुदे ॥११२॥

भूभृत्त्वं भूभृता येन कुटुम्बीकरणात् कृतम् ।
संज्ञायै केवलं,तेन राज्ञा संज्ञा निरूपिता ॥११३॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे पदोल्लासे संज्ञापरीक्षणं तृतीयं समाप्तम् ॥

---

[1] B स्वतन्त्राभिनयाय ।
[2] B शास्त्राणां ।
[3] A B लक्ष्म्या etc
[4] A. लक्ष्म्यविन्मुदे ।

# परिभाषा नाम चतुर्थं परीक्षणम्

पुमानिति[१] परात्मेति कर्त्तेति परिभाष्यते ।
यस्तीर्थिकैस्तमीशानं भाषातीतं नमाम्यहम् ॥१॥

अंशान्मध्यमसप्तकं स्थितवतस्तारावधावाव्रजे–
त्तारस्यांश्चतुरः स्वरानिह ततो[२] वाक्कामचारः स्मृतः ।
आरोहेदपि तारषड्जमवधिं तं नन्दयन्त्यां विधा–
यारोप्यो गणनाविधाविह परं लुप्तस्वरोऽप्यावृतः ॥२॥

[१] अंशान्मध्यमसप्तक(कं) स्थितवतो ह्यामन्द्रकस्यांशकं
मन्द्रन्यासकमाप्य[3] वा तदपरत्रिश्रुत्यवस्थावधि ।
कार्यं जात्ववरोहणं निगदिता सीमा परेयं सदा
मन्द्रस्थानगतेरतोऽवगमनेऽर्वाक्कामचारः[४] स्मृतः ॥३॥

पूर्णत्वे सति षाडवौडवकृतोरल्पत्वमत्यल्पता
वाक्यादेव विधीयते क्रमतया प्राप्तापि विद्यावता ।
पञ्चम्यां तु विपर्ययेण[५] भवतो जातौ यतस्ते द्वयोः
प्राप्तौ तत्परिसंख्ययैकवचनं प्रायो विधेयास्पदम् ॥४॥

यो(ये)प्रयोगमवन्तीह मिलित्वा षट्स्वरास्तु ते ।
षाडवाः ष(ट्)स्वरं गीतं षाडवं तद्भवं ततः ॥५॥

यस्मिन् वात्युडवस्तदुक्तमुडुवं[६] भूतेषु तत्पञ्चमं
तत्संख्यौडुविकावशेन गदिताः पञ्चस्वरास्त्वौडुवाः ।
संजातास्त इमे तदौडुवितमत्रोक्तं तु गीतं बुधैः
संबन्धात्तत एव विश्रुति[७]-मगात् पञ्चस्वरं त्वौडुवम् ॥६॥

ताल एककले मार्गश्चित्रो[८] गीतिस्तु मागधी ।
द्विकले वार्तिको मार्गो गीतिः संभाविता मता ॥७॥

---

[१] B पुमान् परमात्मेति, leaves some space blank in the beginning.

[२] K suggests *ततोऽर्वाक्कामचार* ।

[३] A. B. न्यासकमाद्य K. suggests the above reading.

[४] B. गमने वाक्कामचार ।

[५] B विपर्यण ।

[६] B. यस्मि वात्युडव etc ।

[७] B. विश्रुति गात् । there is some mark after ति ।

[८] B. श्रित्तो ।

चतुष्कले तु पृथुला गीतिर्मार्गस्तु दक्षिणः ।
सा जातिषु कला प्रोक्ता सा दक्षिणपथाश्रिता[1] ॥८॥

चित्रवार्तिकयोर्ज्ञेया द्विगुणा द्विगुणा तु सा ।
अंशस्वररसास्तज्ज्ञैर्ज्ञातव्यः सर्वजातिषु ॥९॥

अंशश्च जन्यरागाणां ज्ञेयो जनकजातिषु ।
स्यातां मेलापकाभोगौ रूपकेन(ण) क्वचित् क्वचित् ॥१०॥

यत्र वस्तुकृता वस्तु नोक्तमाभोगलक्षणम् ।
पर्वस्तत्र प्रयोक्तव्य आभोगो गीतकोविदैः ॥११॥

आभोगध्रुवयोरन्तरतु(त)रो धातुरस्त्रि(स्ति)यः ।
छायालगान्तरे सोऽत्र रूपकेषू(षु) पर्वणितः ॥१२॥

ओव्यादीनि[2] तु यान्यत्र रूपकाणि न्यरूरुपन् ।
केचिच्च तेषु कर्तव्य आभोगः कर्हिचिद्बुधैः ॥१३॥

अत्र यन्मानमाख्यातं तालज्ञैस्तालकर्मणि ।
विश्रान्तियुक्तया काले क्रियया तदिहेष्यते ॥१४॥

धात्वादिवादनं मत्तकोकिलायां यदीरितम्[3] ।
तदेकतन्त्रीमुख्यासु वीणासु स्याद्यथायथम् ॥१५॥

यदेकतन्त्र्यामुद्दिष्टं नकुलादिषु तत् स्मृतम् ।
वेणुप्रवीणा वीणास्थं वेणुष्वतिदिशन्ति तत्[4] ॥१६॥

आहुरेके मानतालयुक्तं द्वाभ्यां विवर्जितम् ।
वीणावाद्यं कश्चिदाह मानेनैतद्विनाकृतम् ॥१७॥

लीलाकृतध्रुवातालयुगं स्यात् स्वेच्छया कृतम् ।
अस्य लक्ष(क्ष्य)-प्रधानत्वाद्व्याख्या लक्ष्यानुसारिणी ॥१८॥

कर्तव्या लक्ष्यतत्त्वज्ञैर्लक्ष्ये[5] लक्ष्म(१) विरोधिनी ।
ग्रहादिनियमो दृष्टोऽनुरोधाच्छास्त्रगोचरः ॥१९॥

लक्ष्येऽन्यस्वरसन्दर्भो मान्यथात्वमिहार्हति ।
स्वस्थानानां चतुष्केण स्वरैः स्वस्थानसंभवैः ॥२०॥

वेणावपि च वीणावद् रागोत्पत्तिरिहोदिता ।
लक्षणेन निरूप्येत यत्र रागस्तु तत्र हि ॥२१॥

---

[1] A. B. दक्षिणपथाश्रिताः ।
[2] B. अव्यादिनी तु यान्यत्र । K. suggests अव्ययादीनि ।
[3] B. तदीरितम् ।
[4] B वेणुष्वति तत् ।

लक्षणस्यं द्वितीयादि ग्रहापेक्ष्यं प्रकल्पयेत् ।
किन्तु ग्रहादधो[१] ये स्युः स्वरा लक्ष्मणि तावताम् ।
यथासंभवमेव[२] स्यात् स्थायी रागेश्वरोऽत्र[३] च ॥२२॥

पात्रं रङ्गं प्रविश्य प्रथमत उचितं चातुरस्यं सुरेखं
देहे धृत्वाङ्घ्रियुग्मं सममय लतया लक्षितं पाणियुग्मम् ।
कृत्वा वामं हृदिस्थं करमपि ललितं प्रायशो [४]नेत्रपात्र-
दक्षः साक्षात्तु तत्तच्चरणमनुगतं नर्त्तनं प्रारभेत ॥२३॥

एकैकं करणं विशिष्टकलया कार्यं गुरुप्रायया
पार्यवयेन तदङ्गहारनिवहेष्वाद्यं हि शेषाण्यतः ।
न्यूनत्वं करणस्य नाप्यधिकता दोषाय तेषु स्फुटं
लक्ष्मस्थं[५] यदसूत्रयत् स्वयमयं वा शब्दमुख्यग्रणीः ॥२४॥

लीनं तत्समनन्तरं सममखं कृत्वा ततो व्यंसितं
पाणी चात्र तु विच्युतौ विरचयन्नालीढकं संश्रयेत् ।
प्रत्यालीढकसन्निवेशविधिनोज्झित्वा तदालीढकं
कार्यं सर्वमशेषमादित इदं सर्वाङ्गहारेष्वपि ॥२५॥

चार्यो युद्धनियुद्धयोर्निगदिता वृत्ति(त्ति)श्रिता भारतीं
नाट्यादित्रितये गतौ च ललितैरङ्गैः प्रयोज्याश्च ताः ।
मुख्यो यः करपादयोस्तदनुगोऽन्यः स्यात् स चाग्रेसर-
स्तत्र स्यात् समकालता तदुभयोः प्राधान्यसाम्ये सति ॥२६॥

वा—

मुख्यत्वं यदि हस्तकस्य चरणस्य स्यात्तदा सोऽग्रगो-
ऽन्यस्य स्यादनुगामितानु समकालत्वं द्वयोः साम्यतः ।
यत्र स्याच्चरणः करस्तदनुगो हस्तस्ततः स्यात्त्रिकं
ह्यङ्गोपाङ्गवप(र्व)स्तदा चरणयोः स्यात् किङ्करत्वाग्रणीः ॥२७॥

इत्यङ्गस्य नियोजनं चरणयोः प्राधान्य आभाषितं
प्राधान्ये करयोस्तदादिगदितं[६] तज्ज्ञैः पदाद्यङ्गकम् ।
चारं[७] चारमुपाश्रय(?)श्चरणयो(:)पृथ्वी यथा स्यात्तथा
कारं कारमपूर्ववत् करयुगं कुर्यात् [८]भवेत्तत्स्थितिम् ॥२८॥

---

[१] A. ग्रहादधो । [२] B. यथासंभमेव ।
[३] B. रोगेश्वरो ।
[४] K. suggests नेत्रपत्रे दक्षं ।
[५] A. लक्ष्म्यस्थं ।
[६] A. B. करयोस्तादिगदितं. K. suggests the above reading.
[७] B. वारवार ।
[८] A. भवेत् स्यितिम् B. भवेत स्थितिम् ।

[१]अर्धेन्दुः स च नाटके स च भवन् सत्पक्षप्रद्योतको
नृत्ते संथयते कटीमय यथाशोभं तु हस्तान्तरम् ।
नेत्रभ्रूवदनास्यरागपवनाद्योपाङ्गकोल्लासिताः
प्रत्यङ्गैरुपबृंहिता [२]इह कराः कार्या रसव्यञ्जकाः ॥२९॥

पात्रैस्तममध्यमैः सुललिताः सुव्यक्तलक्ष्मान्विता
योज्या(ः) सौष्ठवसयुतास्तदितरैस्तद्वैपरीत्यान्विताः ।
भालक्षेत्रगताः सदा सदभिनेये वक्षसः क्षेत्रगा-
स्ते स्युर्मध्यमकेऽधमे त्वपरगाश्चेय व्यवस्था नटे ॥३०॥

श्रेष्ठे[3] सन्निहिता न दूरकलिता मध्येऽधमे दूरगाः
प्रत्यक्षादिषु तत्प्रचार उचितः स्यादल्पताद्यञ्चितः ॥
भीतव्याकुलतन्द्रिमूर्च्छितविषण्णग्लानवृद्धज्वरि-
[४]क्षुत्क्षान्तार्तशयालुतापसजनोन्मत्तप्रमत्तादिषु ।
नो हस्ताभिनयः प्रयोक्तुमुचितः स्यात् कर्कटादिं विना
यस्मात्ते पुरुषस्य भावमखिलं संसूचयन्त्यान्तरम् ॥३१॥

सामस्त्यव्यासयोगे. करकरणमिलद्बाहुसंयोजनैर्या
जायन्ते[५] सत्यरूपा. क्रमत इह रसोल्लासवैचित्र्यतश्च ।
आवर्तावर्तनास्ता रसमनु रुचिराः स्वेन लास्यानुरूपा
याभिनृ(नृं)त्यप्रपञ्चेष्वभिनयचतुराः पाणयोऽनेकशः स्यु. ॥३२॥

रेखाया अनतिक्रमास्तु[६] निपुणं नानाविभङ्गि[७]-स्फुर-
त्सद्भावजवर्तना विचलिताः शोभाभृतो बाहवः ।
रच्यन्ते यदि चालका निगदितास्तज्ज्ञैस्तदा ते पुनः
शर्वाणीचरणानुरागरसिकश्रीकालजिद्भूभृता ॥३३॥

ओन्तारिगोणीमलयं पदं च छायालगस्थध्रुवकान्त्यसंस्थाः ।
हृदि प्रपूर्वा च तदन्त्यखण्डेऽप्यवत्सकस्यापि तथान्त्यखण्डे ॥३४॥

एलादिगामिगजरोपशमान्त्यखण्डे वाद्याश्रिते तु [८]तुडकेऽप्यखिले प्रबधे ।
प्राय. प्रयोगमुपयान्ति भुजाः समस्ता नान्यत्र ते च कथिते(?)सुतरां प्रशस्ताः ॥३५॥

---

[१] A B अर्धेदु ।

[२] B इति ।

[3] B श्रेष्ठेन ।

[४] A B क्षुत्क्षान्तार्तशयालुतापस प्रमत्तोन्मत्तमत्तादिषु । The above change is suggested in order to accord with the metre.

[५] K suggests जायन्तेऽसत्यरूपा ।

[६] K suggests अनतिक्रमात् सुनिपुण ।

[७] B नानाविभृगि ।

[८] A. तुडुके ।

ब्रह्मशैलैकदेशस्थो यो[1] देशानखिलानपि ।
शास्ति तेन तयाभूता परिभाषात्र भाषिता ॥३६॥

यो मूर्ध्नि द्विषतां पदं प्रतिपदं धत्ते पदं स्वं गुणैः
स्फीतैरुन्नमयन् पदार्थमपि यत् स्वं वर्त्मनोल्लङ्घयेत् ।
तेनात्रैकपदे पदे धृतवता कामेन राज्ञा हृदा
शर्वाण्याः पदबन्धहेतुकपदोल्लासः पदे स्थापितः ॥३७॥

इति श्रीजगदीश( श्व )रवनदेवनिजगणेन[2]जगदीश्वरीकामेश्वरीचरणकिङ्करेण श्रीकामाक्षा[3]-गिरिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसर्वाधितयशोभरेण वाटिकाचलग्रहणजनितकीर्त्तिपूरपराजिताचलनायकेन[4]ग(सं)गमतीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण दमनपुरविध्वसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकंभरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरिवारिता[5]-ञ्जनगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनधर्षिता(त)महोरगपुरेण श्रीवनदेवस्वामिप्रसादरचनापर-[6]परमेश्वरेण [7]त्र्यम्बकेश्वरसन्निधिकीर्त्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन [8]श्रीकामाक्षागिरिनवीननिर्मितपराजितसुमेरुणा श्रीमहिषाचलोपरि श्रीहरिशरणविरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्याक्षेत्रसमुद्रसभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजश्रीराजमानमृगाङ्कताभराजनन्दनेन महाराज्ञीश्री-[9]सौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन[10] सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवशावतंसमहाराज्ञीश्रीकर्मवती–[11]लघुमादेवीहृदयाधिनाथेन इति[12] राजाधिराजश्रीकालसेनविरचिते[13] सगीतराजे षोडशसाहस्र्यां सगीतमीमांसाया पाठ्यरत्नकोशे पदोल्लासे परिभाषापरीक्षणं चतुर्थं समाप्तम् ॥

( पदोल्लासश्च समाप्तिमगात् )

---

[1] B. ये ।
[2] K reads जगदम्बिकाकामाक्षी etc. ।
[3] K. reads कामेश्वरी ।
[4] B वलनायकेन ।
[5] K. reads परिवारिताञ्जनादिगिरि etc,
[6] K omits पर ।
[7] K reads अम्बकेश्वर ।
[8] B श्री कामाक्षी ।
[9] A omits श्री ।
[10] K reads हृदयानन्दनेन ।
[11] K adds श्री ।
[12] K omits इनि ।
[13] K reads मालसेनेन विरचिते which is better. ।

# तृतीयश्छन्दउल्लासः

## अनुष्टुब् नाम प्रथमं परीक्षणम्

छन्दानुवृत्तकारीणि यस्यच्छन्दांसि जाग्रति ।
तम (च) छन्दकृतं वन्दे [१]स्वच्छन्दं गिरिजापतिम् ॥१॥

समासेन प्रबन्धानां मूलभूतानि कानिचित् ।
तत्प्रयोगोपयोगीनि छन्दांसि व्याहरामहे ॥२॥

मयरसतजभनसंज्ञाः कथिता अष्टौ गणाः क्रमेणैते ।
विज्ञेया वर्णभावाः प्रस्तारे ते त्रिकाः सर्वे ॥३॥

सर्वगुरादिल उक्तो मध्यलघुः स्यात्तथान्त्यगुरुलघुकौ ।
मध्यगुरादिगुरन्यौ सर्वलघुः स्यात्सर्वैवान्त्यः ॥४॥

पृथ्व्यम्बुवह्निमरुदम्बरसूर्यचन्द्र-
नाकाधिदैवतयुता मगणादयोऽमी ।
श्रीवृद्धिमृत्यु[२]-परदेशफलानवाप्ति-
रुत्कीर्तिसौख्यफलदा मुनिभिः प्रदिष्टाः ॥५॥

टतचपपा मात्राख्या [३]द्वित्रिचतुःपञ्चषट्कला[४] क्रमशः ।
द्वित्रिवेदशर[५]-रसभेदास्तेषामिमे गदिताः ॥६॥

उक्तात्युक्ता तथा[६] मध्या प्रतिष्ठातिप्रतिष्ठिका ।
गायत्र्युष्णिगनुष्टुप् च[७] बृहती पङ्क्तिरित्यपि ॥७॥

त्रिष्टुप् च[८] जगती चातिजगती शक्वरीति च ।
सैवातिपूर्वाष्ट्यत्यष्टी धृतिश्चातिधृतिस्तथा ॥८॥

---

[१] B स्व छन्द ।
[२] B. मृत्युरुपदेश ।
[३] B. द्वित्रि ।
[४] B. कला ।
[५] B. रसशर ।
[६] B. omits तथा ।
[७] B. omits च ।
[८] B. omits च ।

कृतिश्च प्रकृतिश्चैवाकृतिर्विकृतिरेव च ।
संकृत्यभिकृती चैवोत्क्तानि[1] छन्दांसि नामतः ॥९॥

आरभ्यैकाक्षरात् पादात् षड्विंशत्यक्षरावधिः ।
पादैः क्रमादिमानि स्युः मालावृत्तमतः परम् ॥१०॥

एकमात्रो[2] ऋजुरु (र्हु)स्वो लघुर्व(र्ल)घो गुरु पुनः ।
वंको दीर्घो विसर्गो (र्गा)न्तः सानुस्वारो द्विमात्रिकः ॥११॥

[3] अड्ग्रपादिसंयुते वर्णे व्यञ्जने चाग्रगे लघुः ।
पादान्ते वा लघोर्गत्वं वंशस्यादिषु नो पुनः ॥१२॥

पादान्तेऽत्र युतः कार्यो लुप्तालुप्तविभक्तिके ।
आदिकाक्षरविच्छिन्ने[4] पदान्ते च तथाविधे ॥१३॥

नार्ये समाससन्धी स्तो यतिविच्छेदसंज्ञिका ।
[5]ओवित्यवेऽत्र वितेया यतिः श्रुतिसुखा बुधैः ।
यतो मधुरता श्लाघ्या भारत्या भरतादिभिः[6] ॥१४॥

अविशेषे तुरीयांशश्छंदसः पाद इष्यते ।
द्विपद्यादौ द्वितीयांशाधिकः पादो यतः स्मृतः ॥१५॥

उक्ता ग [7]श्रीरत्युक्ता गौर्नृप्ता सा स्त्री मो मध्यायाम् ।
नारी[8] शम्भोः पातु त्वां सा कन्या मो गो प्रतिष्ठा स्यात् ॥१६॥

यथा—

तेयं कन्या गौरी [9]पायाच्छम्भोर्या शैले हृत्स्थे ।
अत्युक्तायां रतिगणा भेदा मध्यानचारतया ॥१७॥

---

[1] A. B. कानि छदांसि । K. reads चैवोक्तानि छन्दांसि ।

[2] B एकमात्र ।

[3] A. The letter after अ is not clear. B. अपादि etc.

[4] A. विछिन्ने ।

[5] A. ऊ चित्ये etc.

[6] A and B include this third line in the 15th. verse.

[7] A B श्री रत्युक्ता ।

[8] A includes नारी in the second foot of the verse

[9] A पातु शम्भोर्या etc

कामस्य तु प्रतिष्ठाया भेदा [1]बाणगता मताः ।
अत्युक्ताया लपूर्वा ये तेष्वादावधिको लघुः ॥१८॥

समासमविभेदेन [2]द्विधानुष्टुबिहोच्यते ।
चित्रपदाभ भगा [3]ग उक्ता विद्युन्माला मौ गौ ॥१९॥

जरौ लगौ प्रमाणिका नाराचमत्र तर्लगाः ।
अनुष्टुप्प्रसना याद्याद्वक्त्रं ये तुर्यतोऽभीष्टम् ॥२०॥

पथ्यावक्त्रं समुद्दिष्टं तुर्याज्जे युग्मपादयोः ।
तुर्या द्वो जे नतं-[4]भरम(?)सैर्न विपुलादयः ।
प्रायस्तुर्यो गस्ता स्वोजे युजि षड्भ्यो लघु. सदा ॥२१॥

पञ्चवक्त्रप्रसादाप्तसाम्राज्येन महीभृता ।
कालसेनेन वृत्ताद्यमनुष्टुप् परिकीर्तितम् ॥२२॥

इति श्रीराजाधिराजमहीमहेन्द्रश्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे छन्दउल्लासे अनुष्टुप्परीक्षणं

प्रथमं समाप्तम् ।

---

[1] A. वाणगणा ।
[2] B द्विधा अनुष्टुप् etc
[3] A. गः
[4] B नतरभ etc.

## वृत्तं नाम द्वितीयं परीक्षणम्

अज्ञातवृत्तं ब्रह्माद्यैः श्रुतवृत्तं महात्मनाम् ।
परिज्ञातजगद्वृत्तं सद्वृत्तं(तं) भजे शि (शि)वम् ॥१॥

अथ वृत्तं प्रकीर्त्यते—

सद्विधा वर्णमात्राभ्यां पद्यं चैव चतुष्पदी ।
समैः पादैः समं वृत्तं द्वाभ्यामर्धसमं स्मृतम् ।
उक्ताभ्यां विपरीतं यत् तद्वृत्तं विषमं स्मृतम् ॥२॥

९. अक्षराणि—
भद्रिका भवति रो नरौ ।

१०. अक्षराणि—
उक्ता मता मभसगयुक्ता ॥

११. अक्षराणि—
१. स्यादिन्द्रवज्रा[1] ततजा गुरू चेत् ॥
२. उपेन्द्रवज्रा त (ज) तजा गयुग्मम् ॥
३. रो नरौ लघुगुरू[2] रथोद्धता ॥
४. स्वागता तु रनभा गुरुयुग्मम् ॥
५ वेदे छिन्ना शालिनी मात्तगौ गौ[3] ॥
६. दोधकमुक्तमिदं भभभा गौ[4] ॥

१२. अक्षराणि—
१. स्यातेन्द्रवंशा ततजैं रसंयुतैः ।
२. वदन्ति वंशस्थमिदं जतौ जरौ ॥
३. जरद्वयं वदन्ति पञ्चचामरम् ॥
४. [5]द्रुतविलम्बितमत्र नभौ भरौ ॥
५. इह तोटकमम्बुधिसैः प्रथितम् ॥
६. गणैर्यैश्चतुर्भिर्भुजंगप्रयातम् ॥
७. [6]संमता स्रग्विणी रैश्चतुर्भिर्युता ॥

---

[1] A स्यादिदवज्रा
[2] B गुरुलघू
[3] A B गैं ।
[4] A B गं ।
[5] A द्रुत B. द्रत ।
[6] A. B. समता ।

१३. अक्षराणि—

[1]त्रिच्छेदा मनजरगाः [2]प्रहर्षिणीयम् ॥

१४. अक्षराणि—

ख्याता वसंततिलका भ(त)भजा जगौ गः ॥

१५ अक्षराणि—

वसुयतिरियमुक्ता मालिनी नौ मयौ यः ॥

१६. अक्षराणि—

भ्रौ ननना गुरुश्च वृषभुजगविलसितम् ॥

१७. अक्षराणि—

गुहास्यैवि(र्वि)श्रान्तिर्यमनसभलागः शिखरिणी ॥

१८. अक्षराणि—

१. नसमतभरास्तुर्यैः षड्भिश्चेद्यतिर्हरिणीपदम् ॥

२. यतौ न्यो(न्यौ)यः सोऽत्र मुनिभिरिय चित्रलेखा गदिता ॥

१९ अक्षराणि—

आदित्यैर्यदि मः सजौ सततगाः [3]शार्दूलविक्रीडितम् ॥

२०. अक्षराणि—

अश्वैश्छिन्ना सुगीता मरभनयभलागाङ्कै. सुवदना ॥

२१. अक्षराणि—

विख्याता स्रग्धरेयं मरभनययया सप्तकाश्वैर्यतिश्चेत् ॥

२२. अक्षराणि—

पङ्क्तिर्यतौ भरौ नरनरा नगौ भवति [4]मद्रकं सुललितम् ।

२३. अक्षराणि—

रौ न रौ नरनरा लगाविह भवन्ति चेद्भवति चित्रकं तदा ॥

२४. अक्षराणि—

ननभनजननाश्च यगणसहिता मुनियतिललित–[5]लतेयम् ॥

२५. अक्षराणि—

पङ्क्त्या विरतौ तो यो भभनाननन[6]-गुरु किल हरिणशिशुनयना ॥

---

[1] A त्रिछेदा ।

[2] B. प्रहर्पणीयम् ।

[3] A. शार्दूल ।

[4] B मद्रक ।

[5] B मुनियतिललितेयम् ।

[6] B omits third न ।

२६. अक्षराणि—

अत्राष्टाभी रुद्रैश्छिन्नं ममतननरसलगुगा भुजङ्गविजृम्भितम् ॥

अथवा—

नजनस(न)भा ननगणलच(ग)का इति वसति भवति सततंगतिः ॥

अथ दण्डकाः—

शेषजात्यादिकं मुक्त्वा षड्विंशत्यक्षराधिकम् ।
यत्किंचिद्दृश्यते छन्दस्तत्सर्वं दण्डकं विदुः ॥
[1]नद्वयं रगणाः सप्त [2]चण्डवृद्धिरुदाहृता[3] ॥३॥

अथार्णार्णवव्याल[4]-जीमूतलीला-
करोद्दाम[5]-शङ्खादयः स्युः प्रबन्धाः ॥
परं चोत्तरेणोत्तरेणैकेन
प्रवृद्धाश्च ते रेण विद्वद्भिरूह्याः ॥४॥

एवं मालादिवृत्तानि भवन्त्यन्यान्यनेकशः ।
यथेष्टं रचितानेकशुभनामान्यनुक्रमात् ॥५॥

चरणो यावदेकोनसहस्राक्षरनिर्मितः ।
मालावृत्तानि तावत् स्युरित्यादिष्टं महीभुता ॥६॥

अथवा वर्णयुग्वृद्ध[6]सहस्राक्षरनिर्मितः ।
पादो भवति तावत् स्युर्यथेष्टमिह दर्शनात् ॥७॥

तथाष्टादिभी रैः पदैर्नाद्गुरोः स्युः
परं पन्नगाद्याः प्रबन्धाः परेऽपि ।
ते च दम्भोलिहेलावलीमालती-
केलिकङ्केलि[7]-लीलाविलासादयः ॥८॥

यथेष्टं रगणैः प्रोक्तो लघुपञ्चकतः परैः ।
चण्डकालोऽथ यैः सिंहविक्रान्तो लघुपञ्चकात् ॥९॥

---

[1] K. suggests तद्वय ।

[2] चण्डवृद्धि is also known as चण्डवृष्टि in some works on Prosody. (cf. Chandaḥ-Prabhākara by Bhanu Kavi, Daṇḍaka-Prakaraṇa).

[3] A. हृत. ।

[4] A. B. व्याज ।

[5] A. करोद्दाम B. करोद्दाम ।

[6] B. वर्णयुग्युद्ध ।

[7] A. B. कङ्केल्लि ।

ल ख(ष)ट्कादगत्रयाच्चापि यथेष्टं यगणैः परैः ।
मेघमाला दण्डकोऽयं प्रबन्ध. सम्मतः सताम् ॥१०॥

स्वेच्छया रगणैः प्रोक्तो मत्तमातङ्गसंज्ञकः ।
कुसुमास्तरणस्तद्वद्यथेष्टं सगणैरिह ॥११॥[1]

सिंहविक्रीडको नाम स्वेच्छया यैः प्रयोजितैः ।
निरन्तरं लघु-गुरू यत्र सोऽनङ्गशेष(ख)रः ॥१२॥

प्रयुज्यते गुरुलघू साशोकपुष्पमञ्जरी ।
यथेष्टं नगणाश्चान्ते गद्वयं कामबाणकः ॥१३॥

यथेष्टा भगणा गौ च स्याद् भुजङ्गविलासकः ।
गद्वयात् स्वेच्छया पञ्चमात्रैरुत्कलिका मता ।
एकैकगणवृद्ध्या स्युरेवमेते ह्यनेकधा ॥१४॥

श्रुतेन यस्य वृत्तेन पवित्रीक्रियते जगत् ।
तेन श्रीकालसेनेन [2]वृत्तमत्रोपवर्णितम् ॥१५॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे छन्दउल्लासे वृत्तपरीक्षणं नाम द्वितीयं समाप्तम् ।

---

[1] B. omits this verse.

[2] A B वृत्तमात्रोपवर्णितम् ।

# आर्यावलोकनं नाम तृतीयं परीक्षणम्

सुरासुरैर्नमस्कार्या[1] स्वकार्यापेक्षयैव या ।
योगिभिश्च हुवा धार्या तामार्यामहमाश्रये ॥१॥

प्रथमेऽर्धे जः षष्ठोन्लौ वा गः सप्तमो न विषमे जः ।
अपरेऽर्धे लः षष्ठो लक्ष्मेदं नियतमार्यायाः ॥२॥

पूर्वार्द्धे षष्ठेन्ले तल्ले पूर्वे यतिरिह मुनिगणगे ।
तस्मिन् षष्ठप्रान्ते यतिरुदिता मुनिभिरिह मुख्यैः ॥३॥

अपरार्द्धे पञ्चमकेन्ले सति सोक्ता चतुर्थगणनिधने ।
श्रीकालसेननृपतिर्युक्तामिह वदति तामार्याम् ॥४॥

[2]यस्यामर्धद्वितये भवति यतिश्चत्रयेऽत्र सा पथ्या ।
पूर्वार्द्धे मुखचपला चत्रययतिविरहिता सदाभिमता ॥५॥

जघनविपुला परार्द्धे चत्रययतिविरहिता गदिता ।
प्रोक्ता द्वयोर्द्वयोर्या यतिरहिता चत्रये महाविपुला ॥६॥

शेषा विस्तरभीत्या भेदा नोक्ता मया सुधिया ।
जगणविहीना विषमे चत्वारः पञ्चयुजि चतुर्मात्राः ॥७॥

द्वौ षष्ठाविति चगणास्त[3]-द्घातात् प्रथमदलसंख्या ।
एवमपरार्द्धसंख्या षष्ठे स्याल्लघुनि चैक एकस्मिन्[4] ॥८॥

आर्या(ऽ)संख्योभयदलसंख्याघाताद्विनिर्दिष्टा ।
अन्योऽन्यं प्रथमदले ताडनषाष्टौ शतानि जायन्ते ॥९॥

अर्कसहस्राण्येवं चरमेऽर्धेऽन्योन्यताडनया ।
षट्साहस्री गदिता चतुःशती चाप्युभयदलविकल्पाः ॥१०॥

अन्योऽन्यं ताडनया जायन्ते कोटयश्चाष्टौ ।
[5]लक्षाणामेकोना विंशतिरिह विंशतिः सहस्राणाम् ॥११॥

आर्याभेदा उक्ताः षष्ठे ले त्वेक एकस्मिन् ।
आर्यैवेयं गाथा प्राकृतभाषापये विनिर्दिष्टा ॥१२॥

---

[1] *B.* नमस्कारा ।
[2] *B.* यस्यामर्धे द्वितीये ।
[3] *K. reads* स्तद्घातात् *and suggests* स्तद्योगात् ।
[4] *B.* चैकस्मिन् ।
[5] *B.* लक्षाणामेनोना ।

गीतिविशेषानधुना शिवजायासेवको ब्रूते ।
द्विर्यस्या आर्याया अभ्यासो जायते दले प्रथमे ॥१३॥

सा तन्नाम्ना गीतिः स्यादुपगीतिस्तवा चरमे ।
दलयोरत्रोभयो. स्यादुग्दीति. कृते विपर्यासे ।
तत्तन्नाम्ना सर्वा जायन्ते [1]भेदतो ह्यमिताः ॥१४॥

त्रिंशन्मात्रास्तु पूर्वार्द्धे विंशतिः सप्त चापरे ।
सप्तपञ्चाशदुभयोर्मात्रा ज्ञेयास्तु योगतः ॥१५॥

त्रिंशतो येऽधिका वर्णा द्विगुणास्ते त्रयाधिका. ।
[2]लघवस्तेऽत्र विज्ञेयाः [3]शेषास्तु गुरवो मताः ॥१६॥

ऊनिता अथवा वर्णैर्मात्राः स्युर्गुरवोऽखिलाः ।
गुरुभिस्तूनिता वर्णा लघवः परिकीर्तिताः ॥१७॥

[4]वसन्तोत्सवबन्धः स्याल्लघुभिः [5]पञ्चमात्रिकैः ।
द्विपद्यन्ते तथा गीतौ द्विभङ्गिः परिकीर्तितः ॥१८॥

द्विपद्यादौ तथा गीतिरन्ते मध्येऽवलम्बकम् ।
स त्रिभङ्गिर्द्विपदिका दद्वयं चाप्यदद्वयम् ॥१८॥

लघुद्रौ च तथादौ लास्त्रयः कर्पूरपूर्विका ।
तिर्यिच्छेदेऽस्त्रवचैर्नेऽन्त्ये द्विपदी विषमे वि(ऽपि)जे ॥२०॥

इति वा—

यतिर्वैचित्र्यतः सप्तचगणैः स्युः परा अपि ।
लयोऽथ भ्रमरपदमुपपूर्वं तदेव हि ॥२१॥

कुङ्कुमो गरुडपदं हरिणीपदमेव च ।
कमलाकरं[6] भ्रमररुतं स्याद्रत्नकण्ठिका ॥२२॥

कुङ्कुमतिलकावली–कदलीपत्रमित्यपि ।
एवमाद्यैस्त्रिभिर्द्वाभ्यां योगे स्याद्रस्त्वनेकशः ॥२३॥

---

[1] B. भेदितो ।
[2] B. लघवस्तत्र ।
[3] B. श्शेषातु ।
[4] A. B. वसन्तोत्सवः प्रबन्धः etc ।
[5] A. पचमात्रकैः । B. पचमातृकै. ।
[6] B. adds च after कमलाकर ।

चतुर्मात्रद्वयं पञ्चमात्रं[१] स्यात् खञ्जनामकः ।
षण्मात्रश्च चतुर्मात्रस्त्रिमात्रश्चोपखञ्जकम् ॥२४॥

षण्मात्रौ द्वौ चतुर्मात्रौ खञ्जिकायावलम्बकम् ।
एते त्रयः पृथग्भेदास्त्रिभङ्गिः स्यात् परैरपि ॥२५॥

त्रिभिर्मनोहरैश्छन्दोभिः[२] स्वेच्छाग्रथितैरपि ।
[३]चद्वयं लघुकान्तौ द्वौ तगणौ चगणद्वयम् ॥२६॥

भगणः[४] सद्गुरुः पादैश्चतुर्भिर्वस्तुकं भवेत् ।
विषमे सप्त मात्राः स्युः समे यस्य त्रयोदश ॥२७॥

स रासो विषमे पञ्चमात्रौ द्वौ च तयैकदा[५] ।
युग्मे च चत्रयं पञ्चपदी मात्रादिरीरिता ॥२८॥

आसां तृतीयपादस्य प्राप्ते स्यात् पञ्चमेन तु ।
अन्ते तु दोहके वस्तुरडा[६] (?) वा परिकीर्तिता ॥२९॥

आद्यन्तयोश्च षण्मात्रे चत्रये मध्यगे सति ।
समे जो वस्तुवदनमोजेजोन्लौ विकल्पतः ॥३०॥

स्यात्रासावलयं पूर्वं मोजश्च [७]चपपौ (पा?) ततः ।
पचतेभ्यः परे ते स्याद्वदनं चोपपूर्वकम् ॥३१॥

पचचाद्यो वदनकं यमिते तेऽडिलाः स्मृताः ।
स्यादष्टपद्चतुष्पाच्च धवलं तन्निरूप्यते ॥३२॥

श्रीयशसो गुणपूर्वं [८]क्रमाद्दोजे तु चत्रयम् ।
[९]दशमे चौ श्रीधवलं तथाद्ये च तृतीयके ॥३३॥

तथाविधे द्वितीये च तथा तुर्ये तु चत्रयम् ।
पञ्चमे सप्तमे द्वौ चौ तश्चैकः समयो(:)पुन ॥३४॥

---

[१] A. मात्र ।
[२] A. B. त्रिभिर्मनोहरैः छन्दोभि. ।
[३] A. B. looks like वद्वय ।
[४] A. B. भगणश्चद्गुरो. K. suggests the above reading.
[५] A. तयैक्दः B. तयैकद ।
[६] A. डा is not clear. B. leaves space blank for the indis letter.
[७] B मोजश्चपपौ ।
[८] A. तत्क्रमादोजे । B. तत्रमादोजे । K. suggests the above reading.
[९] B. दसमे ।

चद्वय दस्तया चैकदत्रत्रय वा यदा परम् ।
धवल तु [1]पड्गो त्वाद्ये चतुर्थे(ऽपि)तु [2]पद्वयम् ॥३५॥

द्वौ [3]द्वितीये पञ्चमे तु दौ षष्ठे च तृतीयके ।
पद्वयाच्चेऽत्र पे कीर्तिधवल चतुरङ्घ्रिके ॥३६॥

पश्चौ जे प च वा दस्तो [4]थात स्याद्गुणपूर्वकम् ।
आद्ययो [5]पदचत्रयं च प्रत्येक त्वन्त्ययोस्तथा ॥३७॥

पञ्च चा सर्वपादेषु [6]चात्ततो दोऽस्य मङ्गलम् ।
आदिस्थे वदनाद्ये तु तदाद्य [7]धवलादिकम् ॥३८॥

यथाह—

उत्साहहेलावदनाडिलाद्यैर्यद् गीयते मङ्गलवाचि किंचित् ।
तद्रूपकाणामभिधानपूर्वं छन्दोविदो मङ्गलमामनन्ति ॥३९॥

[8]चत्रय दो यदा पादे तदा [9]कम्बडक मतम् ।
यत्ता(त्सा) ध्रुवकसंज्ञेय [10]ध्रुवा त्रेधा मता सताम् ॥४०॥

षट्पदी [11]चतुष्पदी च द्विपदी चेति नामभि ।
सप्तादिसप्तदशान्तकला [12] पादास्तु पूर्वयो ॥४१॥

तत्र सप्तकले चतो पदौ गणौ मतौ ।
अष्टाक्षरे पतौ पदौ नवाक्षरे पतौ पचौ ॥४२॥

चद्वय दोऽथवा पौ च चरणे तु दशाक्षरे ।
चपदा पञ्च(च)दा वापि रुद्रार्णे चरणे गणा ॥४३॥

चपता पचता वेति पादे द्वादशवर्णके ।
त्रयोदशाक्षरे पादे पौ तश्च तयका स्मृता ॥४४॥

---

[1] A. पट्द्गो ।
[2] B पद्वयम् ।
[3] B द्वितीये तु पचमे ।
[4] B वातु ।
[5] B पचत्रय ।
[6] A B चाततो । K suggests the above reading
[7] A धवलादिकान् । B. धवलादिक ।
[8] B चत्रय ।
[9] K *suggests कम्बलकम् ।*
[10] B ध्रुवो ।
[11] A चतुपदी ।
[12] B काला ।

चत्रयं दास्तु पश्चौ च चरणे तु चतुर्वशे ।
चत्रयं तोऽथवा पानां त्रयं पञ्चदशाङ्घ्रिके ॥४५॥

चद्वयं चः षोडशाङ्घ्रौ [1]दचदुष्कं तु चद्विकम् ।
पादे सप्तदशकले पश्चौ [2]तश्च त्रयं तु पः[3] ॥४६॥

एवं गुणै[4]स्त्रिभिस्तुल्यै स्तुल्यातुल्यैरतुल्यकैः ।
[5]पादत्रयं भवत्यर्धे षट्पदी सा प्रकीर्तिता ॥४७॥

अस्यामाद्यस्य पादस्य द्वितीयेन तथा पुनः ।
तृतीयस्य तु षष्ठेन तुर्यस्य पञ्चमेन तु ॥४८॥

अनुप्रासस्तु[6] कर्तव्यश्चतुष्पद्यामथोच्यते ।
प्रथमस्य द्वितीयेन तृतीयस्येतरेण तु ॥४९॥

अनुप्रासस्तु कर्तव्यः प्रायेण द्विचतुर्थयोः ।
चतुष्पदी विशेषास्तु वस्तुकार्यसमादयः ॥५०॥

[7]ओ(?)जे कलास्तु सप्ताद्याः षोडशान्ताः समे पुनः ।
प्रत्येकं सैकिकाः सप्तदशान्ताः परिकीर्तिताः ।
व्यामिश्रार्धसमासर्व-[8]समा(ऽ)संकीर्णकाश्च ताः ॥५१॥

चम्पककुसुमसामुद्रकमल्हणकसुभगविलास-[9]केसररावणहस्तकसिंहविजृम्भितमकरन्दिका-रविलसित-[10]पञ्चककुसुमावर्त ॥

मणिरत्नप्रभाकुङ्कुमतिलक-[11]चम्पकशेखरक्रीडनबकुलामोदमन्मथतिलकमालाविलसि-ग्रामलकनवकुसुमितपल्लवाः ॥

---

[1] B. omits द before चतुष्क ।

[2] A. त. च । B. त च । [3] A. प ।

[4] B. एव ग गुणै ।

[5] A. B पादत्रय भवत्यर्धे ।

[6] B. reads अनुप्रासस्तु कर्तव्यो धीमता द्विचतुर्थयो, and omits the second line of verse 49, taking the second line of verse 50 after this line. The similarity in the initial portion of verses 49 and 50 ( अनुप्रासस्तु कर्तव्य ) seems to have caused this confusion

[7] B. ओ ओ जे कलास्तु ।

[8] A B. समा सर्व सर्व etc.

[9] B केसर ।

[10] K suggests चपक ।

[11] A पंचक शेपर । B. चपक शेपर ।

मलयमारुतमवनावासमाङ्गलिकाभिसारिकाकुसुमनिरन्तरमदमोदकचन्द्रोद्योतरत्नावल्यः ।

भ्रूवकणकमुक्ताफलमालाकोकिलावलीमधुकरवृन्दकेतकीकुसुमनवविद्युन्मालात्रिवलीतरङ्गकाणि ॥

अरविन्दकविभ्रमविलसितवदन नवपुष्पन्धयकिन्नरमिथुनविलासविद्याधरविलसितलीलासारङ्गाः ॥

कामिनीहासापदोहकप्रेमविलासकाञ्चनमालाजलधरविलसिताः ॥

अभिनवमृगांकलेखासहकारकुसुममञ्जरीकामिनीक्रीडनक[१]-कामिनीकङ्कणहस्तकाः ॥

मुखपालनतिलकवसन्तलेखामधुरालापिनीहस्ताः ॥

मुखपंक्तिकुसुमलतागृहे ॥

रत्नमाला च—

इति पञ्चपञ्चाशद्भेदाः ॥

ध्यत्य(?)से सुमनोरमापङ्कजकुञ्जरमदनातुरभ्रमरावलीपङ्कजश्रीकिङ्किणीकुङ्कुमलताशशिशेखरलीलालयाश्चन्द्रहासगोरोचनाकुसुमबाणमालतीकुसुमनागकेसरनवपञ्चकमालाविद्याधरकुब्जककुसुमकुसुमास्तरणाः ।

मधुकरीसंलापमुखवासः कुङ्कुमलेखाकुवलयदामकलहंससंध्यावलीकुञ्जरललिताकुसुमवल्यः ।

विद्युल्लतापञ्चाननललितामरकतमाला ॥

अभिनववसन्तश्रीमनोहराक्षिप्तिकाकिन्नरलीलाः ॥

मकरध्वजहासकुसुमाकुलमधुकरभ्रमरविलासमवनविलासविद्याधरहासकुसुमायुधशेखराः॥

उपदोहकदोहकचन्द्रलेखिकासुतालिङ्गनकङ्केल्लिलताभवनानि कुसुमितकेतकीहस्तकुञ्जरविलसितराजहंसाशोकपल्लवच्छायाः ।

अनङ्गलतामन्मथविकसितहुल्लणकानि ।

कज्जललेखाकिलकिञ्चिते शशिबिम्बितं चेति ता बद्धाः ॥

शुद्धद्विपदिकापादे षश्चाः पञ्च च गान्तकाः ।

जो (जौ) स्तः षष्ठद्वितीयौ तु मात्राद्विपदिका ततः ॥५२॥

षष्ठेनैकेन गुरुणा पूर्णा शुद्धैव गान्धिकाः ।
षश्चद्वयं मानवी स्या(त्) पौ तौ लौ चन्द्रिका मता ॥
षश्चत्रयं धृतिस्तारान्तगा [१]षप्पचतुष्टयम् ॥५३॥

[१] B. पुष्पचतुष्टयम् ।

इति द्विपदी ॥

आनन्त्यात्र प्रतन्यन्ते[1] द्विपद्यादेर्भिदा मया ।
प्रबधविधिहेतुत्वात्काश्चिदेव[2] हि वर्णिता ॥५४॥

कलहसो नभौ जयौ ।

यो गणद्विपदी नाम चतो सा स्वरपूर्विका ।
उपगन्धर्वक नाम पत्रय चचतुष्टयम् ॥५५॥

दशार्कवसुभि श्चान्तौ[3] (?) तत्सगीत[4] यतो पुन ।
चतुर्दशाभिरष्टाभिश्च चरीप (?) श्च सप्तकम् ॥५६॥

त्रिमात्रस्य यतिश्चात्र चतुर्दशाभिरष्टभि ।
चतुर्भिश्च गणै प्रोक्ता पद्धडी, रासक पुन ॥५७॥

मात्राभिरष्टादशभिर्नगणेन यतो पुन ।
चतुर्दशाभिरेवाय मात्राभि कथितो बुधै ॥५८॥

केषाचिज्जातय सर्वा रासका समते मता ।
[5]चपञ्चक लघुगुरू यदि वा रासको मत ॥
गोपालानां तथा क्रीडा रास इत्यभिधीयते ॥५९॥

विश्वे मे नवतिपयो गुणचन्द्रो शरविधो शिखीन्दू च ।
तिपयो विश्वे विषमे समे तु रत्यर्कविश्वमनुरवय ॥६०॥

गुणचन्द्रो युगचन्द्रो षोडशसंख्याकला क्रमश ।
सारसभ्रमरो[6] हंस कुररश्चप्रलेखश्चैव ।
कुञ्जरतिलको हंसक्रीडो ह्येतेषु निर्दिष्टा ॥६१॥

लघुभि पञ्चाशिभिरिह यद्येवामद (?) यो [*] शिखान्ते स्यात् ।
तं सूरयो मयूरं नाम शिखाद्विपदं प्राहु ॥६२॥

---

[1] B आनन्त्यात्र तायन्ते ।
[2] A B. कारिचदोपर्यान्ता । K suggests the above reading
[3] K. suggests श्चान्ते but perhaps ग्यान्ते or गान्ते can make some sense
[4] B गम्यगीत यतो ।
[5] B च पंचक ।
[6] B. सारसभ्रमरो ।
[*] A The letter between म and यो is not at all distinct, it can be read as ञ ।

रतिरष्टदशमैः कामगणैस्त्रिपदी मता ।
एकादशभिराद्यौ तु मात्रौ द्विद्विगुणौ मतौ ॥६३॥

चतुर्गुणस्तृतीयस्तु चतुर्थस्त्रिग(गु)णस्तदा ।
[1]यस्यामोजे पञ्चदश कलाः षोडश ताः समे ॥६४॥

अर्धयोर्भिन्नयमकौ कीर्तिता सा चतुष्पदी ।
बाणान्ते चरणौ त्रित्रिगणौ यस्यास्त्रिपष्ठकौ ॥६५

चत्वारो द्विद्विगणा सा गणैः कामस्य षट्पदी ।
तृतीये पंचमे चाद्ये मात्राः पञ्चदशैव तु ॥
तुर्ये द्वितीये रवयस्तद्वस्तु परिकीर्तितम् ॥६६॥

प्रबंधस्योपयोगीनि छन्दांस्युक्तानि कानिचित् ।
छन्दःशास्त्रानुसारेणोहनीयानि पराण्यपि ॥६७॥

यस्यार्या धर्मकामार्थं चरितं पर्युपासते ।
तेनार्याकिङ्करेणेदं कृतमार्यावलोकनम् ॥६८॥

इति श्रीराजाधिराजकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे पाठ्यरत्न छन्दउल्लासे आर्यावलोकनं नाम तृतीयं परीक्षणम्[2] ।

---

[1] B. यास्या ।
[2] B. adds समाप्तम् ।

## प्रस्तारपरिपाटी नाम चतुर्थं परीक्षणम्

येन प्रस्तारमाधातुं भूतानां भूतयोनिना ।
प्रसूतं परमाण्वादि नमस्तस्मै परात्मने ॥१॥

समवृत्तस्य तु पादे[1]-ऽर्धसमस्यार्धेऽखिले तु विषमस्य ।
ये वर्णाः स्युर्गुरवः प्रथमविकल्पे तु ते स्थाप्याः ॥२॥

प्राग्रूपस्याद्याद्गोऽधो ल(:)स्यादुपरि समं तु परम् ।
प्रस्तारे [2]पूर्वविधिस्समयभेदकृदिह भवेत् प्राज्ञः ॥३॥

भूयः कुर्याद्विधिममुं यावत्सर्वलघुर्भवेत् ।
मात्रागणे तु प्राग्रूपमात्रापूर्त्ति नयेत् सुधीः ॥४॥

चरणस्य व्यवस्योक्ता नार्यादि (षु) पुरातनैः ।
नष्टाङ्के विषमे सैके गुरुः स्यादर्धिते पुनः ॥५॥

समे चार्धे तदर्धे च नष्टाङ्के लघवो मताः ।
प्रारभ्याद्याद्द्विगुणितानेकतो-[3]ऽङ्कान् समालिखेत् ॥६॥

सैकैर्युक्तैर्लघुकैरुद्दिष्टस्य मितिर्भवेत्[4] ।
उद्दिष्टाङ्कसमाहारात् सैकात् संख्यापि लभ्यते ॥७॥

येन वर्णादिवृत्तानां विन्यासः प्रसृतो भुवि ।
तेन श्रीकालसेनेन प्रस्तारोऽयं प्रपञ्चितः ॥८॥

इति श्रीजगदीशवनदेवनिजगणेन जगदीश्वरीकामाक्षा[5]-चरणकिङ्करेण श्रीब्रह्माद्रिविभुना अभ्युप्दतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसवर्धितयशोभरेण धाटिकाचलग्रहणजनितकीर्तिपुरपराजिताचलनायकेन सगमनीरदुर्गोद्धरणो-[6]द्धृतसकलमण्डलाधीश्वरेण दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरि-

---

[1] B. पादेर्धंसमस्यार्धे ।

[2] B. पूर्वविधिरसमय ।

[3] B. नेक्तोवान् ।

[4] One syllable is wanting in this line according to the metre.

[5] K. reads कामाक्षी ।

[6] K. omits द्धरणो in दुर्गोद्धरणोद्धृत ।

वारिताञ्जनगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनर्धपितमहोरगपुरेण श्रीवन-देवस्वामिप्रसादरचनापरपरमेश्वरेण त्र्यम्बकेश्वरसन्निधिकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्म-गिरिभौमस्वर्गयथार्थीकरणरचितचारुपथेन श्रीकामेश्वरीगिरिनवीननिर्मितिपराजितसुमेरुणा श्रीमहिपाचलोपरिश्रीहरिचरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकाल-[१]कालरात्रिरूपेण त्रिसन्ध्या[२]-क्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन [३]महाराजाधिराजमहाराणाश्रीमृगाङ्कामराजनन्दनेन महाराज्ञीसौभाग्यवतीजसमाम्बिकाहृदय-नन्दनेन सकलसीमन्तिनीशिरोमणिकुम्भराजन्यावतंसमहाराज्ञीश्रीकर्मवतीलपु(घु)मावतीहृदया-धिनायेन[४] श्रीराजाधिराजश्रीकालसेनेन विरचिते सगीतराजे षोडशसाहस्र्या सगीतमीमांसायां पाठ्यरत्नकोशे छन्दउल्लासे प्रस्तारपरिपाटी नाम चतुर्थं परीक्षणम् ।

॥ छन्दउल्लासस्तृतीयः समाप्तः ॥

---

[१] A. omits one काल ।

[२] A. सन्ध्य ।

[३] K. omits महाराजाधिराज ।

[४] B. adds इति after नायेन ।

# चतुर्थोऽलंकारोल्लासः

## उद्देशो नाम प्रथमं परीक्षणम्

क्रियते स्वस्वसिद्धान्तैस्तीर्थिकैर्यस्य लक्षणम् ।
बुधादिलक्षणं नौमि तमसत्सिद्धिलक्षणम् ॥१॥

प्रमदा इव नो भान्ति प्रबन्धाः सुष्ठ्वलंकृताः ।
विलक्षणा अतस्तानि(?)ब्रू(ब्रु)वेऽलंकृतिभिः सह ॥२॥

विभूषणं तथा शोभाभिमानोऽक्षरसंगतिः ।
प्रोत्साहनोदाहरणे निरुक्तं गुणकीर्तनम् ॥३॥

गुणानुवादोऽतिशयो हेतुसारूप्यसिद्धयः ।
पदोच्चयाक्रन्दमिथ्याध्यवसायप्रियाशिषः[१] ॥४॥

प्राप्तिश्च पश्चात्तपनं संशयोत्यानुवर्तनम्[२] ।
कार्यनिर्भासिनाख्यान[३]-[४]याचृन्यायुक्त्यनुनीतयः[५] ॥५॥

दृष्टान्तप्रतिषिद्धौ (षेधौ) च क्षमा श्रद्धा ततः परम् ।
मनोरथोपपत्ती च कपटं परिदेवनम् ॥६॥

षट्त्रिंश-[६]दुक्तान्येतानि लक्षणानि समासतः ।
उपमाद्यैरलङ्कारैः सम्मितानि च ते यथा ॥७॥

उपमा दीपकं चैव रूपकं यमकं तथा ।
चत्वारोऽमी समादिष्टा अलंकारा पुरातनैः ॥८॥

लक्षिता लक्षणैरेभिर्नानावृत्तैर्विचित्रिताः ।
बुधैः प्रबन्धाः कर्तव्या नानालंकृत्यलंकृताः ॥९॥

अल्पमुद्दिश्यते येन दीयते बह्वहर्निशम् ।
तेन भूपितविज्ञेन राज्ञोद्दिष्टं विभूषणम् ॥१०॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे अलंकारोल्लासे उद्देशपरीक्षणं प्रथमं (समाप्तम्) ।

---

[१] A. प्रियाशिश (?) B. प्रियाशिखः ।
[२] K. suggests संशयोऽर्थानुवर्तनम् ।
[३] K. suggests निर्भर्त्सनाख्यान ।
[४] A. B. याचा ।
[५] B. युक्तानुनीतयः ।
[६] B. षड्विंशत्रिंश ।

## लक्षणं नाम द्वितीयं परीक्षणम्

महाभूतादिकानर्थान् योऽञ्जसा[1] सृजतीश्वरः ।
अलङ्कृतिनिमित्तं तं पदार्थानां नमाम्यहम् ॥१॥

यथारस येषु निरूपितेषु भवन्त्युपादेयगुणा प्रबन्धाः ।
तदत्र शोभाजननार्थमेषा प्रचक्ष्महे भूषणलक्षणानि ॥२॥

अलङ्कारैर्गुणैश्चैव भूषणैरिव यद्युतम् ।
रूपकं रसवद्भाति तद्भूषणमितीरितम् ॥३॥

यथा—

उच्चस्फाटिकहर्म्यभित्तिविसरत्सत्पद्मरागांशुभि[2]
सिन्दूरप्रकरैरिवातिविततैर्नित्य[3] वसन्तोत्सवे ।
चन्द्रद्वेमघटावतंसविलसमाना[4]-निलिम्पालयै-
रिन्द्रस्येव पुरी विभाति सततं श्रीब्रह्मशैलालयः ॥४॥

इति विभूषणम् ॥१॥

पूर्वसिद्धार्थवाक्येन प्रसिद्धार्थस्य साधनम् ।
यत्र श्लक्ष्णविचित्रार्थां तां शोभां जगदुर्बुधाः ॥५॥

यथा—

श्रीकृष्णेन किरीटिनेव शतशो दन्दह्यमाने कुले
शाके कौरववत्सुयोधन इव त्वय्येकशेषं गते ।
त्वं रे मालवभूमिनाथ कुरुषे नो चेन्मदीयं वच-
स्तन्मन्ये "विधिनात्तमीप्सितं इद मन्थ्य च शाठ्यं रणे[5] ॥६॥

इति शोभा ॥२॥

---

[1] A B योजसा ।
[2] B विसरसत्पद्म ।
[3] A विततैर्नित्यै । B विततैर्नित्यै ।
[4] In the place of नि B gives the mark for इ( f ) but omits न and लपालयै follows
[5] B विधिनातमीप्सित । K suggests विधिना त्वमीप्सित ।
[6] B omits च before शाठ्य, but space is left blank for one letter

राहेतुकैर्यो वचनै प्रतिषिद्धोऽप्यनेकश [१] ।
न निवर्तेत यत्रासावभिमान इति स्मृत ॥७॥

यथा—

ये नानर्गलदुर्गवर्गजयिना(नो) नाजीगणन् वैरिणो
दुर्गाप्तयो हि कुरङ्ग एव [२] समरे भूपेन शौर्याहुत ।
ध्वस्ते भीतमभूदल शककुल श्रीशुवलपूर्व पुरे
त्व शेषोऽसि विमुञ्च गर्वमधुना [3] स्व जीवित पालय ॥८॥

इत्यभिमान ॥३॥

सश्लेषोऽर्थाक्षरगतो यत्र वैचित्र्यभाग्भवेत् ।
तामत्यक्षरविन्यासा विदुरक्षरसगतिम् [५] ॥९॥

यथा—

या सुलभानसुरेशान् सुरतरु परिजनेन तामस्मै ।
वितरति [६] कालुजिभूपतिरभिमतततिमभिमुखीभूत ॥१०॥

इत्यक्षरसगति ॥४॥

[७]यत्रास्पष्टगुणोपेतै सोपमानैर्वचोभरै ।
गूढार्थैर्नायकोत्साहयोग प्रोत्साहन तु तत् ॥११॥

यथा—

उद्दण्ड पटहध्वनिर्घनघनप्रध्वाननाभैरवो [८]
हे (है) या तुङ्गतुरङ्गमाप्रयखुरलीशब्दानुगा श्रूयते ।
दिग्दन्तावलदन्तभेदनपटुर्वीरालिसिहध्वनि-
भिन्दिन् शैलशिलोच्चयान् पुनरहो कस्मादकस्मादिव ॥१२॥

इति प्रोत्साहनम् ॥५॥

श्रवणादेकशब्दस्य यत्र कार्यान्तराण्यपि ।
अनुक्तान्यपि सिद्ध्यन्ति तदुदाहरण स्मृतम् ॥१३॥

---

१ B प्रतिपद्धोऽप्यनेकश ।
२ B एवसमरे ।
3 A स्वजीवित्र ।
४ K suggests तामल्पाक्षर ।
५ B `सगति ।
६ A B विरति ।
७ K. reads in A B यत्रास्पष्ट and suggests यत्रास्पष्ट, but A clearly reads यत्रास्पष्ट ।
८ B भैरव ।

यथा—

लेखित्वा नलकूबरं पृथुकुचप्रारम्भया रम्भया
वैदर्भी(र्भी) निषधाधिपेन च रतिं कामेन कृष्णं श्रिया ।
पश्यन्त्यो मुहुरन्वहं नृपसुताः श्रीकालसेनक्षमा-
नाथेन स्वमतुल्यरागविभवाः सादृश्यतोऽकल्पयन् ॥१४॥

इत्युदाहरणम् ॥६॥

तथ्यातथ्यविभेदेन निरुक्तं द्विविधं स्मृतम् ।
सिद्धिप्रसाधितं पूर्वमपरं चाप्रसाधितम् ॥१५॥

तथ्यं यथा—

चन्द्रः कश्मल्यमागात् कथमिति गदिते कश्चिदस्याशयज्ञो-
ऽवादीदस्योदयोऽयं त्रिभुवनधवलीकारकामस्य जाने ।
तच्छ्रीकृष्णस्य राज्ञः कृतमतिविधुभिः कीर्तिपूरैः कृतं मे
[1]तथ्यारम्भेण हृत्स्थो बहिरिति समभूत् कालिमा तथ्यमस्य ॥१६॥

अतथ्यं यथा—

सत्यं नासत्यमेतन्मुनिवचनमहाभ्यासयोगो बहेद्यत्
कौशल्यं कर्मणा नो यदि कथमभजत् सोऽपि राजा द्विजानाम् ।
दृष्ट्वा श्रीकालसेनक्षितिपतियशसां राशिमुद्रिक्तशोभं
*हित्वा [2]स्वस्यौचिति तां [3]निशिचरणचणत्वौचित कालिमानम् ॥१७॥*

इति निरुक्तम् ॥७॥

बहूनां गुणिनां यत्र नानार्थजनितैर्गुणैः ।
एकोऽप्यदिश्यते तत्तु कीर्तितं गुणकीर्त्तनम् ॥१८॥

यथा—

ये दृप्तप्रतियोधशौर्यशमनप्रख्यातवीरव्रताः
प्रद्युम्नप्रतिरूपका वितरण-[4]प्रावीण्यकल्पद्रुमाः ।
[5]तेऽमी दल्लिपुरे हठेन यवनानीताः क्षयं भूभुजा
धृष्टो यातु [6]महम्मदो धुरमिमां कालन्दरीं[7] मन्दधीः ॥१९॥

इति गुणकीर्तनम् ॥८॥

---

[1] B. तथ्यापूरेण । [2] B. स्वस्यौचिति ।
[3] K. suggests निशिचरचरण ।
[4] A. प्राविण्य ।
[5] A. नेपाऽल्लिपुहटेन । B. नेपाद्दुलिपुहटेन । K. suggests the above reading. Reading uncertain.
[6] A. B. महम्मदोद्धुरमिमा । K. suggests the above reading.
[7] B. कालदरी ।

उत्तमानां गुणैः स्पर्धा हीनानामुपमाकृते ।
गुणानुवादः स प्रोक्तः प्रबन्धे कृष्णभूभुजा ॥२०॥

यथा—

ऋते हिमाद्रि सरितः सुराणां न संभवः स्यादिति युक्तमेतत् ।
इत्यूह्यते शुभ्रितसर्वलोकां विलोक्य कीर्ति नृपतेरमुष्य ॥२१॥

सामान्यस्य जनस्यात्र बहूनां गुणकीर्तनैः ।
उत्तमार्यविशेषो यः स प्रोक्तोऽतिशयो बुधैः ॥२२॥

यथा—

पूर्णेन्दुमेतन्मुखमब्जयोनि(योनि)निर्माय पश्चात् समवाप सौख्यम् ।
तद्दर्शनात् संकुचवासनाब्ज–मिलद्दलोत्पेषणखिन्नगात्रः ॥२३॥

इत्यतिशयः ॥१०॥

बहूनां भाषमाणानामनेकार्थविनिर्णयात् ।
सिद्धो (द्धे) समानवचने हेतुरत्रोपवर्णितः ॥२४॥

यथा—

[1]धिङ्मां शकाधममहं प्रथमोऽभवं य-
द्वैधव्यहेतुरतुलं यवनीकुलानाम् ।
क्षत्रोद्भवे शककुले निधनो(?)निदानं
[2]येनाभियुक्त इति गुर्जरनाथ ऊचे ॥२५॥

इति हेतुः ॥११॥

परोक्षोऽपि हि वाच्योऽर्थो यस्माल्लक्षणसाम्यतः ।
[3]उत्पद्यतेऽनुकरणात्तत्सारूप्यमिहोदितम् ॥२६॥

यथा—

सम्मोचितो मातृपुरं कुलंकः[4] स तादृशः स्यात्पुरेऽपराधः ।
एतद्विचिन्त्यास्य लभेत शर्मेत्यादिष्टवान् गुर्जरपः स्वभृत्यान् ॥२७॥

इति सारूप्यम् ॥१२॥

बहूनां तु प्रधानानां तुल्यार्थवचनैरिह ।
एकार्थसाधनं वाक्यं सिद्धिर्बुद्धिमतोच्यते ॥२८॥

---

[1] B. धिक मा । A. धिक् मा ।

[2] B. यैनाभियुक्त ।

[3] B. उत्पत्यते ।

[4] K. suggests किलंकः । Reading of the first foot o verse is uncertain.

यथा—

श्रीतामेन पुरार्जितं भगवत शम्भो समाराधने
यच्छ्रीराममुखैश्चित नृपतिभि[1]-धर्मैकनिष्ठं सदा ।
[2]कामाक्षीचरणानुचिन्तनबलात् स्फीतीकृत यत्पुन-
स्तत्पुण्य नृपकालसेनवपुषा स्फार समुज्जृम्भते[3] ॥२९॥

इति सिद्धि ॥१३॥

प्रशसा क्रियते यत्र नानार्थप्रथनात्मिका ।
पदैर्बहुगुणैरेकवाचकै स पदोच्चय ॥३०॥

यथा—

आसप्तलोकमुर्वीमहिनिलयं व्याप्य सस्थिता नित्यम् ।
आभाति विश्वमूर्तेर्वनमालेवास्य कीर्त्तितति[4] ॥३१॥

इति पदोच्चय ॥१४॥

[5]तीव्रार्थ भाषण यस्मात् पर-[6]सादृश्ययुक्तिभि ।
वस्तुस्वरूपोपन्यासे स आक्रन्द स्मृतो बुधै ॥३२॥

यथा—

इत्यूह्यते सयति योऽरिवर्गैरज्ञातघातेषु शकेष्वकस्मात् ।
नवावतार व्यसनस्य कुर्वन् सोऽप्येष कालच्छलकैटभारि ॥३३॥

इत्याक्रन्द ॥१५॥

[7]अतस्मिन्नपि यत्रार्थे [8]तुल्यस्यार्थस्य निर्णय ।
स मिथ्याध्यवसायस्तु प्रबन्धादिषु लक्षणम् ॥३४॥

यथा—

एतन्मे शिशुभाषित न च रत नो कुञ्जभूमिर्गृह
नो भृगावलिगुञ्जित मयि रुषा नाथस्य मेऽह कृतम् ।
नो [9]वल्यश्चलपाणय सखिगणा इत्य हते गुर्जरे
यद्गीतैर्वनसाश्रिता [10]भ्रममगुल्मेच्छया रता सर्वश ॥३५॥

इति मिथ्याध्यवसाय ॥१६॥

---

[1] B धर्मैक ।
[2] A. B कामाक्षां ।
[3] A. समुजृभते ।
[4] A कीर्ति । B कीर्तित, K suggests the above reading
[5] B. तीव्रर्थ्यभापणं ।
[6] A शादृश्य ।
[7] B एतस्मिन्नपि ।
[8] A B तुल्यस्यार्येस्य ।
[9] A वल्य श्चलपाणय । [10] B भ्रममगुमेल्च्छा । A भ्रममगुम्लेंछा ।

यत्पूर्वं क्रोधजननमन्ते[१] हर्षप्रवर्धनम् ।
प्रियोक्तिर्गदिता सा शैराशीर्वादसमन्विता[२] ॥३६॥

यथा—

जित्वानेकपुरा(रो)धृता भुजबलात् कामेश्वरीलीलया
नीत्वा स्वं नगरं रुषा प्रतिभटा[३] ये(ऽ)खर्वगर्वोद्धताः ।
स्वं स्थानं पुनरापयंस्तदधिपा वृद्धस्वशेषीकृता
रामादप्यधिकं तवेति चरितं श्रीकालसेन प्रभो ॥३७॥

इति प्रियोक्तिः ॥१७॥

वाक्यमाशंसनोपेतं मनोरथसमुद्भवम् ।
प्रार्थनीयपराप्या या साशीः शिष्टैरिहोदिता ॥३८॥

यथा—

यमभ्यमिश्रीयितुमुद्यतासि-माशीर्भिरार्या इति वर्धयन्ति ।
यन्मङ्गलं वृत्रवधोद्यतस्य वृत्रद्विषस्तद्भवतेऽद्य भूयात् ॥३९॥

इत्याशीः ॥१८॥

दर्शनादेकदेशस्यानुमानं यस्य कस्यचित् ।
कार्यान्तरस्य सा प्राप्तिर्गदिता तामराजिना ॥४०॥

यथा—

गुर्जरेशगजव्याजराजलक्ष्मीहठाहृतेः ।
अस्मिन् राजकराज्यश्रीरेष्यतीत्यनुमीयते ॥४१॥

इति प्राप्तिः ॥१९॥

कार्ये वाप्ययवाऽकार्ये सहसैवोपपादिते ।
चेतसो यस्तु संतापः स पश्चात्ताप उच्यते ॥४२॥

यथा—

एतत्संन्यरये भवाजिविदलद्भूकम्पतर्यागमा
मुक्त्वाऽऽकस्मिकजातसंभ्रमवशान्मार्गे कुरङ्गेक्षणाः ।
गत्वाद्रीनिति चिन्तयन्त्यरिगणा दुश्चेष्टितं चेष्टितं
हा कष्टं किमिदं मिलेयुरपि ताः क्वास्ताः[४] (?) क्व वा ताः पुनः ॥४३॥

इति पश्चात्तापः ॥२०॥

---

[१] A. B जननमते ।

[२] A. B. राशिर्वादसमन्विताः ।

[३] B. प्रतिभटाः ।

[४] पास्ताः would perhaps be a better reading; कान्ता. would perhaps be still better.

[1]अज्ञाततत्त्वो वाक्यार्थः समाप्तिं यत्र नीयते ।
नानाविचारसम्पन्नः संशयः स उदाहृतः ॥४४॥

यथा—

यमधिकृत्य परः परतोऽपि सन्नजलनिर्जनता वदनोदरात् ।
अयमितः सः किलेति रवश्रुतेर्वदति किं स[2] इहागत इत्यहो ॥४५॥

इति संशयः ॥२१॥

स्नेहाद्दाक्षिण्यतो वापि यत्परस्यानुवर्तनम् ।
विनयादर्थसंयुक्तं सानुवृत्तिरिहोदिता ॥४६॥

कुर्वते सुहृदो यस्य स्वप्राप्तं रक्षितुं तथा ।
[3]जय त्राहीति चाटूनि विनीतवदुपस्थिताः ॥४७॥

इत्यर्थानुवृत्तिः ॥२२॥

केनचिद्धेतुना यत्र दोषाणां गुणयोजनम् ।
गुणेषु दोषयुक्तिर्वा तत् कार्यं कार्यवेदनम् ॥४८॥

यथा—

[4]युष्मच्छासनमद्य यावदपि मे मूर्ध्ना धृतं काङ्क्षया
लक्ष्यामो भुवमित्ययो व्रज सखे यास्याम्यहं स्वेच्छया ।
आ(अ)द्याह सुभगा न चास्मि गृहिणी नो जीवितेशो भवान्
यस्येत्थं रिपुयोषितामनुवनं वाक्योत्करः श्रूयते ॥४९॥

इति कार्यम् ॥२३॥

[5]निर्भासनमनेकार्थसाधकं[6] युक्तिमद्वचः ।

यथा—

सर्वदं त्वां विजानन्ति सर्वदा सुहृदोऽरयः ॥

इति निर्भासनम्[7] ॥२४॥

अपृष्टैरथवा पृष्टैराख्यानं निर्णयः स्मृतः ।

---

[1] A B अज्ञातत्त्वो । K. suggests the above reading

[2] B कस ।

[3] B यत्राहीति space left blank for one letter before य
K suggests अत्रायाहीति ।

[4] A युष्मछासन । B. युष्मछाशन ।

[5] K suggests निर्भर्त्सनम् ।

[6] A B साकथ । K suggests the above reading.

[7] A. B. निर्भर्त्सनम् ।

यत्पूर्वं क्रोधजननमन्ते[1] हर्षप्रवर्धनम् ।
प्रियोक्तिर्गदिता सा शंराशीर्वादसमन्विता[2] ॥३६॥

यथा—

जित्वानेकपुरा(रो)धृता भुजबलात् कामेश्वरीलीलया
नीत्वा स्वं नगरं रुषा प्रतिभटा[3] ये(ऽ)खर्वगर्वोद्धताः ।
स्वं स्थानं पुनरापयंस्तदधिपा वृद्धत्वशेषीकृता
रामादप्यधिकं तवेति चरितं श्रीकालसेन प्रभो ॥३७॥

इति प्रियोक्तिः ॥१७॥

वाक्यमाशंसनोपेतं मनोरथसमुद्भवम् ।
प्रार्थनीयपरान्या या साशीः शिष्टैरिहोदिता ॥३८॥

यथा—

*यमभ्यमित्रीयितुमुद्यतासि-माशीर्भिरार्या इति वर्णयन्ति ।*
यन्मङ्गलं वृत्रवधोद्यतस्य वृत्रद्विषस्तद्भवतेऽद्य भूयात् ॥३९॥

इत्याशीः ॥१८॥

दर्शनादेकदेशस्यानुमानं यस्य कस्यचित् ।
कार्यान्तरस्य सा प्राप्तिर्गदिता तामराजिना ॥४०॥

यथा—

गुर्जरेशगजव्याजराजलक्ष्मीहठाहृतेः ।
अस्मिन् राजकराज्यश्रीरेष्यतीत्यनुमीयते ॥४१॥

इति प्राप्तिः ॥१९॥

कार्ये वाप्यथवाऽकार्ये सहसैवोपपादिते ।
चेतसो यस्तु संतापः स पश्चात्ताप उच्यते ॥४२॥

यथा—

एतत्संप्रत्ये भवाजिविदलद्भूकम्पतर्व्यागमा
मुक्त्वाऽऽकस्मिकजातसंभ्रमवशान्मार्गं कुरङ्गेक्षणाः ।
गत्वाद्रीनिति चिन्तयन्त्यरिगणा दुश्चेष्टितं चेष्टितं
हा कष्टं किमिदमिलेयुरपि ताः क्वास्ताः[4] (?) क्व वा ताः पुनः ॥४३॥

इति पश्चात्तापः ॥२०॥

---

[1] A B जननमते ।

[2] A B. राशिर्वादसमन्विता. ।

[3] B प्रतिभटा ।

[4] कास्ताः would perhaps be a better reading; कान्ता. would perhaps be still better.

[1]अज्ञाततत्त्वो वाक्यार्थं समाप्ति यत्र नीयते ।
नानाविचारसम्पन्न संशय स उदाहृत ॥४४॥

यथा—

यमधिकृत्य पर परतोऽपि सन्नजलनिर्जनता वदनोदरात् ।
अयमित स किलेति रवश्रुतेर्वदति किं स[2] इहागत इत्यहो ॥४५॥

इति संशय ॥२१॥

स्नेहाद्दाक्षिण्यतो वापि यत्परस्यानुवर्तनम् ।
विनयादर्थसयुक्त सानुवृत्तिरिहोदिता ॥४६॥

कुर्वते सुहृदो यस्य स्वप्राप्त रक्षितु तया ।
[3]जय श्राहीति चाटूनि विनीतवदुपस्थिता ॥४७॥

इत्यर्थानुवृत्ति ॥२२॥

केनचिद्धेतुना यत्र दोषाणा गुणयोजनम् ।
गुणेषु दोषयुक्तिर्वा तत् कार्यं कार्यवेदनम् ॥४८॥

यथा—

[4]युष्मच्छासनमद्य यावदपि मे मूर्ध्ना धृत काङ्क्षया
लक्ष्यामो भुवमित्यथो व्रज सखे यास्याम्यह स्वेच्छया ।
आ(अ)द्याह सुभगा न चास्मि गृहिणी नो जीवितेशो भवान्
यस्येत्य रिपुयोषितामनुवन वाक्योत्कर श्रूयते ॥४९॥

इति कार्यम् ॥२३॥

[5]निर्भासनमनेकार्थसाधक[6] युक्तिमद्वच ।

यथा—

सवद त्वा विजानन्ति सर्वदा सुहृदोऽरय ॥५०॥

इति निर्भासनम्[7] ॥२४॥

अपृष्टैरथवा पृष्टैराख्यान निर्णय स्मृत ।

---

[1] A B अज्ञातत्वो । K suggests the above reading

[2] B कस ।

[3] B यत्राहीति space left blank for one letter before य K suggests अत्रायाहीति ।

[4] A युष्मछासन । B युष्मछादन ।

[5] K suggests निर्भर्त्सनम् ।

[6] A B साक्य । K suggests the above reading

[7] A. B निर्भर्त्सनम् ।

यथा—

मनोरथानामुपरि वर्त्ततेऽयं महीपतिः ।
प(पा)रेरजांसि वृत्तानि यस्येत्याख्यान्ति सूरयः ॥५१॥

[१]इत्याख्यानम् ॥२५॥

क्रोधमुत्पाद्य यद्वाक्यमन्ते हर्षं प्रयच्छति ।
पुनर्यत् प्रियतामेति सा [२]याच्ञा परिकीर्त्तिता ॥५२॥

यथा—

[३]क्रोधोद्धत्येन हत्वा निक्रुतिकरमिलाधीश्वराणां समूहं
दिष्ट्या तस्मिन्नुपेते[४] शममुपरमता(तां) तत्स्वभावो(वे)रिपूणाम् ।
शेषाः सर्वे नमध्वं हृतरिपुनिकरं कालसेनं महीन्द्रं
तत्पादप्राज्यसेवोपनतसुखजुषा[५] स्वस्ति राज्ञां कुलेभ्यः ॥५३॥

इति याच्ञा[६] ॥२६॥

अन्योन्यस्यानुकूल्येन महद्भिः समवायतः ।
साध्यते योऽत्र संबन्धः सा युक्तिः परिकीर्त्तिता ॥५४॥

यथा—

अन्योन्यस्यानुकूले(ल्ये)न [७]यस्येच्छन्त्यनुकूलनम् ।
वनदेवमुखालेखाः केषामितरथा कथा ॥५५॥

इति युक्तिः ॥२७॥

[८]अनुनीतिर्वचः क्रोधमपराधं प्रमार्जयेत् ।

यथा—

कुपितं परितोषयन्ति(तं) पुर एवेति समेत्य शत्रवः ।
कुरु नाथ दयां तृणाङ्कुरे किमु ते(ऽ)यं परशोरुपक्रमः ॥५६॥

इत्यनुनयः ॥२८॥

अन्यदृष्टान्ततोऽन्यस्य प्रतिज्ञार्थस्य याऽनुमा ॥५७॥

---

[१] K. reads इति निर्णयः, but both A. B. read इत्याख्यानम् ।
[२] A. या चा, B. या चा ।
[३] B. क्रोधोद्धत्येन ।
[४] A. तस्मिन्नुपेते ।
[५] A. B. सुखजुषा ।
[६] A. B. या चा ।
[७] B. मस्योत्यत्यनु then some mark above त्य ।
[८] B. ...

यथा—

निदानं नो दैवं न भवति पुनर्हेतुरपरो
निसर्गो यत्साक्षात्स[1] वसति (हि) विद्वत्सु कमला।
प्रमाणीकर्तुं तत् प्रभवतु विधाता पुनरिदं
धनं दायं दायं विघटयति कृष्णः क्षितिपतिः ॥५८॥

इति दृष्टान्तः ॥२९॥

प्रतिषेधः स विज्ञेयः कर्त्तव्यार्थनिवारणम्।

यथा—

एतत्प्रतापयशसी सूर्यचन्द्रमसाविह।
अलमाशूदयं प्राप्येत्याहतुः सस्मयस्मितम् ॥५९॥

इति प्रतिषेधः ॥३०॥

अक्रोधः क्रोधजननैर्वाक्यैर्यः सा क्षमा मता ॥६०॥

यथा—

समुद्रमपि यस्योच्चैरतिशेते सहिष्णुता।
[2]ता (ना) सूयति तथाभूतशेवावीनपि कर्हिचित् ॥६१॥

इति क्षमा ॥३१॥

यत्राभिनयतो भावं जनितैर्वचनैरिह।
[3]पृच्छ्यतेऽन्योऽथवात्मा तु सा [4]पृच्छेत्यभिधीयते ॥६२॥

यथा—

यद्वैरिस्त्रैणमाह व्यसनवशमदं वन्यभूमावुपेहि[5]
स्वान्तः स्वास्थ्यं किमेभिः प्रकृतकरमुखैर्दुर्लभप्रार्थनैस्तैः।
यैश्चित्ते रोपितैः स्यादियमतिविरतिस्त्वीदृशी सौख्यहर्त्री
तानद्यैव प्रियत्वादभिलषसि कथं त्वं पुनस्तद्वदश्व (स्व) ॥६३॥

इति पृच्छा ॥३२॥

निजाकारस्य यद्वाक्यं सुश्लिष्टार्थप्रदर्शकम्।
[6]अन्यापदेशवचनैः कथ्यते स मनोरथः ॥६४॥

---

[1] A. साक्षान्निवसति।

[2] नासूयति will make sense with काकु, otherwise सासूयति ( also be a possible reading

[3] B. पृछते।

[4] A. पृष्ठेत्यभिधीयते। B. पृष्टे।

[5] A. वन्यभूमादुपैहि। B. वन्यभूमादुपेहि।

[6] B. अन्योपदेश।

यथा—

धृतिविस्मृतयद्गुणाश्रया अपि पारेतटिनीपति स्थिताः ।
स्मरसारथिभिर्मनोरथैर्नृपतन्व्या वृणुते यमीश्वरम् ॥६५॥

इति मनोरथः ॥३३॥

उपपत्तिस्तु दोषाणां प्राप्तानां शमनं पुनः ॥

यथा—

स्वप्नलभ्यमपि यं नृपतन्व्याः कान्दिशनं नु सुचिरादनुनेतुम् ।
मुञ्च मानमनिदानमिदानीं देहि दर्शनमिदं निगदन्ति ॥६६॥

इति उपपत्तिः ॥३४॥

¹कपटं छलयोगेनाभिसंधानपरं वचः ॥

यथा—

यथा वैद्यचलात्वाने धातूनि पवनेरितुः ॥६७॥

इति कपटम् ॥३५॥

अपराधैर्व्यलीकोक्त्यैः प्रसिद्धैर्यत्प्रयोजयेत् ।
अर्थान्तरेण संबन्धं क्षेपं तत् परिदेवनम् ॥६८॥

यथा—

अन्यादेने मेघाः समरभुवि संग्रामिताभुवा
स्वर्नारीं वीरवेषं कृतमहतपूर्वं खलु मया ।
अहो हि दुर्वृत्य त्यजति सहसा मां सहचरी
विमुक्तस्नेहार्थं विचरति यतो मद्रिपुकुले² ॥६९॥

इति परिदेवनम् ॥३६॥

# शब्दालंकारो नाम तृतीयं परीक्षणम्

विचार्यमाणस्तत्त्वेनोपमैवाखिलवस्तुन ।
दीपको रूपकमिति श्रये त शशिभूषणम् ॥१॥

अयं प्रबन्धस्य शरीरमाहुर्योक्ता पदाना घटना ततोऽस्य ।
अलङ्कृतिस्तेन वदे पुरोऽहमलङ्कृतीरर्थगत(ता)स्ततोऽन्या[१]॥२॥

उपमेयस्य यत्र स्यादुपमानसमानता ।
गुणाकृतिसमायोगादुपमा नाम सा मता ॥३॥

धर्मवस्तुविपर्यासनियमानियमादिभि ।
समुच्चयान्योन्यातिशयोत्प्रेक्षिताद्भुतसशयं[२] ॥४॥

मोहनिर्णयनिन्दाचिकित्साश्लेषप्रशसनं[३] ।
विरोधप्रतिषेधासभाविताभूतहेतुभि ॥५॥

च (चा) टुतत्त्वाख्यानमालाविक्रियाप्रतिवस्तुभि ।
प्रतिवस्त्वसाधारणवाक्यार्थं स्यादनेकधा ॥६॥

प्रत्ययाव्ययतुल्यार्थसमासाद्यैश्च हेतुभि ।
एकस्यैकानेककाभ्यामनेकस्यैककेन[४] च ॥७॥

बहूनां बहुभि[५] सा स्यात्तद्विकल्पास्त्वनेकश ।
न ते कात्स्न्र्येन शक्यन्ते भेदा वक्तुं कथचन ॥८॥

न ते मर्यादाह्रियन्ते विस्तरत्रस्तचेतसा ।
लक्ष्ममात्र मया तेषामुक्त[६] विस्ता(त)[७] रभीरुणा ॥९॥

नानाधिकरणार्थाना शब्दानामेकवाक्यत ।
सयोगात् कथन प्राहुर्दीपकं तद्विदो जना ॥१०॥

---

[१] B omits विसर्ग ।

[२] B शसयं ।

[३] A adds स्या सा between चिकित्सा and श्लेष and B adds only स्या । K suggests that मोहनिर्णयनिन्दाचिस्यासाश्लेषप्रशसनं can also be a possible reading

[४] B नेककाभ्यामनेक ।

[५] A बहुभित्सा ।

[६] A तेषा मुक्त । B तेषा चोक्त ।

[७] B विस्तार ।

किंचित्साधर्म्यसंपत्तेस्तुल्यावयवलक्षणम् ।
स्वैर्विकल्पैर्विरचितं रूपं रूपकमिष्यते ॥११॥

समस्तमसमस्तं च खण्डं चाखण्डमेव च ।
चतुर्धा तत् समाख्यातं जनस्थानावनीभुता ॥१२॥

वर्णावृत्तिः पदावृत्तिरुभयावृत्तिरित्यपि ।
विकल्पादादिमध्यानां यमकं भिन्नवाच्यगा ॥१३॥

प(पा)दान्तयमकं चैव काञ्चीयमकमेव च ।
समुद्गयमकं चैव विक्रान्तयमकं तथा ॥१४॥

यमकं चक्रवालं च सन्दष्ट[१]-यमकं तथा ।
पादादियमकं चैवमाम्रेडितमथापि च ॥१५॥

चतुर्व्यवसितं चैव मालायमकमेव च ।
एतद्दशविधं ज्ञेयं यमकं लक्षणाश्रयम् ॥१६॥

वर्णसाम्यमनुप्रासः स्फुरद्गुणगणाञ्चितः ।
तत्पदातत्पदत्वेन रच्यते रचितो बुधैः ॥१७॥

अलंकृतमलंकारैरेभिर्लक्षणलक्षितम् ।
रसानुरूपं कर्तव्यं रूपकं रूपकार्थिभिः ॥१७॥

आसंसारं पूर्वराजचरितानुगवेषणात् ।
उपमानीतवृत्तेनोपमाद्या अत्र वर्णिताः ॥१९॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते सङ्गीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे अलङ्कारोल्लासे शब्दालंकारपरीक्षणं तृतीयं समाप्तम् ॥

---

[१] A. सन्दृष्ट ।

## गुणदोपनाम चतुर्थ परीक्षणम्

गुणातीतोऽपि सगुणः सदोषो दोषवर्जितः ।
मुदे स्तान्मे शिवो नागभूषितोऽप्यगभूषितः ॥१॥[1]

दोषैर्युक्ता गुणैर्मुक्ता(ऽ)लङ्कृतापि न शोभते ।
ललनेव वचोभङ्गी तानतो वच्मि यत्नतः ॥२॥

[2]गूढार्थार्थान्तरैकार्यभिन्नार्थाभिप्लुतार्थकाः ।
न्यायादपेतविषमविसन्ध्यर्थविहीनकाः ॥३॥

शब्दच्युतमिमे दोषा रूपके दश कीर्तिताः ।
गूढार्थं तत्र पर्यायशब्देनाभिहितं मतम् ॥४॥

अर्थान्तरं तु [3]तज्ज्ञेयमवर्ण्यं यत्र वर्ण्यते ।
एकार्थमपि विज्ञेयमेकार्थस्याभिधानतः ॥५॥

भिन्नार्थं भिद्यते यत्रान्योऽर्थोऽन्येन विवक्षितः ।
अभिप्लुतार्थं यत्तत्[4] स्यात्तत्पदेन समस्यते ॥६॥

प्रमाणवर्जितं न्यायादपेतं परिकीर्त्तितम् ।
वृत्तभेदेन विषमं रूपकं परिकीर्त्तितम् ॥७॥

अनुपश्लिष्टशब्दं यत्तद्विसन्धि स्मृतं बुधैः ।
अर्थहीनमसंबद्धं सावशेषार्थमेव च ॥८॥

अपशब्दस्वरं शब्दच्युतं सद्भिरुदाहृतम् ।
सर्वत्र ग्राम्यतंचेष्टा[5] यतः सार्थे(ऽ)रसावहा ॥९॥

एतद्विपर्ययान्(ज्)ज्ञेया गुणा गुणिभिरावृतः ।
प्रसादश्लेषसमतामाधुर्यौजःसमाधयः ॥१०॥

अर्थव्यक्तिरुदारत्वं कान्तिश्च सुकुमारता ।
दर्शते स्युर्गुणास्तेषां विशेषाल्लक्ष्म(चक्ष्म)हे ॥११॥

---

[1] A B Take this verse as the second one and the second as the first one This order has been changed in order to keep the 'Mangalā-carāṇa' verse in the beginning

[2] B. गूढार्थार्थांतरः कार्य ।

[3] A. ज्ञेय मवर्ण्यं ।

[4] A. यत्त ।

[5] B. ग्राम्यते चेष्टा ।

यथार्थस्य प्रतीतिः स्यादनुक्तापि प्रयोगतः ।
शब्दानां स प्रसादाख्यो गुणो ज्ञेयो बुधैरिह ॥१२॥

ईप्सितार्थविशिष्टानां संबन्धाद्यत् परस्परम् ।
शि(श्लि)ष्टत्वं हि पदानां स श्लेष इत्यभिधीयते ॥१३॥

स्वभावेन स्फुटार्थं स्याद्गहनं तु विचारतः ।
स्वतः सुप्रतिबद्धं च श्लिष्टमिष्टं सता हि तत् ॥१४॥

नातिचूर्णपदं यत्र न च व्यर्थाभिधायि च ।
न दुर्बोधाभिधानं सा समत्वात् समता मता ॥१५॥

श्रुतमुक्तं तु यद्वाक्यं बहुशोऽपि विदां हृदि ।
पुनः पुनर्नवं भाति तन्माधुर्यमिहोदितम् ॥१६॥

[1]समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम् ।
सानुस्वारविसर्गैर्यत्तदोजः परिकीर्त्तितम् ॥१७॥

अभियुक्तोपलभ्यार्थविशेषार्थस्य[2] संपदा ।
संपन्नः कश्चिदर्थो यः स समाधिर्गुणो मतः ॥१८॥

लोकमार्गव्यवस्थातः सुप्रसिद्धाभिधानयुक् ।
या काचिद्रचना काव्ये सार्थव्यक्तिरुदाहृता ॥१९॥

नानाभावैरुपेतं यच्छृङ्गाराद्भुतसंभृतम् ।
दिव्यभावपरीतं तदौदार्यं भणितं गुणः ॥२०॥

चन्द्रवन्मनसो या स्यादाह्लादकरतोक्तिषु ।
[3]लीलाद्यर्थोपपन्ना सा कान्तिर्नाम गुणो मता ।

सुश्लिष्टसन्धिभिः शब्दै(ः) सुकुमारार्थयोजितैः ।
सुखप्रयोज्यैर्व्यक्तार्थैर्युक्ता स्यात् सुकुमारतः(ता) ॥२२॥

आर्यावृत्तः(त्त) समन्वितं सुललितं लघ्वक्षरोल्लासितं
रूपं रूपकदीपकैरुपमया चालङ्कृतं संस्कृतम् ।
शृङ्गारे पुनरद्भुते रसवरे वीरेऽथ रौद्रे भवे-
द्दर्णैर्गौरवगुम्फितैर्जगतिका मुख्यैश्च वृत्तैर्युतम् ॥२३॥

रसेषु शेषेषु यथारसं तु छन्दः प्रयोज्यं विबुधा विलोक्य ।
तस्यानुरूपा घटना पदानामलंक्रिया चाक्षरसंहतिश्च ॥२४॥

---

[1] B. समासविद्भिः ।
[2] A. विशेषार्थस्य संपदा ।
[3] B. लीलाद्यर्थपपन्नालोसा ।

सुललितललनालपनालापनलघिमानुरूपपदरचनाः ।
नृत्यानुगगतिरुचिराः पदबन्धाः सुकविभिः कार्याः ॥२५॥

रचितविविधमार्गं सन्धिसन्धानयुक्तं
सहृदयसुखगम्यं श्लेपगुप्तार्थहीनम् ।
मृदुसुललितवर्णं चित्रनृत्यानुरूपं
भवति जगति पाठ्यं प्रेक्षकप्रीतिकारि ॥२६॥

यद्गुणा गुणिनामेव दोषनिर्मुक्तिहेतव. ।
तेन श्रीकालसेनेन गुणोल्लासः प्रकीर्त्तितः ॥२७॥

येन क्ष्मावलये समुद्धतमहीनाया नयं स्वं यश-
[1]स्तद्दोषाः सलयं सनृत्यनिगमं साङ्गं पुनस्तत्सुताः ।
स्वाधारं जनता वदान्यचरितान्यर्थिव्रजाः पाठिताः
पाठ्ये तेन नृपेण चारुभणितौ सद्रत्नकोशः कृतः ॥२८॥

इति निशशङ्कनिर्भयमल्लेन सकलभूवलयैकवीरेण श्रीकलाकल्याणकुशलेन श्रीकालसेनेन द्वादशसहस्रजनस्थानप्रभृतिवसुन्धरासमुद्धरणैकधीरेण श्रीजगदीश्वरी[2]-वनदेवनिजगणेन श्रीकामेश्वरीचरणकिङ्करेण श्रीब्रह्माद्रिविभुना प्रथमप्रख्यात[3]-तामराज-आमोदराज-रामराज पङ्कराज-ह्लाङ्गराज-सामराजेन्द्र-प्रभृति-सकलमहीपालमौलिमाणिक्य--रचितसिंहासनादिसमस्तप्रशस्तराजचिह्नाधिष्ठातृ[4]-नरेश्वरेण अगस्तिपुरनिरस्तसमस्तवैरिवर्गेण कामाक्षाप्रसादासादितकुन्तीपुरेण शुद्धोद्धतोद्धतपतिनिपातपटुतरवारिधारेण उद्धतपुरनारीनयननीरनिरतरसाधारणी[5]-समाप्यायितशौर्यतरुवरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन मणिपुरमर्द्दन[6]-दर्शितशौर्येण कल्याणपुरजयाजितजामदग्न्येन[7] स्थानवलयितानेकदरीपरिसरपरित्रासितमनीरवीरेण श्रीपुरग्रहणसर्वर्धितयशोभरेण वादिकाचलग्रहणजनितकीर्तिपुरपराजिताचलनायकेन राजपुरीविध्वसनचारुचापरचितेन सुवर्णगिरिखण्डनावनिवज्रहस्तेन [8]नवसारीघनदेवीयुवतीजनवदनयामिनीनार्यसिंहिकासुतायमानकरालवालेन पाटलीरणधरणिघोरधनुर्घोकारसुखरितत्रिभुवनेन तारापुरप्रज्वालनसमुद्भूतधूममलिनीकृतसकलवैरिवदनेन कुङ्कुमपुरजयदर्शितसिंहविक्रमेण संतापुरोपार्जितरत्नेन वेदिकागिरिनिर्दलनदारुणेन कुरङ्गगिरिकोट-

---

[1] K suggests स्तद्योषा ।
[2] A. जगदीश्वर ।
[3] A. प्रख्यात ।
[4] A. अधिष्ठात्रि ।
[5] A. omits धा of साधारणी ।
[6] K. मदन ।
[7] A. जामदग्नेन ।
[8] K. सवसारी ।

विघट्टनलम्पटोरुनाशीरेण पुण्यस्तम्भो[1]-न्मूलनोद्भूताद्भुतधैर्येण संगमनीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण धवलपुरसमूलोन्मूलनप्राप्तजयश्रिया गिरिपुरडुङ्गरपट्टणसार्थकीकृतोग्रग्रहेण वमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन आमर्दकगिरिशिखरोपरिभावितदाकनिकरेण महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण निजभुजशौर्य[2]-वशीकृतबगुलराजप्रमुखमहानिधानेन [3]बेदुरभूपालराजकृतसंस्थापनेन [4]नराणरणकर्म-[5]कर्मठेन [6]हुजारखानमानमर्दनगृहीतराज्यलक्ष्मीसकलभाण्डागारनिचयेन अलङ्गगिरिगहनगह्वरकुहरविहारिवैरिघोरसिन्धुरमर्दननिर्दयकण्ठीरवेण अष्टादशगिरिशिखर-परिवारिताञ्जनाद्रिविजयविख्यातवीर्यगर्वेण[7] सप्तविंशतिसहस्रमहाराष्ट्रधराविधूननप्रबलप्रभञ्जनेन सप्ततिसहस्रगुर्जराम्भोधिमाथ-[10]मन्यमहीधरेण महदम्बमातृकापुरोद्धूलनर्धर्षि-[8]तामहोरगपुरेण पलायमानअजीमखान-[11]सकलगृहीतजयश्रिया जाङ्गलस्थलजलधितरतुङ्गतरङ्गनिकरसरम्भकुम्भसम्भवेन वस्तिसोपारकलहकलितकुन्तजनितकुन्दावदातकीर्तिधवलितदिगन्तरेण शशकगिरिलुण्ठनपटुतरेण श्रीवनदेवस्वामि[12]-प्रासादरचनापरपरमेश्वरेण श्रीत्र्यम्बकेश्वरसंनिधिनिर्मितकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभीमस्वर्गतायथार्थीकरणरचितचारुतरपथेन श्रीकामाक्षागिरिनवीननिर्मितपराजितसुमेरुणा श्री[13]-महियाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण रायगुरु-वायगुरु-सेलगुरु[14]-रायाञ्चापरमगुरुवागाङ्गला-रायाञ्चा-मुहवनरायहिसल्लराय-माचल्ल-पूर्वपश्चिमोत्तरदक्षिण-चतुर्दिशां--रायाञ्चाआंबुलाइत्यादि-बिरुदावलीविराजमानेन अघ्युष्टतमनरेश्वरेण सबलराज-[15]सम्मूलनाचार्येण दुर्बलराजसंस्थापनाचार्येण पितृवैरिसमुद्भूतरोषपोषणमहीपतिमत्तमातङ्गमस्तकाङ्कुशेन अभिनवभार्गवेण राजभुजबलभीमेन हिन्दूकराजगजपतिना आसनसिंहासनसितातपत्रमाणिक्यमालामण्डितवातान्दोलितजयपताकाकनकदण्डचन्द्रा-[16]वदातचलचामरयुगलमकरध्वजादिराजराजालङ्करणावलोकनमत्सरितमानसेतरनृपालमौलिनिहितवामचरणेन नलनहुषधुन्धुमारभरतभगीरथमान्धातृमेधातिथिप्रभृतिवीर-

---

[1] A. स्तम्बो ।

[2] K. भुजवीर्य ।

[3] K. बोद्दुर ।

[4] B. नराणराण ।

[5] B. कर्म ।

[6] K. बुजार ।

[8] धर्षितमहोरगपुरेण seems to be better.

[9] K. वर्मेण ।

[10] K. नाथ ।

[11] K. पान ।

[12] K. प्रसाद ।

[13] A. महिखाचल ।

[14] K. मेलगुरु ।

[15] A. सन्मूलना ।

[16] K. चण्डावदात ।

राजरत्नोदात्तचरितेन[१] सर्वदा-[२]त्र्यम्बकादिगोदाविमुक्तिसमस्तामुक्तिप्रवितीर्ण-मुक्तिमुक्ताकलापेन श्रीब्रह्मगिरिसन्निधिकृतयुगधर्मानुवर्तिब्रह्मवृन्दाधिष्ठितानेक-यज्ञाद्यखिलसुकृतकृतसत्सलोकेन[३] परमभागवतेन अभिनवभरताचार्येण संगीत[४]मीमांसानिर्माणपरप्रभाकरेण प्रबन्धराजश्रीगीतगोविन्दानिर्माणपरितोषितराधामाधवेन कामाक्षास्तुतिकरणाराधितकामेश्वरीचरणकमलेन श्रीगीतगोविन्दटीकारचनावर्णितसाङ्गशृंगाररसेन सकलराजवाग्गेयकारतोडरमल्लेन सकलकविराजचक्रचूडामणिना वीणावादनप्रवीणेन सुशारीरशालिना पद्मनगरजनस्थानगोदावरी[५]-विराजमानम्लेच्छोच्छेदितचिरकालधर्मसंस्थापनेन संस्कृतभाषामहाराष्ट्रभाषातै[६]लङ्गकर्णाटकभाषाचतुष्टयरचितनाटकराजचतुष्टयेन याचकजनकल्पनाकल्पद्रुमेण वसन्तसमयसमागतसमस्तसामन्तसीमन्तिनीसीमन्त-[७]सिन्दूरपूरदूरोद्धूलनप्रकटितप्रौढप्रतापेन निसर्गदुर्ग्रहदुर्गवर्गदुर्गमप्राकारपरिखापरिपातपरिखिद्यमानपरिशङ्कितपरिजनपरिवीतप्रत्यर्थिनितम्बिनी[८]-लुण्ठाकार्गलादीर्घभुजायुगलेन धीरोदात्तधीरशान्तधीरोद्धतधीरललित-चतुर्विधनायकगुणग्रामविचारचातुरीचतुराननेन अष्टविधनायिका[९]-हावभावविवेकोद्दामो[१०]-द्दीपितस्मरविलोकनानुभूयमानशृंगाररससान्तरनिरन्तरान्तरानन्देन[११]नाटकनाटिकाख्याना-[१२]ख्यायिकाप्रहेलिकाकलाकलापकौशल्येन[१३]भारतीयरसदृष्टिभावदृष्टिभावितभावनाभिनवभरताचार्येण नन्दिकेश्वरमतानुवर्तनाराधितत्रिनयनेन परमपराक्रमार्जुनेन अथ बृहन्नटेन सतताराधितधर्मेण अथ वृकोदरेण श्रीसरस्वतीरससमुद्भूतकरवोद्यानन्नायकेन यवनकुलाकालकालरात्रिरूपेण सततपरा[१४]-भूतसमागतसूर्यवंशीन्द्रसेन-[१५]राजराज्यसंस्थापनदृढाङ्गीकारेण गुर्जर[१६]-राज्य-धराधीशमहमदसुलतानधीरत्वोन्मूलनप्रचण्डपवनेन श्रीविसन्ध्य-[१७]क्षेत्रसमुद्रसभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्रख्ढपत्रयवनदवदहनदावानलेन प्रत्यर्थिपृथिवीपतितिमिरततिनिराकरण-

---

१ A. adds वेदमार्गस्थापनचतुराननेन before सर्वदा।

२ K. अम्बका।

३ K. reads सल्लोकेन।

४ A. मिमासा।

५ A. B. गोदावरी।

६ A. तेलग।

७ A. सिमत।

८ K. लुण्टार्गला।

९ A नायका।

१० A. कोद्दोमो।

११ K. नन्दनेन।

१२ A B. स्याधिका।

१३ A. कोशळेयेन, B. Omits न।

१४ A परा।

१५ A. वशीद्रशेन।

१६ B. omits र in गुर्जर।

१७ K. श्रीत्रिसध्याक्षेत्र। B. सध्यक्षेत्र।

प्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन गज[१]नरतुरङ्गाधीशराजत्रितयतोडरमल्लेन वसुन्धरोद्धरणादिवराहेण भवानीपतिप्रसादाप्तापसा(स)द[२]-वरप्रसादेन अनन्यमल्लीकगर्वखण्डनमुशल[३]-हस्तबलभद्रपराक्रमेण महाराजाधिराजमहाराणाश्रीमृगाङ्कतामराजनन्दनेन[४] महाराज्ञी[५]-सौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन विविधविज्ञानविज्ञचमत्कार[६] -चातुरीधुरीणसकलसीमन्तिनीधुरीणशिरोमणिरूपलावण्यलज्जालक्ष्मीनिधानश्रृंगाररसरसोशतराजकन्याप्रवरनिकुम्भराजन्यवशावतसमहाराज्ञीश्रीकर्मवतीलखु[७]-मा देवीहृदयाधिनाथेन श्री[८]-महाराजाधिराजमहीमहेन्द्रश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्त्र्या संगीत[९]-मीमांसाया पाठ्यरत्नकोशे अलङ्कारोल्लासे दोषगुणोल्लास' ( दोषगुणपरीक्षणम) ॥

पाठ्यरत्नकोशश्च समाप्ति समगात् ।

इति [१०]विततमतीनामभिमत[११]-सिद्धिरस्तु ॥

---

[१] K omits नर before तुरग ।

[२] K. reads प्रसादाप्तासाद ।

[३] K मुसल ।

[४] A राजेद्रनन्दनेन ।

[५] A adds श्री before सौभाग्यवती ।

[६] A B चमत्कारी ।

[७] A B लखुमा ।

[८] A omits श्री, B adds इति before महाराजाधिराज

[९] A मिमासा ।

[१०] A B विनत ।

[११] B [illegible] मत ।

ॐ

# संगीतराजः

## द्वितीयो गीतरत्नकोशः

### प्रथमः स्वरोल्लासः

### तत्र स्थानादि नाम प्रथमं परीक्षणम्

### ( प्रथमं स्थानकप्रकरणम् )

पाठ्यात्मकत्वाद्गीतस्य प्राधान्याद्वाद्यनृत्ययोः ।
तस्मादनु ततः पूर्वं तन्निरूपणमिष्यते ॥१॥

नित्यं यः सनकादिभिः[1] स्वहृदये ध्येयः परो निर्गुणो
नादोऽनाहतसंज्ञकः परम[2]-चिद्रूपः स्वभावाकलः ।
सोऽव्याद्वः सगुणाहतस्वनतया श्रुत्यादि-[3]गम्यात्मतां
बिभ्रद्भक्तभवार्त्तिहृत्परशिवः सन्मूर्त्तिरापत्कुलात् ॥२॥

यत्स्वरूपं परं ज्ञात्वा चैतन्यं परमश्नुते ।
चिदात्मानमहं वन्दे नादं ब्रह्मादिवन्दितम् ॥३॥

हरिहरहिरण्यगर्भा यस्य विवर्ताः पुराविदा गदिताः ।
वाचामविषयरूपः स कथं नादो विदां गम्यः ॥४॥

तत्तत्स्थानसमाहतः प्रकटयन्वर्णोत्करं वर्णतो
वर्णान्तां पदसंहतिं पदततेर्वाक्यातिवाक्यैः पुनः ।
सर्वोऽस्य व्यवहारसिद्धिजनको लोकत्रयस्याप्यतो
हेतुं नादमुदीरयन्ति मुनयस्तस्य क्रमो वर्ण्यते ॥५॥

आहतानाहतत्वेन स द्वेधा गदितो बुधैः ।
अनाहतोऽतिसूक्ष्मत्वादव्यक्तत्वान्न रक्तिदः[4] ॥६॥

---

[1] A. सनकादिभि ।
[2] B. परमश्चिद्रूपः ।
[3] B. श्रुत्यादिर्गम्यात्मतां ।
[4] cf. S. R. 1.2.3

श्रुत्यादिद्वारतो गेये जनयन्[१] रक्तिमाहतः ।
आत्मन्येकाग्रभावेन भुक्ति[२] मुक्ति प्रयच्छति ॥७॥

स यथोत्पद्यते[३] नादस्तनुते च यथा रतिम् ।
श्रुत्यादिक्रमतो गेये तथा सर्वं [४]प्रपञ्च्यते ॥८॥

पायोर्लिङ्गस्य चान्तर्युगदलकलितं [५]चक्रमाधारसंज्ञं
तस्याः कस्याश्च शक्तेर्गृहमिह गदितं कुण्डलिन्याः कवीन्द्रैः ।
या साक्षाद्देशिकोक्तैः सुवचननिकरैर्योगिभिस्तत्त्वनिष्ठै-
रानीता ब्रह्मरन्ध्रावधिपरमुकुतां मोक्ष्य(क्ष)सौख्यस्य दात्री ॥९॥

षट्पत्रं लिङ्गमूले गृहमिह गदितं कामशक्तेश्च चक्रं
स्वाधिष्ठानं ततो(ऽ)न्यन्मणिपदनिचितं पूरकं भानुगेहम् ।
[६]दिक्पत्रं नाभिदेशे हृदि वसति, ततोऽनाहत-[७]द्वादशारं
शैवं ब्राह्मं च विष्णोर्द्विवसुदलमितं कण्ठदेशेऽस्ति चक्रम् ॥१०॥[८]

[९]भानुपत्रं नासिकायां ललनासंज्ञकं ततः ।
भ्रुवोर्मध्ये वह्निपत्रमाज्ञासंज्ञं ततः परम् ॥११॥

मनश्चक्रं च[१०] षट्पत्रं ततः षोडशपत्रकम् ।
सोमचक्रं ततोऽप्यस्ति ब्रह्मरन्ध्रे सुधाधरम् ॥१२॥

सहस्रपत्रं कमलं सुधाधाराभिवर्षुकम् ।
तत्सुधाप्लुतजीवस्य तत्र गीतादि सिद्ध्यति ॥१३॥

स्वाधिष्ठानाधारयोर्मध्यसंस्थं
तप्तस्वर्णाकारमेकाङ्गुलं यत् ।
वह्नेः स्थानं तन्नवभ्योऽङ्गुलेभ्य-
स्तस्माद्ब्रह्मग्रन्थिसंज्ञः प्रदेशः[११] ॥१४॥

---

१ A. रनयन् ।
२ A मुक्ति मुक्ति B. भुक्तिर्मुक्ति ।
३ B यथोत्पाद्यते ।
४ B प्रचक्षते ।
५ B चक्रसाधारसज्ञ ।
६ A. दिक्यत्र ।
७ A. ततोऽनाहत ।
८ B. this verse is numbered as 9 and the following verses are numbered consecutively.
९ A. भानुपत्र ।
१० B. omits च ।
११ A. प्रदेशो ।

नाभिपद्मं तत्र तत्रास्ति जीवः शम्भोर्नाड्या[१] ब्रह्मरन्ध्रावधिर्प्राक् ।
कुर्वंस्तारोहावरोहौ जलौक(घ)स्तीर्णप्रायः प्रायशस्तत्र तिष्ठन् ॥१५॥

विवक्षुर्जीवोऽयं नुदति हृदिदं हन्ति दहनं
शरीरस्थं स प्रेरयति सपदि प्राणपवनम्[२]।
स्थितो ब्रह्मग्रन्थौ स इह चरति प्राणपवनः
मुजन्नाभेर्वृन्तं[३] हृदयगलमूर्धास्यनिलये ॥१६॥[४]

[५]स्वनोऽतिसूक्ष्मो गदितः सनाभिगो हृदीह सूक्ष्मो गलके च पुष्टः[६] ।
शिरस्यपुष्टो वदने च कृत्रिमो भवेदयं पञ्चविधः स्थितेर्वशात्[७] ॥१७॥

स्वनोऽतिसौक्ष्म्यादिह नाभिगोचरः स कृत्रिमत्वादपि वक्त्रदेशगः ।
विचार्यमाणेष्वपि पञ्चसु ध्रुवं स्वनाविमौ न व्यवहारमर्हतः ॥१८॥

स्थानत्रयव्याप्तिवशेन पुष्टः कण्ठस्थितस्तद्विरहादपुष्टः ।
मूर्ध्नि स्थितः[८] स्याद्हृदयेऽपि सूक्ष्मो नादस्ततोऽयं व्यवहारयोग्यः[९] ॥१९॥

प्राणं नकारं कवयो वदन्ति वह्निं दकारं च समामनन्ति [१०] ।
आनन्दहेतूभयशक्तिजत्वान्नादाभिधामेष स्वो बिभर्ति ॥२०॥

अनितेः प्राणनार्थस्य दहतेर्दाहकर्मणः ।
संयोगादाद्यशक्तेश्च बीजैरेव विनिर्मितः ॥२१॥

भस्मसात्प्राणिना[११] पापं कुर्वंसंजीवयंश्च तान् ।
शक्त्या संतोषयन्नर्थान्नाद इत्यभिधीयते ॥२२॥

नादो वा नदतेर्धातो[१२]-रिष्यते शब्दकर्मणः ।
[१३]कण्ठादूर्ध्वं चरन् प्राणस्तत्तत्स्थाने ध्वनिं दधत् ॥२३॥

---

१ B शम्भोर्नाभ्या ।
२ B प्राणपावनम् ।
३ A B. मुजन्नाभिदन्ता ।
४ cf. S. R 1. 3. 3, 4.
५ B. स्वतोऽति ।
६ B. पष्ठः ।
७ cf. Br. sl 23-25 ( p. 3 ) and S. R. 1. 3 5
८ A. B. स्थितस्याहृदयेऽपि ।
९ A. योग. ।
१० cf. S R . 1/3/6 & Br. sl 22 (P. 3)
११ A. प्राणिना ।
१२ B. नदते धातो ।
१३ कन्दादूर्ध्वं ।

हृत्कण्ठमूर्धसंज्ञानि त्रीणि स्थानानि तस्य च[1] ।
द्वाविंशतिप्रकारेणैकैकस्य स्युर्भिदावशात् ॥२४॥

षट्षष्टिस्थानकान्येव कैश्चिदुक्तानि योगतः ।
द्वाविंशतिविधो मन्द्रो नादः संजायते हृदि ॥२५॥

यथोत्तरमसौ तारः पूर्वपूर्वाभिकांक्षया ।
ध्वनिः संजायते देहे वीणायां तद्विपर्ययात् ॥२६॥

स एव द्विगुणो मध्यः कण्ठस्थाने यथाक्रमम्[2] ।
स एव मस्तके तारः स्यान्मध्याद्विगुणः क्रमात् ॥२७॥

॥ इति स्थानकानि ॥

## श्रुतिप्रकरणम्

त एव ध्वनयस्तत्र. श्रवणात् श्रुतिसंज्ञकाः ।
श्रुणोतेः श्रवणार्थस्य भावे क्तिः प्रत्यये श्रुतिः ॥२८॥

श्रूयन्त इति वा कर्मसाधनोऽयमिहेष्यताम् ।
श्लिष्टाः सुषुम्णया नाड्यो हृदि द्वाविंशतिः स्थिताः ॥२९॥

तिरश्चीनास्तया कण्ठे [3]तावत्यश्चैव मूर्धनि[4] ।
मरुदाहतितस्तासु जायन्ते ये पृथक् स्वनाः ॥३०॥

त एव श्रुतयस्तत्र स्वराभिव्यक्तिहेतवः ।
ऊर्ध्वमुद्यन् हृदाकाशे[5] [6]पूर्यते प्रेरितो ध्वनिः ॥३१॥

नानास्थानोपाधिभेदाद्यो नाना प्रतिभासते ।
[7]तं मतङ्गः श्रुतिं प्राह मेघे(ऽ)हर्पति-रश्मिवत् ॥३२॥

स्वरान्तरविभागेन द्विधा विश्वावसोर्मते ।
स्थानत्रितयसंयोगात् त्रिविधास्ता [8]मतेऽपरे ॥३३॥[9]

---

[1] B. तु ।
[2] cf. S. R. 1/3/7
[3] B. तावन्त्यः ।
[4] S. R 1/3/9
[5] B. हृदाकोशे ।
[6] B. पूर्यंते ।
[7] B. त
[8] A. B. मयापरे
[9] cf. Br. P. 4 & 5 for verses 33 &34 above

अन्ये [1]त्रितयवैगुण्यात् त्रैविध्यं प्रतिपेदिरे ।
वातादिदोषसंभिन्नामेके प्राहुश्चतुर्विधाम् ॥३४॥

द्वन्द्वजत्वात्तदानन्त्यं[2] केचित्सूक्ष्मदृशो जगुः ।
चतुस्त्रिद्विश्रुतित्वेन स्वराणां नवधापरे ॥३५॥

द्वाविंशतिः परे प्राहुरन्ये षट्षष्टिमेव ताः ।
विचारस्यासहत्वेन पूर्वेषां पक्षसन्ततेः[3] ॥३६॥

द्वाविंशतिः समाधत्ते कालसेनो [4]धराधिपः ।
ननु द्वाविंशतिरियं नियमो नैव युज्यते ॥३७॥

विद्याविद्भिर्यतो नाना पक्षाः कक्षीकृता इह ।
श्रूयतामवधानेन समाधाननिबन्धनम् ॥३८॥

[5]श्रुतीयत्तावबोधाय साधु साधो सुधाविधम् ।
यत्तावदुक्तमेकैकश्रुतिस्तन्नैव सुन्दरम् ॥३९॥

श्रुत्यात्मना किमेकत्वं तद्विशेषात्मना नु किम् ।
कनकं कनकाकारात्मना भिन्नमपि स्वतः ॥४०॥

कुण्डलाद्यात्मना नानेत्याद्यः पक्षो न सह्यति[6] ।
तथा ननु [7]भवन्नैव द्वितीयोऽप्युपपद्यते ॥४१॥

मिथो[8] व्यावृत्तरूपिण्यो गृह्यन्ते श्रुतयो यतः ।
यद्व्यावृत्तस्वरूपत्वं स्थानोपाधिकृतं हि तत् ॥४२॥

वीच्यादिषु [9]यथा भानोः [10]किं न स्यादेकिका ततः ।
तद्वैरूप्यं क्वचिद्वस्तुन्येकस्मिन्संभवे क्वचित् ॥४३॥

एकं नानेति वदतो नानात्वापत्तितस्तव ।
पूर्वबुद्धिविपर्यासादन्यदेवापतिष्यति ॥४४॥

---

[1] B. त्विन्द्रिय ।
[2] B तदानर्थ्यं ।
[3] B. omits verse no 36 and hence the numbering of verses in A & B tallies from verse no. 37.
[4] B नराधिपः ।
[5] A श्रुत्तीयत्ता ।
[6] B. सिद्धयति ।
[7] A. B. भवान्नैव ।
[8] B मिथ्यो ।
[9] B. तथा ।
[10] B किन्वेतरस्यादेकिका ।

तदभेदात्स्वराभेदस्तया वाद्याद्यसंभवः ।
वादित्वादिविवेकोऽयं स्वरभेदे प्रसज्यते ॥४५॥

वाद्यादिहेतुका रक्तिस्तदभावे कथं भवेत् ।
धारावाहिकविज्ञानमत्राप्यूरीक्रियेत चेत् ॥४६॥

विशिष्टविषयत्वेन तच्च भिन्नावबोधकम् ।
दीपस्य [1]कलिका सेयमितिवच्छ्रुतिरत्र तु ॥४७॥

प्रत्यभिज्ञायते नैव कथमेकत्वमश्नुते ।
अस्तु वैकत्वमेतासां न स्यात्स्वरसमुद्भवः ॥४८॥

एकमारम्भकमहो महते बुद्धिवैभवम् ।
न श्रुतिद्वैतपक्षोऽपि तत्त्वकक्षावगाहकः[2] ॥४९॥

तद्विता(ना) किं स्यानभेदोपाधिजाः स्वरयोगजाः ।
नाद्यस्त्रित्वप्रसक्तेर्नापरो हेतुत्वभङ्गतः ॥५०॥

समस्तं त्रित्वपक्षोऽपि न क्षमः सूक्ष्मचक्षुषाम् ।
स्यानत्रैधात्[3] श्रुतेस्त्रैधं यद्युच्येत विचेतसः ॥५१॥

प्रतिस्थानं मन्द्रमध्यतारभेदव्यवस्थया ।
नवत्वापत्तितः किंचिन्नवत्वं वचसां भवेत् ॥५२॥

नवीना नवता तर्हि भरतोक्तासु युज्यताम् ।
मैवं वोचस्तया नैव नवता भवतोह्यताम् ॥५३॥

तत्सूत्रार्थानवगमादवधारय तद्यथा ।
द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः ॥५४॥

द्विश्रुतिः कम्पनाज्जातस्त्रिश्रुतिश्चार्धमुक्तितः ।
चतुःश्रुतिर्व्यक्तमुक्तेरिति. श्रुतप्रकरणे. ॥५५॥

न विवक्षा यतो वीणास्वराणां सारणावशात् ।
श्रुतीयत्तापरिज्ञानं मुनिनैवोपपादितम् ॥५६॥

संतोष्टव्यं च भवता पक्षे षट्षष्टिसंज्ञके ।
तथा हि श्रुतिसम्बन्धिषट्षष्टित्वं यदीरितम् ॥५७॥

तत्प्रतिस्थानकं द्वाविंशतिश्रुतितयात्र तु ।
स्थानभेदान्न तद्भेदो न मिथोऽन्यः स्वरूपतः ॥५८॥

---

[1] B. कालिका येयं ।
[2] B. अवगाहक ।
[3] B. त्रैधा ।

तत्र न स्थानभेदोऽस्ति रूपभेदकरः क्वचित् ।
तथा हि सौधकक्षासु[१]-त्तरोत्तरगतास्वपि ॥५९॥

सञ्चरन् पृथिवीनाथः स एवैकः[२] प्रतीयते ।
तत्र चेत्प्रत्यभिज्ञास्ते सास्त्रकेन [३]निषिध्यते ॥६०॥

प्रतिस्थानं न चेद्भिन्ना श्रुतिः स्यात्तद्ध्रुवत्वतः ।
भिन्ना स्वराः प्रसज्येरन् तज्जा रागास्तु तत्त्वतः ॥६१॥

[४]त्रिस्थानव्यापिनो न स्युरित्यायुष्मन् सुखी भव ।
आनन्त्यमपि दुःसाध्यमिष्टं साधयतस्तव ॥६२॥

व्यक्तपक्षे[५] भवेत्तस्मिँश्श्रुतीनामप्यनन्तता ।
तदानन्त्यात्स्वरानन्त्यं ततो मुनिशतैरपि ॥६३॥

तद्धर्म्मापरिज्ञानाल्लक्ष्म कर्तुं न शक्यते ।
दोषोपाधिकृतो भेदो न स्वरूपस्य भेदकः ॥६४॥

द्विचन्द्रादिमतिर्लोके तात्त्विकत्वं न गाहते ।
विकृतस्वरगास्वासु नान्यताध्यक्षगोचरः ॥६५॥

तद्रूपस्यान्यथाभावो न मानान्तरगोचरः ।
तस्माद्द्वाविंशतिर्मतं राजराजस्य सम्मतम् ॥६६॥

तदभिव्यक्तये वक्ष्ये द्विविधं श्रुतिमण्डलम् ।
तत्र तण्डाकृति प्रोक्तं श्रुत्युत्पत्तावपि स्फुटम् ॥६७॥

इदानीं मण्डलावृत्या [६]सम्यक्त्वेनाभिधीयते ।
तदुदाहृतये पञ्च [७]तिरश्चीनास्तथोर्ध्वगाः ॥६८॥

रेखा षड्क्रमतो न्यस्या स्थानद्वाविंशतिप्रमाः[८] ।
तत्र प्रथमरेखातः स्थापनीया[९] क्रमेण ताः ॥६९॥

षड्जे कान्ता-प्रभावत्यौ सिद्धिश्चैव तु सुप्रभा ।
उग्रा शिखा च दीप्ता च स्युरेता ऋषभानुगाः ॥७०॥

---

[१] B सात्तरोतरगतस्वपि ।
[२] B एवैकः ।
[३] B प्रतिषिध्यते ।
[४] B ध्यायिनो ।
[५] B पेक्षे ।
[६] सम्यक् केनाभिधीयते ।
[७] A स्तिरश्चीना ।
[८] B लमा ।
[९] B स्थापनीया ।

निर्द्द तिर्ह्लादिनीति द्वे गान्धारे वसतः श्रुती ।
क्षान्तिः सर्वंसहा धीरा विभूतिर्मध्यमे स्थिता.[1] ॥७१॥

मालिनी चपला लोला तथा रत्नप्रभावती ।
चतस्रः पञ्चमे ज्ञेया धैवतश्रुतयः पुनः ॥७२॥

[2]विकल्पिनी [3]च [4]शान्ता च[5] हृदयोन्मूलिनी तथा ।
विस्तारिणी प्रसक्ता च निषादस्य श्रुती उभे ॥७३॥

स्वरभेदनिदानं तु श्रुतिजातीरथ ब्रुवे ।
दीप्ताऽऽयता च करुणा [6]मृदुर्मध्येति जातयः[7] ॥७४॥

पञ्च तासां च विज्ञेया व्यवस्थैवं प्रतिस्वरम् ।
षड्जे दीप्तायता चाथ मृदुर्मध्येति संस्थिताः ॥७५॥

ऋषभे करुणा मध्या मृदुर्गान्धारगे पुनः ।
दीप्तायते तथा दीप्ताऽऽयता च मृदुसंज्ञिका ॥७६॥

मध्या च मध्यमे प्रोक्ता जातयः पञ्चमे पुनः ।
मृदुर्मध्यायताख्या च करुणा धैवते पुनः ॥७७॥

करुणा चायता मध्या निषादे वसतस्तथा ।
दीप्ता मध्येति जातीनां तासां भेदानथ ब्रुवे ॥७८॥

तीव्रा रौद्री वज्रिकोग्रा चतस्रो दीप्तिकाभिधाः ।
कुमुद्वत्यायतायाः स्युः क्रोधा चाथ प्रसारिणी ॥७९॥

संदीपनी रोहिणी च पञ्च भेदा इमे क्रमात् ।
दयावती तथालापिन्यथ प्रोक्ता मदन्तिका ॥८०॥

करुणायास्त्रयो भेदा मृदोर्भेदचतुष्टयम् ।
मन्दा च रतिका प्रीतिः क्षमेति मध्याय षड्विधा ॥८१॥

छन्दोवती रञ्जनी च मार्जनी रक्तिका तथा ।
रम्या च क्षोभिणीत्यासामथ ब्रूमः स्वरस्थितिम् ॥८२॥

तीव्रा कुमुद्वती मन्दा छन्दोवत्यस्तु षड्जगाः ।
दयावती रञ्जनी च रतिका चर्षभाश्रिताः ॥८३॥

---

[1] B स्थिता ।
[2] B विरोधिनी ।
[3-4&5] B चला शान्ता ।
[6] B मृदु मध्येति ।
[7] cf S R 1/3/27-38 for verses 71-86 above.

रौद्री क्रोधा च गान्धारे वज्रिका च प्रसारिणी ।
प्रीतिश्च मार्जनीत्येता मध्यमे तद्भिदा मताः ॥८४॥

क्षिती रक्ता च संदीपिन्यालापिन्यथ पञ्चमे ।
मदन्ती रोहिणी रम्याऽभिधास्तिस्रस्तु धैवते ॥८५॥

उग्रा च क्षोभिणीति द्वौ भेदौ प्रोक्तौ निषादगौ ।
घटीयन्त्रवदेतेषु स्याच्छ्रुतीनां व्यवस्थितिः ॥८६॥

द्वात्रिंशदब्जपत्राणां[1] सूच्यग्रेण विभेदने ।
यः कालः स श्रुतेर्मानमुक्त. कैश्चिद्विचक्षणैः ॥८७॥

आयतत्वे[2] मार्दवे च श्रुत्युत्कर्षापकर्षणे ।
यः कालः स श्रुतेर्मानमवोचत्कृष्णभूपतिः ॥८८॥

तत्कालोपाधिवशतोऽप्रत्यक्षोऽपि स्वभावतः ।
स भवेत्सूक्ष्मबुद्धीनां श्रवणेन्द्रियगोचरः ॥८९॥

अथ प्रयोजनं तावत्प्रोच्यते श्रुतिरूपणे ।
विभागो ग्रामयोर्यस्मादेतत् (ज्) ज्ञानेन जायते ॥९०॥

तथाहि पञ्चमः पूर्णः षड्जग्रामस्य बोधकः ।
त्रिश्रुतिर्मध्यमग्राममाचष्टे नेति केचन ॥९१॥

ग्रामभेदो यतो वादिसंवादिज्ञानगोचरः ।
सपौ सवादिनौ षड्जमपौ मध्यममाहतु ॥९२।

न तद्वाद्यादिसंवित्तिर्यतः स्याच्छ्रुतितः स्फुटा ।
किंच साधारणकृते स्वरव्युत्पादनं कृतम् ॥९३॥

रक्तिमार्गाच्च्युताना च[3] न चेदुक्तं निरूपणम् ।
नैतत्स्वरस्वरूपेण ताः स्युः[4] श्रोत्रसुखावहाः ॥९४॥

तदभिव्यक्तये कुर्वे विपञ्चीद्वन्द्वमादरात् ।
वीणैव श्रुतिसंख्याया लाभे मानं यतो मतम् ॥९५॥

यत्किंचिद्गीयते तच्च सर्वं (वं) तन्त्र्यां प्रतिष्ठितम् ।
तन्त्रिकोणादिवैगुण्ये प्रमाणं वंशजाः स्वराः ॥९६॥

---

[1] B पात्राणा ।
[2] B adds च ।
[3] B. omits च ।
[4] B. स्स्युः ।

अत्र नादसमत्वार्थं द्वे वीणे सदृशाकृती ।
श्रोतुर्यथैकवीणा च वादने[1] [2]स्यान्मतिस्तया

कार्ये निरन्तरे साक्षाद्द्वाविंशतिकतन्त्रिके ।
तयोरेका ध्रुवा कार्या द्वितीया चञ्चला भवेत् ॥९८

मध्यतन्त्रिकयोर्न स्याद्यया ध्वन्यन्तरं तया ।
स्थाप्या द्वाविंशतिस्तन्त्र्यः प्रत्येकं तासु वादितः ॥९९॥

अतिमन्द्रध्वनेः किंचिदुच्चोच्चतरतायुजः ।
उत्तरोत्तरगास्तन्त्र्यः स्थापनीयाः परा अपि ॥१००॥

उत्तरोत्तरतीव्राः स्युरधराधरवेशिताः ।
तासु यो जायते नादः स ज्ञेयः श्रुतिसंज्ञकः ॥१०१॥

इतः परं तयोः स्थाप्याः सप्त षड्जादयः स्वराः ।
तत्रादितो गणनया स्थाप्यः षड्जश्चतुःश्रुतिः ॥१०२॥

तुरीयायां तु सप्तम्या[4]-मृषभस्त्रिश्रुतिस्ततः ।
नवम्यां द्विश्रुतिर्गस्तु त्रयोदश्यां चतुःश्रुतिः ॥१०३॥

मध्यमः सप्तदश्यां तु पञ्चमोऽथ चतुःश्रुतिः ।
विंशतिप्रमितायां धस्त्रिश्रुतिर्द्विश्रुतिस्ततः ॥१०४॥

द्वाविंशतितमायां [5]निर्निवेश्यास्ते यथाक्रमम् ।
अत्र तत्तत्स्वराविष्टाः श्रुतयो नान्यकारणम् ॥१०५॥

पूर्वासां करणत्वे तु वादित्वादिर्न सिद्ध्यति ।
श्रुतेर्निदर्शनार्थं तु स्यात् ध्रुवैकापरा चला ॥१०६॥

चलायां सारयेत्तन्त्रीः स्वरश्रुतिगताः क्रमात् ।
आनेयाः प्रथमं सप्त स्वराः स्वोपान्त्यतन्त्रिकाम् ॥१०७॥

तत्र ध्रुवास्वरेभ्यस्ते चलवीणागताः स्वराः ।
स्युः श्रुत्यैकया हीनाः प्रथमे सारणे कृते ॥१०८॥

---

[1] A. द्वादने ।
[2] A. स्यात् ।
[3] cf. S. R. 1/3/11-22 for verses 97-111 above
[4] B. सप्तम्या ऋषभ ।
[5] B. omits नि ।

एवमेव द्वितीयायां श्रुतिद्वयलयादिमे ।
श्रुतिद्वयापकृष्टाः [1]स्युर्गनी तत्र चलागतौ ॥१०९

द्विश्रुती ध्रुववीणाया ऋधयोर्विशतः क्रमात् ।
त्रिश्रुती तु तृतीयस्यां सपयोर्विशतो रिधौ ॥११०॥

चतुर्थ्यां समपास्तद्वन्निगमेषु विशन्ति हि ।
एवं स्युर्विकृताः सर्वे ध्रुवास्वरव्यपेक्षया ॥१११॥

प्रथमायां सारणायां चलवीणागताः स्वराः ।
द्वितीयस्यां[2] सारणायां चतस्रः श्रुतयः स्फुटाः ॥११२॥

तृतीयस्यां षडेवं तु चतुर्थ्यां द्वादशैव तु ।
लभ्यन्ते श्रुतयः पूर्णा द्वाविंशतिरिति स्फुटम् ॥११३॥

चतस्रः सारणाः प्रोक्ताः स्वराणामिह तत्त्वतः ।
अतः परतरं नास्ति संभवः श्रुत्यभावतः ॥११४॥

श्रुतीयत्तापरिच्छेदस्तारतम्यं स्वराश्रयम् ।
काकल्यादिपरिज्ञानं सारणानां प्रयोजनम् ॥११५॥

पञ्चमो मध्यमग्रामे त्रिश्रुतिर्षड्वतः पुनः ।
चतुःश्रुतिरिति स्यातिर्न [3]तथाप्युपलभ्यते ॥११६॥

संबन्धः प्राक्प्रतीतस्योपलम्भः परिकीर्तितः ।
उपलब्ध्वा(उपलभ्य) न केनापि श्रुतयः प्रागितः स्फुटाः ॥११७॥

किं प्रमाणश्च कीदृश्यो यत्समूहः स्वरो भवेत् ।
योगिगम्यस्वरूपास्ता [4]नास्मदादिग्रहोचिताः ॥११८॥

तथा स्वरूपाभावेऽपि वर्णांशवद्विहास्तु चेत् ।
न शास्त्रान्तरतोऽप्येषामुपलब्धेस्तथा नहि ॥११९॥

न सर्वतोपलभ्यन्ते श्रुतयः किन्तु तत्र च ।
कोणादिप्रगुणत्वेन तद्गुम्फोऽस्मिन्प्रकल्प्यते ॥१२०॥

नैव कल्पितवस्तूत्थं विज्ञानं कल्पितं भवेत् ।
न कल्पिते विषाणेऽपि विषाणी शशको भवेत् ॥१२१॥

---

[1] B. स्स्युः
[2] A. द्वितीयस्या ।
[3] B. तया ह्युपलभ्यते ।
[4] A. न स्मदादि ।

अत्रोच्यते यथोच्चारे चतस्रः स
श्रोतुः प्रतीतिजनकास्तथा सादिशता (गता) इह ॥१२२॥

अनादिवासनावासवशात् श्रोतुर्नरस्य ताः ।
रञ्जयन्ति मनः पूर्णा अपूर्णाश्चापरञ्जिकाः ॥१२३॥

तस्मादत्र प्रमाणं तु गातृश्रोत्रोर्मनो मतम् ।
प्रयोगसौक्ष्म्यादासां तु स्वरसाधारणे यथा ॥१२४॥

स्वरा ग्रामौ मूर्च्छनाश्च नानास्थाना निवृत्तयः ।
शुष्कं (स्वर) साधारणं वर्णा ह्यलंकाराः सधातवः ॥१२५॥

श्रुतयो जातयश्चैव नित्यं स्वरगतात्मकाः ।
दारव्यां समुदायोऽयं वीणायां समुदाहृतः ॥१२६॥

स्वरा ग्रामावलंकारा वर्णाः स्थानानि जातयः ।
साधारणं च शारीर्यां वीणायामेव संग्रहः ॥१२७॥

॥ इति श्रुतिप्रकरणम् ॥

## ॥ स्वरप्रकरणम् ॥

राजेर्वा रञ्जतेर्वापि स्वरतेर्वा स्वरस्य ।
रौतेर्वा स्वरशब्दोऽयं निरुक्तः[1] कृष्णभूभुजा ॥१२८॥

राजते जातिरागादौ स्वयं रञ्जयतीह तान् ।
रञ्जकः श्रोतृमनसां गुणान् रञ्जयतीत्यपि ॥१२९॥

शब्दरूपा चित्तवृत्ति स्वास्थ्यावस्थाविमोचनात् ।
उपताप्य स्वमाधुर्यातिशयेनाक्षिपन्ति ये ॥१३०॥

ते स्वराः स्वरशास्त्रज्ञवालसेनस्य संमताः ।
सामाद्येप्वाऽम्बिकारौद्री[2]-स्याभिश्चतसृभिर्मतः ॥१३१॥

शक्तिभिश्च तथा साक्षात्संनिविष्टसमर्पितैः ।
स्थानत्रयप्रभिन्नाभि-[3]र्नाभेरूर्ध्वं पिपासतः ॥१३२॥

ध्वनिसङ्घस्य षड्जादिप्रतीतिः परिकल्पिता ।
अत्र केचिच्छ्रुतिमात्रं स्वरमिच्छन्ति सूरयः ॥१३३॥

---

[1] B. निरुक्त ।

[2] A. रौद्री ।

[3] A. प्रभिन्नाभि नाभे etc.

तन्मते जलदध्वानः स्वरत्वमुपगच्छति ।
घटे स्युस्तन्तवो यद्वत्त तथा श्रुतयः स्वरे ॥१३४॥

इति श्रुतिसमारब्धः स्वर इत्यं[1] न सुन्दरम् ।
अस्तु वा मिलितानां वा पृथक्स्थान[2]-स्वमिच्छसि ॥१३५

नाद्यः क्षणविनाशित्वान्नान्योऽनारम्भकत्वतः
स्वरता तत्समूहस्य सुतरामप्यसङ्गता ॥१३६

समूहिनामस्फुटत्वाद्वने मृगसमूहवत् ।
गादिवर्णसमूहेऽपि गोशब्दप्रतिपत्तिवत् ॥१३७॥

श्रुतयोऽनुक्रमेणैव न हि दृश्याः कदाचन ।
एककालोपलम्भस्य प्रसक्तेस्तद्द्वयोरिह ॥१३८॥

व्यङ्ग्यव्यञ्जकभावोऽपि नानयोः संभवी स्वतः ।
मिथ्यात्वापत्ति[3]-तस्तासां न विवर्तोऽपि संमतः ॥१३९॥

समुच्चयस्य चेत्तत्त्वं नैवमित्यपि सुन्दरम् ।
कथं समुच्चीयमानश्रुतिज्ञानं विना यतः ॥१४०

समुच्चयस्योपलब्धिस्तद्धर्मस्य कथं भवेत् ।
श्रुतीनां तिसृणां ग्रामे मध्यमेऽस्ति समुच्चयः ॥१४१॥

षड्जे[4] चतसृणां सोऽस्ति न भिन्नौ पञ्चमौ कथम् ।
सपञ्चेरमेवमष्टौ स्वरा इति विरुद्धता ॥१४२॥

अन्तरः काकली वापि चतुःश्रुतिसमुच्चयात् ।
कथंचिदेव न स्यातां तत्समुच्चयगोचरौ ॥१४३॥

श्रुतिरेव स्वरस्ते चेद् भिन्नत्वात्तत्परस्परम् ।
श्रुतेः स्वरचतुर्थ्यात्मा किं तृतीयश्रुतिर्भवेत् ॥१४४॥

पञ्चमावेरनेकत्वप्रसक्तेरिति नोचितम् ।
श्रुतेरनुस्वनः सोऽय भवद्भिरभिधीयते ॥१४५॥

अन्यधर्मो न चान्यत्र न्यायादस्मान्न तद्यथा ।
अनुस्वरस्तृतीयः स्यान्न चतुर्था(र्थो?) भवेद् ध्रुवम् ॥१४६

---

[1] A इयं ।
[2] B. स्थानात्व ।
[3] A. आपतितस्तासा ।
[4] A. adds च ।

ग्रामद्वयेऽस्य पधयोरनेकत्वं भवत्विह ।
गनिद्वयोस्तथैवास्तु काकल्यन्तरयोर्भिदा ॥१४७॥

सप्तस्वरा इति मतं भिद्येतैरयुक्तमादितः ।
अत्र प्रतिसमाधत्ते कामाक्षाचरणानुगः ॥१४८॥

पूर्वासां तु श्रुतीनां यदुक्ता कैश्चिदहेतुता ।
द्व्यणुकादिक्रमः किं तैर्न दृष्टः सृष्टिगोचरः ॥१४९॥

अस्तु वा किन्तु तेषां च साधु संगीतवेदिता ।
श्रुत्यन्तरसमारब्धशरीरस्वरसंभवः ॥१५०॥

साधारणविधिस्तेषां जातो दत्तजलाञ्जलिः ।
काकल्यन्तरयोस्तस्मात्सुदूरोत्सारिता कथा ॥१५१॥

नैयता यदि कल्प्यन्ते तुर्यादिश्रुतिषु स्वराः ।
स्वोपान्त्यश्रुतिगामित्वे कथं[1] ग्रामविनिर्णयः ॥१५२॥

न चतुर्थ्यात्मको धः स्यान्न पस्त्रिश्रुतिको भवेत् ।
श्रुतेर्नियमतस्तस्माद्ग्रामः कोऽत्रावतिष्ठताम् ॥१५३॥

अन्यासां हेतुता योक्ता तन्तुसंलग्नवालवत् ।
संपद्येरन् ततो विद्वन् त[2] एकश्रुतिकाः स्वराः ॥१५४॥

द्वाविंशतिः श्रुतिरिति सिद्धान्तोऽपि विलीयते ।
पराकरिष्यते तत्रैकस्यारम्भ[3]-कृताग्रहः ॥१५५॥

हेतुत्वे समुदायस्य विचारोऽय प्रवर्तते ।
पृथगारम्भकत्वे तु स्वरानन्त्यं प्रसज्यते ॥१५६॥

वक्तव्ये समुदायस्य तत्त्वे सापेक्षता भवेत् ।
एवं दोषाः प्रसज्येत(ज्येरन्) अन्योन्याश्रयतादयः ॥१५७॥

तदास्तां ग्रामचिन्तास्तमगम[4]-स्वरसङ्ख्या ।
पूर्वपूर्वा ततो भूत्वोत्तरोत्तरगतश्रुतेः ॥१५८॥

कारणं च ततस्त्वन्त्या स्वरस्योद्बोधकारण(क ?)म् ।
अयं चतुःश्रुतिरयं त्रिश्रुतिश्चेति या कथा ॥१५९॥

न काकभक्षिता किन्तु सापि तेषां महात्मनाम् ।
तस्मात्तत्पूर्वपक्षस्य सिद्धान्तस्य च निर्णयः ॥१६०॥

---

1. B. adds न ।
2. B तावेक ।
3. B. आरम्भे ।
4. B. मगमस्त्वर ।

तेषामेव विचारस्य गोचरो नहि मादृशाम् ॥१६१॥

ब्रह्मग्रन्थिसमुत्थवायुहननात्[1]-तत्तत्स्वरस्वाश्रय-[2]
स्थानस्या परुषा श्रुतिर्जनयति स्निग्धानुनादात्मकम् ।
नादं त स्वरसंज्ञकं निगदति श्रीब्रह्मशैलाधिप
कामाक्षाचरणारविन्दमधुप श्रीकालसेनो विभु ॥१६२॥

अन्वावय[3]-व्यवयवत्वविकल्पसाङ्ग-
संभावनाविरहत किमु संभुवि स्यात ।
तत्तत्स्वरस्य जनने सुचिर श्रुतीनां
हेतुत्वमेतदभियुक्ततया न नोद्यम् ॥१६३॥

अचिररुचिसकाशास्तास्वतोऽपीह विद्वान
ननु चरणसमूह स्वात्मज [4]कंचिदेतम् ।
स्फुटमिव जनयन्ति प्रोतरूप तुरीय-
श्रुतिजनितनिनादे य स्वरत्वं प्रयाति ॥१६४॥

यदवोच पुरा भेदोऽनुध्वनेर्ध्वनिभेदत ।
न तत्कारणभेदेऽपि कार्यभेदो न दृश्यते ॥१६५॥

यथा गोमयसर्पारिवृश्चिकेभ्यो भवन्नपि ।
वृश्चिको न विभिद्येतेत्येतद् दृष्टचर त्वया ॥१६६॥

स्वराश्रयश्रुतेरेव तृतीयादिश्रुतेरपि ।
जातध्वनेर्विभेदेऽपि न भेदोऽनुध्वनेरिह ॥१६७॥

यदुक्त पययोर्ग्रामद्वयभेद प्रसज्यते ।
तच्छ्रुत्यनुस्वनैक्येन प्रत्यवस्था न ता न सा ॥१६८॥

गनिद्वयाम भेदोऽपि काकल्यन्तरयोरपि ।
मार्दवायतता[5] भेदात या पञ्चमविभिन्नता ॥१६९॥

ग्रामद्वयेऽपि गदिता निगदा सा सती मता ।
यत [6] स्थानत्रयोदभूत[7]-षड्जे भेद प्रसज्यते ॥१७०॥

---

[1] A तत्तस्वर ।
[2] B साश्रय ।
[3] B अन्वावयवव्यवयत ।
[4] B किंचिदेतम्।
[5] B मार्दवायततो ।
[6] A यत्स्थान ।
[7] B भूत ।

किञ्चात्र बहुनोक्तेन तीव्रतीव्रतरत्वत ।
विभे(भि)द्येरन् स्वरा सप्त स्थानत्रितयवर्तिन ॥१७१॥

वैलक्षण्यादय[1] व्यक्तेर्भिन्ना[2] सन्तु पृथक् स्वरा ।
स्वरत्वजातियोगेन तदेकत्व कुतो न हि ॥१७२॥

अतोऽनुरणनस्यैव मृदुत्व तीव्रता तथा ।
स्वरोच्चतानीचतयोर्हेतुरित्येव साम्प्रतम् ॥१७३॥

श्रुते [3]स्वरत्वपक्षोऽपि पूर्वमेव निराकृत ।
ग्रामद्वये पञ्चमस्य श्रुतिभेदाच्च या भिदा ॥१७४॥

तदैक्यात्ते[4] श्रुती नैव भिन्ने तत्स्वास्थ्यमाप्यताम् ।
काकलित्वान्निषादस्य गान्धारस्यान्तरत्वत ॥१७५॥

ऐक्यादैक्य तच्छ्रुतीनामिति सिद्धान्तवाक्यत ।
कालसेनधराधीशोपदेशोऽ(शा)मृतपायिन ॥१७६॥

स्वरशास्त्रविदोऽनेन सचरन्तु यथा[5] बुधा ।
एव श्रुतिषु सिद्धासु द्वाविंशतिषु ते स्वरा ॥१७७॥

सिद्धा सप्तैव तल्लक्ष्म सिद्धमेतदुदाहरेत् ।
श्रुत्यनन्तरभावी य स्निग्धोऽनुरणनात्मक[6] ॥१७८॥

योगाद्वा रूढितो वापि स स्वर श्रोतृरञ्जक ।
स्वत स्वस्थानलाभे हि गातृश्रोत्रो स्वर स्वयम् ॥१७९॥

रञ्जक स्यात श्रुतिस्तत्त्वलाभद्वारेण नित्यश ।
एको नित्योऽविनाशी च व्यापक सर्वगोऽपि सन् ॥१८

जातिभाषादिसयोगादनन्त कीर्तित स्वर ।
द्व्यधिष्ठाना स्मृता वैणा शारीराश्चेति [7]तेऽत्र च ॥१८१॥

प्राणाभिहननेनैव तीव्रतीव्रतरेण वै ।
शरीर इव यत्रोऽपि स्वरनिष्पत्तिरीरिता ॥१८२॥

---

1. B वैलक्षण्या ।
2. A भिन्ना ।
3. B स्वरत्व ।
4. B तदैक्याते ।
5. B यथा ।
6. cf S R 1/3/24, 25
7. A' ते यत्र ।

यथाऽऽदर्शे तु बिम्बस्य वामदक्षिणपर्ययः ॥१८३॥

व्यङ्ग्यव्यञ्जकभावो वा तयोरिष्टो बुधैरिह ।
अथवा न विपर्यासः सस्थाने तद्द्वयोरिह ॥१८४॥

वादनस्य तु[1] सौकर्यात्[2] स्थाप्यते सा विपर्ययात् ।
वीणाशब्देन [3]वाग्रूपा सरस्वत्यभिधीयते ॥१८५॥

अथ स्वराणां षड्जादीनां निरुक्तानि समासतः[4] ।
पूर्वशास्त्रानुसारेण कुरुते कालजिन्नृपः ॥१८६॥

उरो-नासा-कण्ठ-तालु-जिह्वा-दन्तेष्वनुक्रमात्[5] ।
षट्सु स्थानेषु जातत्वात्[6] षड्ज इत्यभिधीयते ॥१८७॥

प्रकाशार्थस्य जयतेर्डे [7]गत्यर्थात्षिडे कृति ।
टिलोपे षड्ज इत्युक्तः स्वरेषूत्कर्षकारकः ॥१८८॥

नाभेः समुद्गतो[8] वायुरुर:कण्ठ-[9]समाहतः ।[10]
नदद्वृषभवद् यस्मात्तस्माद् ऋषभ ईरितः ॥१८९॥

यद्वा ऋषभवद् भाति[11] ऋषभः परिकीर्तितः ।
नाभेः समुद्गतो वायुः कण्ठशीर्षसमाहतः ॥१९०॥

गान्धर्वसुखहेतुत्वाद् गान्धारः परिकीर्तितः ।
गोशब्दोपपदाद्धातोः कर्मण्यण्यथवा मतः ॥१९१॥

स एव मध्यमः प्रोक्तो मध्यस्थानसमाश्रयात् ।
नाभेः समुत्थितो वायुरोष्ठकण्ठशिरोहृदि,

---

[1] B omits तु ।
[2] B सौकुर्यात् ।
[3] B प्राग्रूपा ।
[4] A समासतः ।
[5] cf the verse of S S quoted by Simhabhūpāla in his commentary on S R 1/3/24
[6] A जातत्वा ।
[7] B डेर्गत्यर्थात् ।
[8] A समुद्गते ।
[9] B समाहितः ।
[10] cf as in 5 above for verses 189-196 abo[ve]
[11] B भाति ।

किन्नात्र बहुनोक्तेन तीव्रतीव्रतरत्वत ।
विभे(भि)द्येरन् स्वरा सप्त स्यानत्रितयर्वा...

वैलक्षण्यादय[1] व्यक्तेर्भिन्ना[2] सन्तु पृथक् स्वरा ।
स्वरत्वजातियोगेन तदेकत्व कुतो न हि ॥१७२॥

अतोऽनुरणनस्यैव मृदुत्व तीव्रता तथा ।
स्वरोच्चतानीचतयोर्हेतुरित्येव साम्प्रतम् ॥१७३॥

श्रुते [3]स्वरत्वपक्षोऽपि पूर्वमेव निराकृत ।
ग्रामद्वये पञ्चमस्य श्रुतिभेदाच्च या भिदा ॥१७४॥

तदैक्यात्ते[4] श्रुती नैव भिन्ने तत्स्वास्थ्यमाप्यताम् ।
काकलित्वान्निषादस्य गान्धारस्यान्तरत्वत ॥१७५॥

ऐक्यादैक्य तच्छ्रुतीनामिति सिद्धान्तवाक्यत ।
कालसेनधराधीशोपदेशोऽ(शा)मृतपायिन ॥१७६॥

स्वरशास्त्रविदोऽनेन सचरन्तु यथा[5] बुधा ।
एव श्रुतिषु सिद्धासु द्वाविंशतिषु ते स्वरा ॥१७७॥

सिद्धा सप्तैव तल्लक्ष्म सिद्धमेतदुदाहरेत् ।
श्रुत्यनन्तरभावी य स्निग्धोऽनुरणनात्मक[*] ॥१७८॥

योगाद्वा रूढितो वापि स स्वर श्रोतृरञ्जक ।
स्वत स्वस्थानलाभे हि गातृश्रोत्रो स्वर स्वयम ॥१७९॥

रञ्जक स्यात श्रुतिस्तत्त्वलाभद्वारेण नित्यश ।
एको नित्योऽविनाशी च व्यापक सवगोऽपि सन् ॥१८

जातिभाषादिसयोगादनन्त कीर्तित स्वर ।
द्वयधिष्ठाना स्मृता वैणा शारीराश्चेति [*]तेऽत्र च ॥१८१॥

प्राणाभिहननेनैव तीव्रतीव्रतरेण वै ।
शरीर इव वशेऽपि स्वरनिष्पत्तिरीरिता ॥१८२॥

---

[1] B वैलक्ष्यणा ।
[2] A भिन्ना ।
[3] B स्वरत्व ।
[4] B तदैक्यात्ते ।
[5] B यथा ।
[*] cf S R 1/3/24, 25

गान्धारस्यान्तरत्वे तु गृहीतेऽस्य श्रुतिद्वये।
गान्धारेणाच्युतत्वेन तदैको विकृतो मत ॥२०५॥

साधारणे तु गान्धार श्रुतिमाद्या हरेद्यथा।
[1]पञ्चमश्चान्तिमामस्य तदाऽन्यो विकृतो मत ॥२०६॥

पञ्चमो मध्यमग्रामे त्रिश्रुतिर्विकृतो भवेत्।
धैवतेन गृहीतायामन्तिमाया श्रुतौ पुन ॥२०७॥

मध्यमस्य श्रुतिं प्राप्य साधारण्ये चतु श्रुति ।
धैवतो मध्यमग्रामे विकृत स्याच्चतु[2]-श्रुति ॥२०८॥

साधारण्ये कैशिके तु निषादस्त्रिश्रुतिर्भवेत्।
काकलीत्वे पुन सा स्याच्चतु श्रुतिरिति द्विधा ॥२०९॥

षडजे द्वौ ऋषभे चैको[3] गमपेषु द्वय द्वयम्।
एको धे नौ द्विक भेदा द्वादशैमे प्रकीर्तिता ॥२१०॥

द्वावेको द्वौ द्वय च द्वितयमथ तथैको द्विक च क्रमेण
स्युर्भेदा द्वादशैते सरिगमपधनिष्वेवमेव प्रसक्ता ।
ते शुद्धै सप्तसख्यैर्विकृतमुपगता योजिता सप्तमेतै-
रेकोन(ना)[4]विंशतिस्थात्यय भुवि य इमान् ब्रूमहे तान्विशिष्य ॥२११॥

षड्ज ब्रूते मयूर स्वरवरमृषभं चातकाख्यो ब्रवीति
छागो गान्धारसज्ञं वदति पुनरिम मध्यम क्रौञ्चपक्षी।
प्राप्ते काले वसन्ते निगदति मधुर पञ्चम कोकिलाह्वो
मण्डूको धैवताङ्क कथयति सतत कुञ्जरेन्द्रो निषादम्[5] ॥२१२॥

वादी विवादी[6] सवादी चानुवादीतिसज्ञक ।
चतुर्विधा स्वरास्ते च तल्लक्ष्म प्रागुदाहृतम्[7] ॥२१३॥

---

[1] B पञ्चमस्त्वन्तिमामस्य।

[2] A चतु।

[3] B चैका।

[4] रेकोना विंशति is better as it conforms to the order of गुरु syllables in the metre

[5] cf S R 1/3/46-47

[6] B विवादि।

[7] cf. S R 1/3/47

पञ्चस्थानसमुद्भूतः पञ्चमस्तेन कीर्त्यते ।
विस्तारयत्येक एव ग्रामो यस्मादयं स्वयम् ॥१९३॥

पञ्चेर्विस्तारयदनात् पञ्चमः सम्मतः सताम् ।
स एव नाभिहृत्कण्ठशिरस्तालुसमाहृतः ॥१९४॥

जातो यस्मात्ततोऽप्येष पञ्चमो व्यपदिश्यते ।
धीमद्भिरेव बोध्यत्वाद्धैवतोऽयमुदाहृतः ॥१९५॥

निषीदन्ति स्वरा यत्र तं निषादं बुधा[१] जगु. ।
योगरूढिवशादेते न नियोज्या निरुक्तितः ॥१९६॥

मन्द्रं[२] मध्यं च तारं च तेषां स्थान त्रिधा मतम्[३] ।
स्वरा अपि त्रिधा तेन भिद्यन्ते स्थानभेदतः ॥१९७॥

एते द्विधा पुन. प्रोक्ताः शुद्धाशुद्धविभेदतः[४] ।
श्रुत्युत्कर्षापकर्षाभ्यां हीनाः शुद्धा मता सताम् ॥१९८॥

तद्युक्ता द्वादश प्रोक्ताः विकृता. स्वरवेदिभिः ।
तद्यथात्र द्विधा षड्जश्च्युताच्युतभेदतः ॥१९९॥

गृह्णीते चेन्निषादोऽस्य श्रुतिमाद्या तयान्तिमाम् ।
ऋषभ. स्यात्तदा षड्जश्च्युत.[५] साधारणीभवेत् ॥२००॥

काकलीत्वे निषादस्य निषादेन श्रुतिद्वये ।
गृहीते द्विश्रुतिः षड्जो भवेदच्युतसञ्ज्ञकः ॥२०१॥

ऋषभोऽपि यदा षाड्जीं श्रुतिमन्त्यामपाहरेत् ।
चतु श्रुतित्वाद् विकृतः साधारणविधो तदा ॥२०२॥

साधारण(स)त्रिश्रुतिः[६] स्यान्मध्यमस्य श्रुतिं श्रयन् ।
स्यादन्तरश्च गान्धारो मध्यमस्य श्रुतिद्वयात् ॥२०३॥

चतु श्रुतिरिति प्रोक्तौ द्वौ भेदौ विकृताविह ।
मध्यमोऽपि भवेद्द्वेवाऽन्तरसाधारणाश्रयात् ॥२०

१ B. जगुर्बुधा. ।
२ B मन्द्र ।
३ cf. S R 1/3/39
४ cf S R 1/3/39–45 for verses 198–210 ab...
५ A. चतुः ।
६ A. श्रुति ।

साधारणे तु षड्जस्य विषमश्रुतिकौ सपौ ।
मध्यमग्रामगौ ज्ञेयौ कैश्चित्संवादिनौ मिथः ॥२२६॥

काकल्यन्तरयो[१]-र्यत्रान्यतरः केवलो भवेत् ।
न संवादो मिथो मन्योर्गन्योर्वा तत्र सम्मतः ॥२२७॥

साधारणे तु षड्जस्य षड्जग्रामे सपौ समौ ।
न च संवादिनौ स्यातां मिथः संवादिनावपि ॥२२८॥

क्वाप्यसंवादिता[२] प्रोक्ता[३] स्वतः संवादिनामपि ।
असंवादजुषां क्वापि संवादोऽप्यत्र दर्शितः ॥२२९॥

एकस्थानसमुद्भूतस्वराणां भूयसां परं ।
समानं स्थानमुदितं समानत्वेन तद्यथा ॥२३०॥

उत्पद्यन्ते स्वरा यत्र पीडनात्सरिगादयः ।
पधनित्वं श्रयन्त्येते तदूर्ध्वं पीडने कृते ॥२३१॥

क्रमेणान्योऽन्यमेते[४] तत्-स्यातां संवादिनौ मिथः ।
तस्मादेकस्थानवादः संवाद इति तन्मतम् ॥२३२॥

अस्मादेव तु संवादो नैव लोप्यः कदाचन ।
यतः संवादिनं प्राह रागोत्पत्तेस्तु कारणम् ॥२३३॥

याद्येव लुप्यते तत्र रागोत्पत्त्यनिमित्ततः ।
कार्यपपत्ययो(सप्रत्ययो)यस्मात् प्रधाने पर्यवस्यति ॥२३४॥

न लोप्यो मध्यमः क्वापीत्येवमाचार्यसम्मतम् ।
षड्जादेः पञ्चमादेश्च त्रिकस्यातर्यतस्थित (त्रिकस्यान्तर्यतः स्थितः) ॥२३५॥

अथ प्रतिसमाधत्ते कामाक्षाचरणानुगः ।
सरस्वतीरसोद्भूत-[५]कैरवोद्याननायकः ॥२३६॥

यदवाद्यत्र संवादो[६]ऽसमश्रुतिकयोस्तथा ।
षड्जमध्यमिकायां तु जातौ मन्योस्तथा सति ॥२३७॥

---

[१] B. यत्तान्यतर ।
[२] B. असवादिता ।
[३] B प्रोक्ता ।
[४] B मेतेऽत ।
[५] A कैतवोद्यान ।
[६] A. सवादो ।

उत्पद्येते ययोः श्रुत्योः स्वरौ मध्ये तयोरिह ।
श्रुतयो द्वादशाष्टौ वा तौ स्तः संवादिनौ मिथः[१] ॥२१४॥

स्वरौ निषादगान्धारावन्येषां स्तो विवादिनौ ।
ऋधयोर्वा गनी प्रोक्तौ गन्योर्वा स्तो रिधाविह ॥२१५॥

शेषाणामनुवादित्वं कृष्णभूपस्य सम्मतम्[२] ।
समानश्रुतिकावेव सवादित्वेन सम्मतौ ॥२१६॥

षड्जग्रामे ह्यविकृतौ यथा संवादिनौ सपौ ।
तथा निषादगान्धारौ तद्वत् ऋषभधैवतौ ॥२१७॥

मसौ संवादिनौ यद्वन्मध्यमग्राम ईरितौ ।
तद्वन्न षड्जपौ स्यागात्[३] पञ्चमस्यान्तिमश्रुतेः ॥२१८॥

पञ्चमस्त्रिश्रुतित्वाच्च संवादी ऋषभेण तु ।
षड्जग्राम इव ज्ञेयः संवादो-[४]ऽन्यस्वराश्रयः ॥२१९॥

केषाञ्चिदन्यथा ज्ञेयः सवादस्त[५]-थयोच्यते ।
यथा हि मध्यमग्रामे मगयोश्च ऋधयोस्तथा ॥२२०॥

विषमश्रुतिकत्वेऽपि मिथः संवदनं मतम् ।
षड्जग्रामे तु ऋधयोः[६] षड्जसाधारणे तथा ॥२२१॥

श्रुत्युत्कर्षापकर्षाभ्यामष्टश्रुत्यन्तरत्वतः ।
समश्रुतिकतायां तु सवादः स्यादनेकधा ॥२२२॥

षड्जग्रामे तु संवादो(ऽ)समश्रुतिकयोरपि ।
धैवतान्तरयोस्तद्वत् काकल्यन्तरयोरपि ॥२२३॥

मध्यमे [७]च समश्रुत्योः संवादः कैश्चिदिष्यते ।
अष्टश्रुत्यन्तरत्वेऽस्य साम्यात्तत्रोभयत्र च ॥२२४॥

काकल्यन्तरयोर्यन्नान्यतरः केवलो भवेत् ।
समौ सवादिनौ तत्र विषमश्रुतिकावपि ॥२२५॥

---

१ cf. S. R 1/3/48
२ cf. S. R. 1/3/50
३ B. त्यात् ।
४ B सवादान्यो ।
५ B तयोच्यते ।
६ B. ऋपयो. ।
७ B. स्वसमश्रुत्योः ।

साधारणे तु षड्जस्य विषमश्रुतिकौ सपौ ।
मध्यमग्रामगौ ज्ञेयौ कैश्चित्संवादिनौ मिथः ॥२२६॥

काकल्यन्तरयो[1]-र्यत्राप्यतरः केवलो भवेत् ।
न संवादो मिथो मन्योर्गन्योर्वा तत्र सम्मतः ॥२१७॥

साधारणे तु षड्जस्य षड्जग्रामे सपौ समौ ।
न च संवादिनौ स्यातां मिथः संवादिनावपि ॥२२८॥

क्वाप्यसंवादिता[2] प्रोक्ता[3] स्वतः संवादिनामपि ।
असंवादजुषां क्वापि संवादोऽप्यत्र दर्शितः ॥२२९॥

एकस्थानसमुद्भूतस्वराणां भूयसां परैः ।
समानं स्थानमुदितं समानत्वेन तद्यथा ॥२३०॥

उत्पद्यन्ते स्वरा यत्र पीडनात्सरिगादयः ।
पधनित्वं श्रयन्त्येते तद्वद्ध्वं पीडने कृते ॥२३१॥

क्रमेणान्योऽन्यमेते[4] तत्-स्यातां सवादिनौ मिथः ।
तस्मादेकस्थानवादः संवाद इति तन्मतम् ॥२३२॥

अस्मादेव तु संवादी नैव लोप्यः कदाचन ।
यतः संवादिनं प्राह रागोत्पत्तेस्तु कारणम् ॥२३३॥

वाद्येव लुप्यते तत्र रागोत्पत्त्यनिमित्ततः ।
कार्यपंपत्ययो (संप्रत्ययो) यस्मात् प्रधाने पर्यवस्यति ॥२३४॥

न लोप्यो मध्यमः क्वापीत्येवमाचार्यसम्मतम् ।
षड्जादेः पञ्चमादेश्च त्रिकस्यातर्यतस्थितः (त्रिकस्यान्तर्यतः स्थितः) ॥२३५॥

अथ प्रतिसमाधत्ते कामाक्षाचरणानुगः ।
सरस्वतीरसोद्भूत-[5]कैरवोद्याननायकः ॥२३६

यद्वाद्यत्र संवादो[6]ऽसमश्रुतिकयोस्तया ।
षड्जमध्यमिकायां तु जातौ मन्योस्तया सति ॥२३७॥

---

[1] B. यत्तान्यतर. ।
[2] B. असवादिता. ।
[3] B. प्रोक्ना. ।
[4] B मेतेऽस्तः ।
[5] A. कैतवोद्यान ।
[6] A. सवादो ।

संवादिनी(नि) न लोपार्हे निषादो लुप्यते कथम् ।
एवं षड्जोदीच्यवत्यामंशे षड्जे व्यवस्थिते ॥२३८॥

संवादिनः पञ्चमस्य लोपे मध्यम एव यत् ।
संवादिकार्यं कुरुतेऽन्य-[1]त्रापी(पि)ह्येवनु(मू)ह्यताम् ॥२३९॥

अस्तु संवाद्यनेकत्वे तदेकत्वे कथं भवेत् ।
धस्यांशत्वे तु कैशिक्यां संवादो ऋषयोः पुनः ॥२४०॥

ऋषभो लुप्यते तस्मादत्र वक्तुं सुदुर्घटम् ।
उच्यतेऽत्रान्तरः कार्यः संवादी धैवतस्य सः ॥२४१॥

न चान्तरोऽल्पप्रयोगादसंवादी भवेदिह ।
काकल्यन्तरयोरल्पप्रयोगत्वं मतं[2] सताम् ॥२४२॥

यद्युच्येतासमश्रुत्योरसंवादः [3]कदाचन ।
कारमा(र्मा)रव्यां तदा जातौ धैवतेंऽशे रिलोपतः ॥२४३॥

न संवादी न वा तत्रान्तरः कार्यो विधानतः ।
तथा सत्यस्य संवादो न केनाप्युपपद्यते ॥२४४॥

तस्मात् समानश्रुतिता न संवादविधायिका ।
अत्र प्रत्यर्थिनां साक्षात् सिद्धान्तस्य विधायकः ॥२४५॥

सिद्धान्तयति भूनाथः स्वरशास्त्रस्य धर्मवित् ।
तस्माद्ययोर्मध्यगताः श्रुतयो द्वादशाष्ट वा ॥२४६॥

संवादित्वं तयोरेव [4]स्वरयोरिति निश्चयः ।
शुद्धौ निषादगान्धारौ केषाञ्चिद् विकृतावपि ॥२४७॥

तुल्यानुसरणत्वेन पञ्चानां स्तो विवादिनौ ।
विवादित्वं [5]ह्यन्तरत्वे यदुक्तं तत्कथं भवेत् ॥२४८॥

कैशिके त्रिश्रुतित्वेन [6]द्व्यन्तरस्य च हानितः ।
अनयोरेकदेशेऽपि विकृतेनान्यता मता ॥२४९॥

---

[1] ऽन्यत्रापि ह्येवमूह्यताम् is better.
[2] B. मनः ।
[3] B. क्वचन ।
[4] A. स्वरयो इति ।
[5] A. द्यंतरन्त्वे ।
[6] A. ह्यन्तरस्य ।

शुद्धवद् विकृतौ तौ हि गनी प्रोक्तौ विवादिनौ ।
गनी विवादिनौ(नौ)प्रोक्तौ कैश्चिदेव रिधौ प्रति ॥२५०॥

कैश्चिदन्यं [1]रिधौ गन्योर्विवादित्वेन कीर्तितौ ।
विवादिनौ लङ्घनेन न स्यादिह विवादिता ॥२५१॥

रिगगरिधनिनिधेत्येवल्पप्रयोगत ।
स्वराभ्यामूर्ध्ववा(द्वा)रेणोत्प्लुत्ये(त्यो)तु(त्सु)त्य कृते(गति)र्भवेत्॥२५२॥

वादिसवादिरचित-[2]रागसिद्धयनुकूलनम् ।
अत्रोदाह्रियते किञ्चिद् बालबोधविवृद्धये ॥२५३॥

राजकल्पे ग्रहे षड्जे वादिनि प्रकृते सति[3] ।
सवादिनौ मन्त्रितुल्यौ मपौ तद्वत् प्रयोजितौ ॥२५४॥

[4]तद्द्वयस्यानुसरणादुभौ तत्पोषकौ रिधौ ।
तत्तुल्यकार्यसम्भारकरणाभावतस्तयो ॥२५५॥

अल्पप्रयोग कर्तव्यो [5]रक्तिवैचित्र्यहेतवे ।
रिधौ प्रत्यर्थिवद्वर्ज्यौ विवादित्वे स्थितौ यत ॥२५६॥

अत्यल्पमपि वा कार्यस्तत्प्रयोग क्वचित क्वचित् ।
रक्तिवैचित्र्यमाधातुमवरोहे विपश्चिता ॥२५७॥

अनेनैव पथान्येषु [6]मेलितेषु स्वरेषु हि ।
वाद्यादिष्ति(त्व)मवाप्तेषु रागरक्तिरवाप्यते ॥२५८॥

[॥ इति वादि-सवाद्यनुवादिप्रकरणम्[7] ॥]

अथ सभववर्णादि स्वराणा प्रोच्यते मया ।[8]
सगमा देववशोत्या पञ्चम पितृवशज ॥२५९॥

ऋषीणां तु कुले जातौ रिधौ निर्दैत्यवशज ।
ब्राह्मणा समपा प्रोक्ता रिधौ तु क्षत्रियौ स्मृतौ ॥२६०॥

---

[1] B अन्यै ऋधौ ।
[2] B. राग्य ।
[3] cf. R S 1/3/50 51 ।
[4] B न द्वयस्य ।
[5] A रक्त्यवैचित्र्य ।
[6] B मिलितेषु ।
[7] The स्वरप्रकरण does not end here, this colophon marks the end of वादिसवाद्यनुवादिप्रकरण within the स्वरप्रकरण ।
[8] cf S R 1/3 52 57 for verses 259-62 above

वैश्यौ निगौ तथा शूद्रौ काकल्यन्तरसंज्ञकौ ।
षड्जः पद्मप्रभो रिश्च पिञ्जरो गः सुवर्णरुक् ॥२६१॥

कुन्दाभो मो(ऽ)सितः पश्च धः पीतो निश्च कर्बुरः ।
जम्बूद्वीपेऽभवत्[1] षड्जो रिः[2] शाके गः कुशे तु मः ॥२६२॥

क्रौञ्चे पः शाल्मलीद्वीपे धः श्वेते निस्तु पुष्करे[3] ।
वह्निब्रह्मेन्द्रलक्ष्मीशनारदाः सरिगान्मपौ ॥२६३॥

ऋषयो ददृशुः[4] पञ्च तुम्बुरुस्तु धनिद्वयम् ।
ज्वलनब्रह्मवाणीशविष्णुनागेन्द्रभानवः[5] ॥२६४॥

क्रमात्स्वराणां सादीनां सप्तानां देवता इमाः ।
सस्यानुष्टुप् स्मृतं छन्दो गायत्री रेरुदाहृतम् ॥२६५॥

गस्य त्रिष्टुप् च बृहती मस्तु(स्य)पङ्क्तिस्तु पस्य च ।
धस्योष्णिक् समाख्याता जगती [6]नेरितीय हि [7] ॥२६६॥

शृङ्गारहास्ययोरुक्तौ मपौ तु करुणे गनी ।
सरी वीरेऽद्भुते रौद्रे धो[8] बीभत्से भयानके[9] ॥२६७॥

[10]स्वर्यंते यच्चरित्रेण चित्तं ब्रह्मविदामपि ।
तेन श्रीकालसेनेन स्वराः सम्यङ् निरूपिताः ॥२६८॥

॥ इति स्वरप्रकरणम् ॥

## ग्रामप्रकरणम्

आबाल्यमाचतुर्वक्त्रं यद्गुणग्रामवर्णनम् ।
सापारम्येण कुर्वन्ति लोकास्तं संश्रये शिवम् ॥२६९॥

न हि स्वराणां व्यस्तानां दृष्टादृष्टफलं प्रति ।
उपयोगस्ततस्तेषां समूहं विमुने परम् ॥२७०॥

---

१ B. भवेत् ।
२ B. रि[illegible] वे ।
३ A. मास्त ।
४ A. ददृगु ।
५ cf. S. R. 1. 3. 56-58 for verses 263-65 above.
६ B. नैरतीय ।
७ cf. S. R. 1. 3. 58-59.
८ B. थो ।
९ cf. S. R. 1. 3. 59-60 and N. S. 17. 99, 100.
१० B. स्वर्ग्ये तु ।

अविशेषे स्वराणां हि समवाये स्थिते सति ।
षड्जस्य ग्रामता योक्ता सा तत्प्राधान्यतो मता ॥२७१॥

तत्राच्युतस्य षड्जस्य मपयोस्तदवस्थयोः ।
संवादे गदिता षड्जग्रामता तद्विचार्यते ॥२७२॥

ननु साधारणे षड्जे[1] भवेतां न मपौ यदा ।
समश्रुती कथं तेन तया संवादमर्हतः ॥२७३॥

तदभावे सङ्ग(सुङ्:)साधा(ध्या)सा षड्जग्रामता तव ।
स्वस्थानस्थितयोर्यस्मात् सवादः सद्भिरिष्यते ॥२७४॥

उच्यते विकृतेः सस्य पूर्वं संवादिनौ मपौ ।
तादवस्थ्ये तु तत्त्वेऽस्य विकृतेनान्यथात्वधीः ॥२७५॥

या शुद्धषड्जधीः पूर्वमुत्पन्ना प्रकृतिस्थिते ।
तद्वासनावशात् सैव विकृतेऽस्मिन्न गच्छति ॥२७६॥

प्रत्यभिज्ञायते सोऽयमिति तज्ज्ञैर्यतः स्फुटम् ।
यथा तानेषु लुप्तेषु षड्जधीरनुवर्तते ॥२७७॥

श्रुत्युत्कर्षापकर्षेऽपि तथाऽत्रापि कथं न सा ।
अन्यथा पञ्चमे लुप्ते षड्जग्रामे स्थिरस्य किम् ॥२७८॥

यस्योत्कर्षापकर्षेण मूर्च्छनाभेदतो भवेत् ।
तानभेदे तु पधयोर्लोप्यालोप्यतया भिदा ॥२७९॥

समयोर्ग्रामयोस्तस्माद् एतल्लक्षणमीरितम् ।
अनिच्छयाऽभ्युपेतव्यं भवता स्थिरबुद्धिना ॥२८०॥

यत्र संवादिनौ स्यातां नित्यं पञ्चमधैवतौ ।
ऋषभस्य तदा तज्ज्ञैर्मध्यमग्राम इष्यते ॥२८१॥

अथवा मध्यमग्रामे धैवतः स्याच्चतुःश्रुतिः ।
अत्र यन्मध्यमग्रामे पञ्चमस्त्रिश्रुतिर्भवेत् ॥२८२॥

भेदमकृत्(भेदकृत्)षड्जतः प्रोक्तः सातत्ये त(तु)न तत्तया ।
साधारणे मध्यमस्य यतः स्यान्मध्यमेऽप्ययम् ॥२८३॥

चतुःश्रुतिस्ततो नैव भेदकृत्पञ्चमो भवेत् ।
तस्माद्धैवत एवात्र भेदकः सर्वदाऽनयोः ॥२८४॥

---

[1] A. षाड्जे ।

न लोप्यो मध्यमग्रामे पञ्चमो धैवतः पुनः ।
षड्जग्रामे तु सर्वत्र मध्यमो नैव लुप्यते ॥२८५॥

अत्र लोपविधौ केचिन्नो[१]-त्दयन्ति तया ह्ययम् ।
लोपो विधीयते यस्तु स किमर्थं तदुच्यते ॥२८६॥

न तावज्जातिषु प्राप्तो नियतस्वरलोपतः ।
षाडवौडुवयोस्तत्र विधानं दृश्यते यतः ॥२८७॥

न तानेषूपयोगोऽस्य लोपस्यास्ति यतोऽत्र च ।
नियतस्वरलोपस्य विधिराचार्यसम्मतः ॥२८८॥

लोपप्रयोजकं नान्यद् दृश्यते शास्त्रमञ्जसा ।
अथ चेदस्ति तत् किंवा सामान्यं वा विशेषतः ॥२८९॥

खपुष्पवद् विचारोऽयमसतस्तस्य[२] संभवः ।
तस्योभयस्याभावेन निषेधः कस्य संभवी ॥२९०॥

विपक्षपक्षविक्षेपदक्षः कालुजिभूपतिः ।
अत्र प्रतिसमाधत्ते समाहितमनाः स्वयम् ॥२९१॥

क्वचित्तानादिलोपातिरिक्तो[३] वैचित्र्यहेतुकः ।
ग्रामरागादिके लोपविधिः सद्भिरिहेष्यते ॥२९२॥

यतो मतङ्गमुनिना षपहीना समीरिता ।
टक्करागस्य भाषेयं निपुणं वेगरञ्जिका ॥२९३॥

तद्युक्ता गीततत्त्वज्ञैः सोक्ता वैचित्र्यसिद्धये ।
अत्रो(तो)ऽत्र शास्त्रतोऽप्येतद्रक्ते[४] प्राधान्यमिष्यते ॥२९४॥

मध्यमस्याविनाशित्वात् [५]षड्जस्यैव तु मुख्यता ।
संवादित्वान्मध्यमस्य सर्वस्वरमुखत्वतः ॥२९५॥

षड्जस्यापि मता [६]ग्रामव्यपदेशत्वधीर्द्वयोः ।
गान्धारस्यापि मुख्यत्वं दिवि देवकुलोद्भवात् ॥२९६॥

---

[१] A. नोदयन्ति ।
[२] B. तरस्य ।
[३] B. रिक्ता ।
[४] A. रक्ते ।
[५] A. सङ्गस्यैव ।
[६] B. ग्राम्यव्यपदेशित्व ।

स्वर्गाम्नान्यत्र गान्धार इति पूर्वैरुदीरणात् ।
त्रित्वेऽपि द्वितयस्यैवात्र ग्रामव्यपदेशिता ॥२९७॥

यद्यप्यस्योपलम्भोऽस्ति काश्मीरेषु तथाप्ययम् ।
लक्ष(क्ष्य)लक्षणतत्त्वज्ञैर्नोपदेष्टुं हि शक्यते ॥२९८॥

पूर्वग्रन्थानुसारेण तथाप्यस्यात्र लक्षणम् ।
व्याकरोति महीनाथो लक्ष(क्ष्य)-लक्षणतत्त्ववित् ॥२९९॥

एकैकां श्रुतिमादत्ते गान्धारो रिमयोर्यदि ।
पश्रुतिं भजते धश्च निः श्रयेद् धसयोः श्रुतिम् ॥३००॥

गान्धारग्राममवदत् तदा तं चन्द्रशेखरः ।
लोकवृत्तानुसारित्वादस्य शास्त्रस्य भूतले ॥३०१॥

तत् सुलेपतया तत्र वर्तिनौ षड्जमध्यमौ ।
द्वावेवात्र निरूप्येते कालसेनेन भूभुजा ॥३०२॥

तौ चतुःश्रुतिकत्वेन मुख्यौ सर्वस्वरेष्विव ।
मूर्च्छनापरिसंख्याया निदानत्वादिमौ पुनः ॥३०३॥

ग्रामत्वेन समाख्यातौ तथा ह्येतत्प्रदर्श्यते ।
स्वरौ यावतियौ स्यातां ग्रामयोः षड्जमध्यमौ ॥३०४॥

मूर्च्छना तावतिथ्येव तद्ग्रामावत एव तौ ।
एवं [1]यष्टृत्तिलो ब्रूते मूर्च्छनागणनाधियः(पः) ॥३०५॥

हेतुत्वेन तयोर्मौख्यमत्र युक्तिर्न दृश्यते ।
यतस्तयोः प्रधानत्वे ग्रामत्वव्यपदेशिता ॥३०६॥

तत एव च हेतुत्वं तद्ग्रामे मूर्च्छनाधिपः ।
ततः प्राधान्यमनयोरित्येवं चक्रकं भवेत् ॥३०७॥

तस्माच्छ्रीकालसेनोक्तो नयः प्राधान्यमर्हति ।
अत्र यदृषभादित्व मूर्च्छनानामभाषत ॥३०८॥

भरतो नायकत्वात्तदनयोः षड्जमध्ययोः ।
ग्रामद्वयेऽथवाद्यन्तमूर्च्छनाख्यापनाय तत् ॥३०९॥

अत्र न्यासविधिस्तावदनयोरिह तन्यते ।
तिर्यक् पञ्चोर्ध्वगाः षट् च रेखाश्चात्र प्रकल्पयेत ॥३१०॥

स्वरानविकृतानत्र विन्यसेदनुपूर्वतः ।
चतुस्त्रिद्विचतुःसंख्यचतुस्त्रिद्विश्रुतिक्रमात् ॥३११॥

---

[1] B. दन्तिलो ।

षड्जादीन् पूर्वरेखान्तः षड्जग्रामे ह्ययं विधिः ।
मध्यमे मध्यमादींश्च न्यसेत्पूर्ववदत्र तु ॥३१२॥

एकश्रुत्युप (त्यप)कृष्टोऽत्र पञ्चमः किं तु कीर्तितः ।
अथवा धैवतस्यायं त्रिश्रुतेश्च चतु श्रुतेः ॥३१३॥

प्रयोगाद् ग्रामभेदोऽत्र विज्ञेयो मार्गवेदिभिः ।
संवादित्वादिना भेदा. पूर्वमेव समीरिताः ॥३१४॥

अनयोर्देवते ब्रह्मविष्णू प्रोक्ते पुरातनै[१] ।
हेमन्तग्रीष्मयोरेतौ [२]गातव्यौ च यथाक्रमम् ॥३१५॥

क्रमात्पूर्वाह्णमध्याह्नौ तयो. कालौ प्रकीर्त्तितौ[३] ॥३१

॥ इति ग्रामौ ॥

## मूर्च्छनाप्रकरणम्

मूर्च्छनाः स्यु प्रतिग्राम सप्त सप्त च ता यथा ।
षड्जे तूत्तरमन्द्रादौ रजनी चोत्तरायता[४] ॥३१

चतुर्थी शुद्धषड्जाख्या पञ्चमी मत्सरीकृता ।
अश्वक्रान्ताभिधा षष्ठी सप्तमी चाभिरुद्गता ॥३१७॥

सौवीरी हरिणाश्वाख्या स्यात्कलोपनतापि[५] च ।
शुद्धमध्या तथा मार्गी पौरवी हृष्यका तथा ॥

सप्तैता मूर्च्छनाः प्रोक्ता मध्यमग्रामगाः क्रमात् ।
[७]अत्राधस्यनिषादादेरभावान्मन्द्रसप्तके ॥३१९॥

नारभ्या मूर्च्छनास्तद्वत्तारषड्जाद्यभावतः ।
न तारसप्तके ताः स्युर्मध्यसप्तकतस्त्विमाः ॥३२

आरभ्या मूर्च्छनाः प्राह ब्रह्मशैलावनीश्वरा· (र·) ॥३२१॥

---

[१] & [३] cf. S. R. 1/4/7, 8
[२] B. ज्ञातव्यौ ।
[४] B यत ।
[६] cf. S. R. 1. 4 10–12 for verses 316–18 above.
[५] B कलोपिनता च ।
[७] B अत्राग्ध ।

| | | | | | | |
|---|---|---|---|---|---|---|
| नि | | | | स | | |
| | | | | | | रि |
| ध | [1]ष | ड्ज | ग्रा | म | | |
| | | | | | | [2]ग |
| | | | | | | |
| प | | | | म | | |

[1] B षड्जग्राम is given in the first line

[2] B. ग is given in the last square

| | | | | | | |
|---|---|---|---|---|---|---|
| ग | | | | म | | |
| | | | | | | प |
| रि | म | ध्य | म | ग्रा | म | |
| | | | | | | |
| | | | | | | |
| स | | | | नि | | [1]ध |

[1] B ध is found to be in the fifth square from above

| | | | | | | |
|---|---|---|---|---|---|---|
| रि | | | | ग | | |
| | | | | | | म |
| स | गा | धा | र | ग्रा | म· | |
| | | | | | | |
| | | | | | | |
| नि | | | | [2]ध | | [1]प |

[1] A प is found in the fifth square from above

[2] B omits ध

षड्जग्रामः

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रि | ग | म | प | ध | नि |
| नि | स | रि | ग | म | प | ध |
| ध | नि | स | रि | ग | म | प |
| प | ध | नि | स | रि | ग | म |
| म | प | ध | नि | स | रि | ग |
| ग | म | प | ध | नि | स | रि |
| रि | ग | म | प | ध | नि | स |

मध्यमग्रामः

| | | | | | | |
|---|---|---|---|---|---|---|
| म | प | ध | नि | स | रि | ग |
| ग | म | प | ध | नि | स | रि |
| रि | ग | म | प | ध | नि | स |
| स | रि | ग | म | प | ध | नि |
| नि | स | रि | ग | म | प | ध |
| ध | नि | स | रि | ग | म | प |
| प | ध | नि | स | रि | ग | म |

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रि | ग | म | प | ध | नि |
| नि | स | रि | ग | म | प | ध |
| ध | नि | स | रि | ग | म | प |
| प | ध | नि | स | रि | ग | म |
| म | प | ध | नि | स | रि | ग |
| ग | म | प | ध | नि | स | रि |
| रि | ग | म | प | ध | नि | स |

यथा—

काकल्युत्तरमन्द्रा मूर्च्छना यथा ।

स रि ग म प ध नि स । स नि ध प म ग रि स ॥१॥

काकलीरजनी यथा ।

नि स रि ग म प ध नि । नि ध प म ग रि स नि ॥२॥

काकल्युत्तरायता यथा ।

ध नि स रि ग म प ध । ध प म ग रि स नि ध ॥३॥

काकलीशुद्धषड्जा यथा ।

प ध नि स रि ग म प । प म[1] ग रि स नि ध प ॥४॥

काकलीमत्सरीकृद्यथा ।

म प ध नि स रि ग म । म ग रि स नि ध प म ॥५॥

| | | | | | | |
|---|---|---|---|---|---|---|
| म | प | ध | नि | स | रि | ग |
| ग | म | प | ध | नि | स | रि |
| रि | ग | म | प | ध | नि | स |
| स | रि | ग | म | प | ध | नि |
| नि | स | रि | ग | म | प | ध |
| ध | नि | स | रि | ग | म | प |
| प | ध | नि | स | रि | ग | म |

[1] B. प, ग, म.

षड्जग्रामः

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रि | ग | म | प | ध | नि |
| नि | स | रि | ग | म | प | ध |
| ध | नि | स | रि | ग | म | प |
| प | ध | नि | स | रि | ग | म |
| म | प | ध | नि | स | रि | ग |
| ग | म | प | ध | नि | स | रि |
| रि | ग | म | प | ध | नि | स |

मध्यमग्रामः

| | | | | | | |
|---|---|---|---|---|---|---|
| म | प | ध | नि | स | रि | ग |
| ग | म | प | ध | नि | स | रि |
| रि | ग | म | प | ध | नि | स |
| स | रि | ग | म | प | ध | नि |
| नि | स | रि | ग | म | प | ध |
| ध | नि | स | रि | ग | म | प |
| प | ध | नि | स | रि | ग | म |

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रि | ग | म | प | ध | नि |
| नि | स | रि | ग | म | प | ध |
| ध | नि | स | रि | ग | म | प |
| प | ध | नि | स | रि | ग | म |
| म | प | ध | नि | स | रि | ग |
| ग | म | प | ध | नि | स | रि |
| रि | ग | म | प | ध | नि | स |

*यथा—*

काकल्युत्तरमन्द्रा मूर्च्छना यथा ।

स रि ग म प ध नि स । स नि ध प म ग रि स ॥१॥

काकलीरजनी यथा ।

नि स रि ग म प ध नि । नि ध प म ग रि स नि ॥२॥

काकल्युत्तरायता यथा ।

ध नि स रि ग म प ध । ध प म ग रि स नि ध ॥३॥

काकलीशुद्धषड्जा यथा ।

प ध नि स रि ग म प । प म[1] ग रि स नि ध प ॥४॥

काकलीमत्सरीकृद्यथा ।

म प ध नि स रि ग म । म ग रि स नि ध प म ॥५॥

| | | | | | | |
|---|---|---|---|---|---|---|
| म | प | ध | नि | स | रि | ग |
| ग | म | प | ध | नि | स | रि |
| रि | ग | म | प | ध | नि | स |
| स | रि | ग | म | प | ध | नि |
| नि | स | रि | ग | म | प | ध |
| ध | नि | स | रि | ग | म | प |
| प | ध | नि | स | रि | ग | म |

[1] B प, ग, म.

काकल्यश्वक्रान्ता यथा।

ग म प ध नि स रि ग। ग रि स नि ध प म ग ॥६॥

काकल्यभिरुद्गता यथा।

रि ग म प ध नि स रि। रि स नि ध प[1] म ग रि ॥७॥

इति षड्जग्रामः (मिकाः) काकलीमूर्च्छनाः ॥

मध्यमग्रामिका मध्य(?)काकलीमूर्च्छना यथा ॥

काकलीसौवीरी यथा।

म प ध नि स रि ग म। म ग रि स नि ध प म ॥१॥

काकलीहरिणाश्वा यथा।

ग म प ध नि स रि ग। ग रि स नि ध प म ग ॥२॥

काकलीकलोपनता यथा :—

रि ग म प ध नि स रि। रि स नि ध प म ग रि ॥३॥

काकलीशुद्धमध्या यथा :—

स रि ग म प ध नि स। स नि ध प म ग रि स ॥४॥

काकलीमार्गी यथा :—

नि स रि ग म प ध नि। नि ध प म ग रि स नि ॥५॥

काकलीपौरवी यथा :—

ध नि स रि ग म प ध। ध प म ग रि स नि ध ॥६॥

काकलीहृष्यका यथा :—

प ध नि स रि ग म प। प म ग रि स नि ध प ॥७॥

इति मध्यमग्रामकाकलीमूर्च्छना, (अथ) मध्यमग्रामान्तरमूर्च्छना ॥

अंतर[2]-सौवीरी यथा :—

म प ध नि स रि ग म। म ग रि स नि ध प म ॥१॥

अन्तरहरिणाश्वा यथा :—

[3]ग म प ध नि स रि ग। ग रि स नि ध प ग म ॥२॥

(अन्तर)कलोपनता यथा :—

रि ग म प ध नि स रि। रि स नि ध प म ग रि ॥३॥

---

[1] B पध।

[2] B. अन्तसौवीरी।

[3] A. म ग

अन्तरशुद्धमध्या यथा :—

स रि ग म प ध नि स । स नि ध प म ग रि स ॥४॥

अन्तरशुद्धमार्गी यथा :—

नि[1] स रि ग म प ध नि । नि ध प ग रि स नि ॥५॥

अन्तरपौरवी यथा :—

ध नि स रि ग म प ध । ध प[2] म ग रि स नि ध ॥६॥

अन्तरहृष्यका यथा :—

प ध नि स रि ग म प । प म ग रि स नि ध प ॥७॥

इति मध्यग्रामिकान्तरमूर्च्छनाः ॥

(अथ) षड्जग्रामान्तरमूर्च्छनाः ॥

अन्तरोत्तरमन्द्रा यथा :—

स रि ग म प ध नि स । स नि ध प म ग रि स ॥१॥

अन्तररजनी यथा :—

नि स रि ग म प ध नि । नि ध म प ग रि स नि ॥२॥

अन्तरोत्तरायता यथा :—

ध नि स रि ग म प ध । ध प म ग रि स नि ध ॥३॥

अन्तरशुद्धषड्जा यथा :—

प ध नि स रि ग म प । प म ग रि स नि ध प ॥४॥

अन्तरमत्सरीकृद् यथा :—

म प ध नि स रि ग म । म ग रि स नि ध प म ॥५॥

अन्तराश्वक्रांता यथा :—

ग म प ध नि स रि ग । ग रि स नि ध प म ग ॥६॥

अन्तराभिरुद्गता यथा :—

रि ग म प ध नि स रि । रि स नि ध प म ग रि ॥७॥

इति षड्जग्रामान्तरमूर्च्छना. ॥

(अथ) षड्जग्रामकाकल्यन्तरमूर्च्छना लिख्यन्ते ।

तद्द्वयोपेतोत्तरमन्द्रा यथा :—

स रि ग म प ध नि स । स नि ध प म ग रि स ॥१॥

तद्द्वयोपेतरजनी यथा :—

नि स रि ग म प ध नि । नि ध प म ग रि स नि ॥२॥

---

[1] B. निरसनि etc. ।

तद्द्वयोपेतोत्तरायता यथा :—

ध नि स रि ग म प ध । ध प म ग रि स नि ध ॥३॥

तद्द्वयोपेतशुद्धषड्जा यथा :—

प ध नि स रि ग म प । प म ग रि स नि ध प ॥४॥

तद्द्वयोपेतमत्सरीकृद्यथा :—

म प ध नि स रि ग म । [1]म ग रि स नि ध प म ॥५॥

तद्द्वयोपेताश्वक्रांता यथा :—

ग म प ध नि स रि ग । ग रि स नि ध प म ग ॥६॥

तद्द्वयोपेताभिरुद्गता यथा :—

रि ग म प ध नि स रि । रि स नि ध प म ग रि ॥७॥

इति [2]षड्जग्रामैकद्वयोपेता मूर्च्छनाः ॥ मध्यमग्रामे तद्द्वयोपेता मूर्च्छना [3]आलिख्यन्ते ॥

तद्द्वयोपेता सौवीरी यथा :—

म प ध नि स रि ग म । म ग रि स नि ध प म ॥१॥

तद्द्वयो(पेता)हरिणाश्वा यथा :—

ग म प ध नि स रि ग । ग रि स नि ध प म ग ॥२॥

तद्द्वयोपेतकलोपनता यथा :—

रि ग म प ध नि स रि । रि स नि ध प म ग रि ॥३॥

तद्द्वयोपेतशुद्धमध्या यथा :—

स रि ग म प ध नि स । स नि ध प म ग रि स ॥४॥

तद्द्वयोपेतमार्गी यथा :—

नि स रि ग म प ध नि । नि ध प म ग रि स नि ॥५॥

तद्द्वयोपेतपौरवी यथा :—

ध नि स रि ग म प ध । ध प म ग रि स नि ध ॥६॥

तद्द्वयोपेतहृष्यका यथा :—

प ध नि स रि ग म प । प म ग रि स नि ध प ॥७॥

इति मध्यमग्रामिकतद्द्वयोपेताः सप्त मूर्च्छनाः ॥

उभयग्रामिकशुद्धकाकल्यन्तरद्वयोपेतमूर्च्छनाप्रस्तारभेदा यथाक्रमेण लिख्यन्ते ।

उत्तरमन्द्राभेदा यथा ।

स रि ग म प ध नि स । स नि ध प म ग रि स ॥१॥

रि ग म प ध नि स रि । रि स नि ध प म ग रि ॥२॥

---

[1] A. गम etc. ।

[2] B. शुद्धषड्ज etc. ।

[3] B. लिख्यन्ते ।

ग म प ध नि स रि ग । ग रि स नि ध प म ग ॥३॥
म प ध नि स रि ग म । म ग रि स नि ध प म ॥४॥
प ध नि स रि ग म प । प म ग रि स नि ध प ॥५॥
ध नि स रि ग म प ध । ध प म ग रि स नि ध ॥६॥
नि स रि ग म प ध नि । नि ध प म ग रि स नि ॥७॥

इत्युत्तरमन्द्रा[1]-भेदाः ॥

रजनीभेदा यथा :—

नि स रि ग म प ध (नि) । (नि) ध प[2] म ग रि स नि ॥१॥
स रि ग म प ध नि (स) । (स) नि ध प म ग रि स ॥२॥
रि ग म प ध नि स (रि) । (रि) स नि ध प म ग रि ॥३॥
ग म प ध नि स रि (ग) । (ग) रि स नि ध प म ग ॥४॥
म प ध नि स रि ग (म) । (म) ग रि स नि ध प म ॥५॥
प ध नि स रि ग म (प) । (प) म ग रि स नि ध प ॥६॥
ध नि स रि ग म प (ध) । (ध) प म ग रि स नि ध ॥७॥

इति रजनीभेदाः ॥

अथ मध्यमग्रामिकसप्तमूर्च्छनाभेदक्रमो यथा ॥

सौवीरीभेदा यथा :—

म प ध नि स रि ग (म) । (म) ग रि स नि ध प म ॥१॥
प ध नि स रि ग म प । प म ग रि स नि ध प ॥२॥
ध नि स रि ग म प (ध) । (ध) प म ग रि स नि ध ॥३॥
नि स रि ग म प ध (नि) । (नि) ध प म ग रि स नि ॥४॥
स रि ग म प ध नि (स) । (स) नि ध प म ग रि स ॥५॥
रि ग म प ध नि स (रि) । (रि) स नि ध प म ग रि ॥६॥
ग म प ध नि स रि (ग) । (ग) रि स नि ध प म ग ॥७॥

इति सौवीरीभेदाः ॥

(अथ) हरिणाश्वाभेदाः :—

ग म प ध नि स रि । रि स नि ध प म ग ॥१॥
म प ध नि स रि ग । ग रि स नि ध प म ॥२॥

---

[1] B. मन्द्रभेदाः ।　　[2] B. मप etc. ।

प ध नि स रि ग म । म ग रि स नि ध प ॥३॥
ध नि स रि ग म प । प म ग रि स नि ध ॥४॥
नि स रि ग म प ध । ध प म ग रि स नि ॥५॥
स रि ग म प ध नि । नि ध प म ग रि स ॥६॥
रि ग म प ध नि स । स नि ध प म ग रि ॥७॥

इति हरिणाश्वाभेदाः ॥[1]

थ कलोपनताभेदा यथा :—

रि ग म प ध नि स । स नि ध प म ग रि ॥१॥
ग म प ध नि सं रि । रि स नि ध प म ग ॥२॥
म प ध नि स रि ग । ग रि स नि ध प म ॥३॥
प ध नि स रि ग म । म ग रि स नि ध प ॥४॥
ध नि स रि ग म प । प म ग रि स नि ध ॥५॥
नि स रि ग म प ध । ध प म ग रि स नि ॥६॥
स रि ग म प ध नि । नि ध प म ग रि स ॥७॥

इति कलोपनताभेदाः ॥

अथ शुद्धमध्याभेदा यथा :—

स रि ग म प ध नि । नि ध प म ग रि स ॥१॥
रि ग म प ध नि स । स नि ध प म ग रि ॥२॥
ग म प ध नि स रि । रि स नि ध प म ग ॥३॥
म प ध नि स रि ग । ग रि स नि ध प म ॥४॥
प ध नि स रि ग म । म ग रि स नि ध प ॥५॥
ध नि स रि ग म प । प म ग रि स नि ध ॥६॥
नि स रि ग म प ध । ध प म ग रि स नि ॥७॥

इति शुद्धमध्याभेदाः ॥

मार्गीभेदा यथा :—

नि स रि ग म प ध । ध प म ग रि स नि ॥१॥
स रि ग म प ध नि । नि ध प म ग रि स ॥२॥

---

[1] These varieties of Mūrchanā are illustrated with seven notes and not eight.

रि ग म प ध नि स । स नि ध प म ग रि ॥३॥
ग म प ध नि स रि । रि स नि ध प म ग ॥४॥
म प ध नि स रि ग । ग रि स नि ध प म ॥५॥
प ध नि स रि ग म । म ग रि स नि ध प ॥६॥
ध नि स रि ग म प । प म ग रि स नि ध ॥७॥

इति मार्गीभेदाः ॥

पौरवीभेदा यथा :—

ध नि स रि ग म प । प म ग रि स नि ध ॥१॥
नि स रि ग म प ध । ध प म ग रि स नि ॥२॥
स रि ग म प ध नि । नि ध प म ग रि स ॥३॥
रि ग म प ध नि स । स नि ध प म ग रि ॥४॥
ग म प ध नि स रि । रि स नि ध प म ग ॥५॥
म प ध नि स रि ग । ग रि स नि ध प म ॥६॥
प ध नि स रि ग म । म ग रि स नि ध प ॥७॥

इति पौरवीमूर्छनाभेदक्रमः ॥

हृष्यकाभेदा यथा :—

प ध नि स रि ग म । म ग रि स नि ध प ॥१॥
ध नि स रि ग म प । प म ग रि स नि ध ॥२॥
नि स रि ग म प ध । ध प म ग रि स नि ॥३॥
स रि ग म प ध नि । नि ध प म ग रि स ॥४॥
रि ग म प ध नि स । स नि ध प म ग रि ॥५॥
ग म प ध नि स रि । रि स नि ध प म ग ॥६॥
म प ध नि स रि ग । ग रि स नि ध प म ॥७॥

इति हृष्यकाभेदाः[1] ॥ पट्पञ्चाशल्लिखिताः (?)॥

इति मध्यमग्रामिकप्रस्तारभेदक्रमः ॥[2]

इत्युभयग्रामिकशुद्धमूर्छनाप्रस्तारभेदाः ॥[3]

---

[1] B. repeats the varieties of हृष्यका ।
[2] A. B. wrongly give this colophon at the end of मार्गी ।
[3] A. B. wrongly give this colophon at the end of पौरवी ।

अथोमयग्रामिकमूर्छनाभेदाः क्रमाल्लिख्यन्ते ।।

काकल्युत्तरमन्द्राभेदा यथा :—

स रि ग म प ध नि । नि ध प म ग रि स ।।१।।
रि ग म प ध नि स । स नि ध प म ग रि ।।२।।
ग म प ध नि स रि । रि स नि ध प म ग ।।३।।
म प ध नि स रि ग । ग रि स नि ध प म ।।४।।
प ध नि स रि ग म । म ग रि स नि ध प ।।५।।
ध नि स रि ग म प । प म ग रि स नि ध ।।६।।
नि स रि ग म प ध । ध प म ग रि स नि ।।७।।

इति काकल्युत्तरमन्द्राभेदक्रमः ।।

काकलीरजनीभेदा यथा :—

नि स रि ग म प ध । ध प म ग रि स नि ।।१।।
स रि ग म प ध नि । नि ध प म ग रि स ।।२।।
रि ग म प ध नि स । स नि ध प म ग रि ।।३।।
ग म प ध नि स रि । रि स नि ध प म ग ।।४।।
म प ध नि स रि ग । ग रि स नि ध प म ।।५।।
प ध नि स रि ग म । म ग रि स नि ध प ।।६।।
ध नि स रि ग म प । प म ग रि स नि ध ।।७।।

इति काकलीरजनीभेदक्रमः ।।

काकल्युत्तर(ायता)भेदक्रमा यथा :—

ध नि स रि ग म प । प म ग रि स नि ध ।।१।।
नि स रि ग म प ध । ध प म ग रि स नि ।।२।।
स रि ग म प ध नि । नि ध प म ग रि स ।।३।।
रि ग म प ध नि स । स नि ध प म ग रि ।।४।।
ग म प ध नि स रि । रि स नि ध प म ग ।।५।।
म प ध नि स रि ग । ग रि स नि ध प म ।।६।।
प ध नि स रि ग म । म ग रि ग नि ध प ।।७।।

इति काकल्युत्तरायताभेदक्रम ।।

स्वरवर्णविशिष्टेन ध्वनिभेदेन यत्परम् ।[1]
रज्यते येन सततं (सच्चित्तं) स रागः सम्मतः सताम् ॥११॥

योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥१२॥

पञ्च षट् सप्तसंख्याकस्वरसन्दर्भरूपवान् ।
ग्रामद्वितयजात्युत्थो रञ्जको राग उच्यते ॥१३॥

रागोऽयं रञ्जतेर्धातोः कर्त्रर्थे घञि सम्मतः ।
यौगिको रञ्जकत्वेन वर्णितः कारकादिवत् ॥१४॥

अथ वर्णादिवद्रागशब्दोऽयं रूढितो मतः ।
योगरूढोऽथवा रागशब्दः पङ्कजशब्दवत् ॥१५॥

उत्पत्तिस्तस्य रागस्य वर्ण्यतेऽत्र यथार्थतः ।
सामवेदात् समभवन् स्वराः षड्जादयः पुरा ॥१६॥

स्वरेभ्यो ग्रामसम्भूतिर्ग्रामेभ्यो जातयोऽभवन् ।
जातिभ्यो रागसंभूतिरित्याद्यमुनिसंकथा ॥१७॥

स रागो [2]दशधा कैश्चिन्नवधा कैश्चिदिष्यते ।
तदत्र दर्श्यतेऽस्माभिर्मतङ्गादिमतादिह ॥१८॥

ग्रामरागाश्चोपरागा[3] रागा भाषाविभाषिकाः ।
तथैवान्तरभाषाख्या रागाङ्गाण्यपिलान्यपि[4] ॥१९॥

भाषाङ्गाण्यप्युपाङ्गानि क्रियाङ्गानीति ते दश ।
रागत्वजात्याश्रान्तत्वे समाने रागशब्दने ॥२०॥

यदेकस्य विभज्योक्तं रागत्वं तं न विग्रहे ।
रञ्जनाद्रागता रागभाषाङ्गादेरपीष्यते ॥२१॥

न ध्वनिर्दृश्यते[5] काचिद् भिन्ना रागस्वरूपिणी ।
[6]तदेष्वन्तर्भवन्त्येते ये रागास्तन्मते पृथक् ॥२२॥

---

[1] cf. Br. 280-84 and Kallinātha's commentary on S. R. 2-1. 1. for 11-15 above.

[2] B. देशधा ।

[3] A. B. ग्रामरागाश्चोपरागान् रागान् etc.

[4] A. adds च ।

[5] B. ध्वनिर्न दृश्यते काचित् ।

[6] A. तदेष्वन्तर्भवन्त्येते । B. तदेष्वन्तर्भवन्त्येते ।

अतोऽत्र केवलं रागशब्दवाच्यं विमुच्य तम् ।
रागे तन्नवधा प्राह भवानीपतिरागवान् ॥२३॥

ते पुनर्द्विविधा ज्ञेया मार्गदेशीविभेदतः ।
ग्रामरागा विभज्यन्ते तत्रोद्देशक्रमादिह ॥२४॥

ते पञ्चधा समादिष्टाः पञ्चगीतिसमाश्रयात् ।
ताश्च मातामुनिमताद् गीतयः स्युरनेकधा ॥२५॥

भरतेन चतुर्थोक्ता मागधी चार्धमागधी[1] ।
संभाविता च पृथुलेत्यथ सप्तापि ता इति ॥२६॥

प्रथमा शुद्धगीतिः स्याद् भिन्ना चैव ततः परा ।
गौडी गीतिस्तृतीया[2] स्याद् रागगीतिश्चतुर्विधा (०चतुर्थिका)॥२७॥

साधारणा तथा भाषा विभाषा चैव सप्तमी ।
मतङ्गोक्ता इमाः सप्त दुर्गशक्तिमते पुनः ॥२८॥

गीतयः पञ्च विज्ञेया शुद्धा भिन्ना च वेसरा ।
गौडी साधारणा चेति माष्टिकेन पुनस्तथा ॥२९॥

भाषा चैव विभाषा च तथैवान्तरभाषिका ।
तिस्रस्तु गीतयः प्रोक्ताः कश्यपेन [3]पुनस्तथा ॥३०॥

भाषा चैव विभाषा च [4]गीतिद्वन्द्वमुदाहृतम् ।
भाषैव गीतिरेका स्यात् शार्दूलमुनिसम्मता ॥३१॥

दुर्गशक्तिमतादेताः शुद्धाद्या अत्र गीतयः ।
पञ्चैवाभ्युपगम्यन्ते काल्सेनेन भूभुजा ॥३२॥

मन्द्रमन्द्रतरैस्तारस्थानगैर्ललितैः स्वरैः ।
रागैः संपूर्णश्रुतिकैः शुद्धा गीतिरुदाहृता ॥३३॥

भिन्ना तु सूक्ष्मैर्मधुरैर्गमकैरन्विता स्वरैः ।
तारमन्द्रगतैर्वक्रैर्विकृतैः परिकीर्तिता ॥३४॥

गाढैः स्थानत्रयव्याप्तिपेशलैर्गमकैर्युता ।
स्वरैरोहाटिकायोगाल्ललितै[5]र्गौडिका मता ॥३५॥

---

[1] cf. Br. 285-308 and S. R. 2-1. 2-7 and Kallinātha's and Simhabhūpāla's commentaries thereon for 26-40 above.

[2] B. तृतीयः स्यात् ।

[3] A. omits पुन ।

[4] A. B. गीतिर्द्वन्द्व etc.

[5] A. ललितै गौडिका ।

उ (ओ) हाटी तत्र गमकैर्द्रुतद्रुततरैः स्वरैः ।
कम्पितैर्मन्द्रदेशस्थै[१]-हु न्यस्ते चिबुके सति ॥३६॥

हुकारौकारयोगेन जायते न्यासयोगतः ।
वेगवद्भिः स्वरैर्युक्ता वर्णानां च चतुष्टये ॥३७॥

नितरां रञ्जकत्वेन वेसरा गीतिरुच्यते ।
वेगवत्स्वरसंयोगाच्चैव[२] वेगस्वरेति च ॥३८॥

रागगीतिरिति प्रोक्ता कश्यपेन महर्षिणा ।
अथैतासां चतसृणां[3] गीतीनां लक्ष्मयोगतः ॥३९॥

साधारण्येन मुनिना गीतिः साधारणोदिता ।
ग्रामरागानथो वच्मि गीतीरेताः समाश्रितान् ॥४०॥

ते च शुद्धादिगीतीनां योगाच्छुद्धादयः स्मृताः ।
तत्र स्यात् प्रथमस्तेषु शुद्धकैशिकमध्यमः[४] ॥४१॥

शुद्धसाधारितश्चैव षड्जग्रामस्तृतीयकः ।
षड्जग्रामसमुत्पन्नास्त्रयः शुद्धाः प्रकीर्त्तिताः ॥४२॥

चत्वारो मध्यमग्रामे शुद्धास्तत्र तु पञ्चमः ।
मध्यमग्रामसंज्ञश्च षाडवः शुद्धकैशिकः ॥४३॥

एवं शुद्धास्तु सप्तैव, शुद्धत्वे हेतुरुच्यते[५] ।
स्वजातेः पोषकत्वं च, यथात (व) दनुवर्तनम् ॥४४॥

अन्यजातिविरूपत्वमिति पूर्वैरुदीरितम् ।

[ इति सप्त शुद्धाः ]

उद्दिश्यन्ते तु भिन्नास्तु[६] तत्र कैशिकमध्यमः ॥४५॥

षड्जग्रामगतौ द्वौ[७] तु मध्यमग्रामगास्त्रयः ।
तानः कैशिकनामा च भिन्नपञ्चमसंज्ञितः ॥४६॥

---

[१] A. B. देशस्थैं हुन्यस्ते ।   [२] A. सयोगाश्चैव । B. सयोगात्स्वैव ।
[3] B. गीतानां
[४] cf. Br. 311-12 and S. R. 2. 1. 8-9 for verses 41-43 above.
[५] cf. Br. 317.
[६] cf. Br. 313 and S. R. 2-1. 10.
[७] A. तौ । भिन्नषड्ज is omitted in the enumeration of two 'Bhinna Rāgas' of 'Ṣaḍjagrāma'.

भिन्ना पञ्चेति विज्ञेया, चतुर्धा भिन्नतोदिता ।[1]
तत्र शुद्धत्वभिन्नोऽसौ य स्वजात्यनुवर्त्तक ॥४७॥

निषेधमन्यजातौ (शू) च जातिभिन्नस्तु स स्मृत ।
स्वजातिवादिसस्यानो बहु ( ) स्वल्पोऽथवापि सन् ॥४८॥

सूक्ष्मसूक्ष्मं प्रयोगस्तु श्रुतिभिन्न[2] स उच्यते ।
स्वरो द्विश्रुतिको यत्र जायतेऽथ चतु श्रुति ॥४९॥

स्वरो वाद्यनुवादो वा लुप्यते यत्र चेच्छया ।
न्यासोऽनुवादिनि स्याच्चेत् स्वरभिन्नस्तु उच्यते ॥५०॥

तत्र स्यात् कैशिक शुद्धभिन्नकैशिकमध्यम ।
जातिभिन्नस्तथा तान श्रुतिभिन्न उदाहृत ॥५१॥

स्वरभिन्नौ स्मृतौ भिन्नषड्जपञ्चमको (कौ) बुधै ।
सत्यप्यन्येषु रागेषु शुद्धभिन्नादिलक्षणे ॥५२॥

भिन्नत्व तेषु यन्नास्ति तत्र गीतिस्तु कारणम् ॥५३॥

षड्जग्रामे स्थितौ[3] गौडौ[4] गौडकैशिकमध्यम ।
गौडपञ्चमकश्चेति द्वौ तथा गौडकैशिक ॥५४॥

मध्यमग्रामगश्चैक इति गौडास्त्रय स्मृत ।
[5]अथाष्टौ वेसरा [6]षड्जग्रामे टक्काभिधस्तत ॥५५॥

वेसर षाडवान्तश्च[7] सौवीरश्चेति ते त्रय ।
ग्रामे तु मध्यमे प्रोक्तौ बोट्टमालवकैशिकौ ॥५६॥

मालव पञ्चमान्तश्च तथा द्वैग्रामिक पुन ।
टक्ककैशिकहिन्दोलावित्यष्टौ वेसरा स्मृता ॥५७॥

---

[1] cf Br 322 p 88
[2] B omits विसर्ग ।
[3] B स्मृतौ ।
[4] cf Br. 313 and S R 2 1 10 11
[5] cf Br 314 15 and S R 2 1 11-13
[6] A B षड्ज ग्रामे ।
[7] A B षडवान्तश्चासौवीरश्चेति ।

उ (ओ) हाटी तत्र गमकैर्द्रुततरैः स्वरैः ।
कम्पितैर्मन्द्रदेशस्थै[1]-र्हृन्न्यस्ते चिबुके सति ॥३६॥

हकारौकारयोगेन जायते न्यासयोगतः ।
वेगवद्भिः स्वरैर्युक्ता वर्णानां च चतुष्टये ॥३७॥

नितरां रञ्जकत्वेन वेसरा गीतिरुच्यते ।
वेगवत्स्वरसंयोगाच्चैव[2] वेगस्वरेति च ॥३८॥

रागगीतिरिति प्रोक्ता कश्यपेन महर्षिणा ।
अथैतासां चतसृणां[3] गीतीनां लक्ष्मयोगतः ॥३९॥

साधारण्येन मुनिना गीतिः साधारणोदिता ।
ग्रामरागानयो वच्मि गीतीरेताः समाश्रितान् ॥४०॥

ते च शुद्धादिगीतीनां योगाच्छुद्धादयः स्मृताः ।
तत्र स्यात् प्रथमस्तेषु शुद्धकैशिकमध्यमः[4] ॥४१॥

शुद्धसाधारितश्चैव षड्जग्रामस्तृतीयकः ।
षड्जग्रामसमुत्पन्नास्त्रयः शुद्धाः प्रकीर्तिताः ॥४२॥

चत्वारो मध्यमग्रामे शुद्धास्तत्र तु पञ्चमः ।
मध्यमग्रामसंज्ञश्च षाडवः शुद्धकैशिकः ॥४३॥

एवं शुद्धास्तु सप्तैव, शुद्धत्वे हेतुरुच्यते[5] ।
स्वजातेः पोषकत्वं च, यथात (थ) दनुवर्तनम् ॥४४॥

अन्यजातिविरूपत्वमिति पूर्वैरुदीरितम् ।
[ इति सप्त शुद्धाः ]
उद्दिश्यन्ते तु भिन्नास्तु[6] तत्र कैशिकमध्यमः ॥४५॥

षड्जग्रामगतौ द्वौ[7] तु मध्यमग्रामगास्त्रयः ।
तानः कैशिकनामा च भिन्नपञ्चमसंज्ञितः ॥४६॥

---

[1] A. B. देशस्थै हृन्यस्ते । [2] A. सयोगाश्चैव । B. सयोगात्स्वैव ।
[3] B. गीताना
[4] cf. Br. 311-12 and S. R. 2. 1. 8-9 for verses 41-43 above.
[5] cf. Br. 317.
[6] cf. Br. 313 and S. R. 2-1. 10.
[7] A. तौ । भिन्नषड्ज is omitted in the enumeration of two 'Bhinna Rāgas' of 'Ṣaḍjagrāma'.

भिन्ना पञ्चेति विज्ञेया, चतुर्द्धा भिन्नतोदिता ।[१]
तत्र शुद्धत्वभिन्नोऽसौ य स्वजात्यनुवर्तक ॥४७॥

निषेधस्त्यजातौ (श्) च जातिभिन्नस्तु स स्मृत ।
स्वजातिवादिसस्थानो बहु ( ) स्वल्पोऽप्यवापि सन् ॥४८॥

सूक्ष्मसूक्ष्मै प्रयोगैस्तु श्रुतिभिन्न[२] स उच्यते ।
स्वरो द्विश्रुतिको यत्र जायतेऽथ चतुःश्रुति ॥४९॥

स्वरो वाद्यनुवादी वा लुप्यते यत्र चेच्छया ।
न्यासोऽनुवादिनि स्याच्चेत् स्वरभिन्नस्तु उच्यते ॥५०॥

तत्र स्यात् कैशिक शुद्धभिन्नकैशिकमध्यम ।
जातिभिन्नस्तथा तान श्रुतिभिन्न उदाहृत ॥५१॥

स्वरभिन्नौ स्मृतौ भिन्नषड्जपञ्चमको (कौ) बुधै ।
सत्यप्यन्येषु रागेषु शुद्धभिन्नादिलक्षणे ॥५२॥

भिन्नत्व तेषु यन्नास्ति तत्र गीतिस्तु कारणम् ॥५३॥

षड्जग्रामे स्थितौ[३] गौडौ[४] गौडकैशिकमध्यम ।
गौडपञ्चमकश्चेति द्वौ तथा गौडकैशिक ॥५४॥

मध्यमग्रामगश्चैक इति गौडास्त्रय स्मृत ।
[५]अथाष्टौ वेसरा [६]षड्जग्रामे टक्काभिधस्तत ॥५५॥

वेसर षाडवा तश्च[७] सौवीरश्चेति ते त्रय ।
ग्रामे तु मध्यमे प्रोक्तौ बोट्टमालवकैशिकौ ॥५६॥

मालव पञ्चमान्तश्च तथा द्वैग्रामिक पुन ।
टक्ककैशिकहिन्दोलावित्यष्टौ वेसरा स्मृता ॥५७॥

---

१ cf Br 322 p 88
२ B omits विसर्ग ।
३ B स्मृतौ ।
४ *cf Br 313 and S R 2-1. 10 11*
५ cf Br 314 15 and S R 2 1 11-13
६ A B षड्ज ग्रामे ।
७ A B षडवान्तश्चासौवीरश्चेति ।

[१]अयस्तु रूपसाधारशकभम्माणपञ्चमाः[२] ।
षड्जग्रामे, मध्यमे तु मत्तंगान्धारपञ्चमौ ॥५८॥

षड्जकैशिकनामा च, द्विग्रामः ककुभः स्मृतः ।
एवं साधारणाः सप्त ग्रामयोरुभयोरपि ॥५९॥

एवमेते ग्रामरागास्त्रिंशत् संपरिकीर्त्तिताः ।
शकादिस्तिलकष्टक्कः सैन्धवो राज(नाग)-पञ्चमः[3] ॥६०॥

भावनापञ्चमो नागगान्धारो रेवगुप्तकः ।
पञ्चमः षाडवान्तश्च कोकिलापञ्चमस्तथा ॥६१॥

इत्यष्टावुपरागाः स्युर्दुर्गशक्तिमते मताः ।
मतङ्गो रेवगुप्तञ्च टक्कसैन्धवमेव च ॥६२॥

साधारणेषु निक्षिप्य न च तान (व) ब्रवीदय ।
ग्रामरागानगणयद् द्वात्रिंशदिति तद्युजेः ॥
पञ्चैव चोपरागान् स विना पञ्चमषाडवम्[४] ॥६३॥

ग्रामरागेषु निक्षिप्य कश्चित् पञ्चमषाडवम् ।
त्रयस्त्रिंशदिति प्राह न तदाचार्यसम्मतम् ॥६४॥

भिन्नषड्जाख्यहिन्दोल[५]-टक्कमालवपञ्चमाः ।
भाषाणां जनका वेदसंख्याः शार्दूलसम्मताः ॥६५॥

टक्कपञ्चमहिन्दोलमालवादिककैशिकाः ।
ककुभो भिन्नषड्जश्च षण्मतङ्गमते मताः ॥६६॥

[६]सौवीरः ककुभष्टक्कः पञ्चमो भिन्नपञ्चमः ।
टक्ककैशिक-हिन्दोल-बोट्ट-मालवकैशिकाः ॥६७॥

गान्धारपञ्चमो भिन्नषड्जो वेसरषाडवः ।
मालवः पञ्चमान्तश्च[७] तानः पञ्चमषाडवः ॥६८॥

---

[१] A. यग्रस्तु । B. यदस्तु ।
[२] cf. Br. 316 and S. R. 2-1. 13-14.
[3] cf. S. R. 2. 1. 15-16.
[४] The extant text of Bṛhaddeśī does not refer to Uparāgas.
[५] B. हिन्दोलष्टक्क ।
[६] cf. S. R. 2. 1. 19-21, for 67-69 above.
[७] B. पञ्चमान्तेश्च ।

भाषाणां जनकाः पञ्चदशैते याष्टिके मते ।[1]
भणन्ति केचिदाचार्या रेवं गुप्तं तु षोडशम् ॥६९॥

एषां मते ग्रामरागा द्वात्रिंशदिह सम्मताः ।
षाडवः ककुभो भिन्नकैशिकष्टक्ककैशिकः ॥७०॥

हिन्दोलो भिन्नषड्जश्च बोट्टमालवकैशिकौ ।
भिन्नपञ्चमसौवीरगौडकैशिकसंज्ञकाः ॥७१॥

गान्धारपञ्चमश्चेति काश्यपे द्वादशोदिताः ।
एवं नानामुनिमते भाषाणां जननं प्रति ॥७२॥

विकल्पे पुनरुक्तेन विना सप्तदशैव ते ।
अष्टादशाथवापि स्युः केषांचन मते त्विमे ॥७३॥

सत्येवं याष्टिकस्यैव मतं पञ्चदशाश्रयम् ।
भाषाणां जनकत्वे तु वयमत्राद्रियामहे ॥७४॥

एभ्यो भाषाः समुत्पन्ना भाषाभ्यश्च विभाषिकाः ।
विभाषाभ्यः समुत्पन्नास्तथैवान्तरभाषिकाः ॥७५॥

आलापभेदो रागाणां भाषेत्याहुर्मनीषिणः ।
प्रतिरागमयी भाषा कीर्त्यते पूर्वशास्त्रतः ॥७६॥

साधारिता च गान्धारी सौवीरी वेगमध्यमा[2] ।
भाषाश्चतस्रः सौवीरे ककुभे भिन्नपञ्चमी ॥७७॥

काम्बोजी मध्यमग्रामा रगन्ती मधुरी तथा ।
शकमिश्रेति यद् प्रोक्तास्तिस्रश्चैव विभाषिकाः ॥७८॥

आभीरिका मधुकरी भोगवर्द्धनिका तथा ।
एकैवान्तरभाषा तु शालवाहनिकाभिधा ।७९॥

त्रवणा मध्यमग्रामदेहा मालववेसरी ।
कोलाहला च वैरञ्जी छेवाटी त्रवणोद्भवा ॥८०॥

सौराष्ट्री पञ्चमी दोह्या तथा पञ्चमलक्षिता ।
गान्धारपञ्चमी तानवलिता वेगरञ्जिका ॥८१॥[3]

---

[1] cf. S. R. 2-1. 19-21.

[2] cf. S. R. 2, 1. 21-47 for 77-134 above.

[3] B. *transposes verses* 81-82.

ललिता मालवी ताना वेसरी रविचन्द्रिका ।
सैन्धव्याभीरिकेत्युक्ता मतङ्गेनैकविंशतिः ॥८२॥

टक्करागसमुद्भूता भाषाश्चैव विभाषिकाः ।
भावन्यान्ध्री गूर्जरी च तथा देवारवर्द्धिनी ॥८३॥

चतस्रः पञ्चमे रागे दश भाषास्तु ता यथा ।
कैशिकी त्रावणी तानोद्भूवाऽऽभीरी च गुर्जरी ॥८४॥

सैन्धवी दाक्षिणात्याऽऽन्ध्री माङ्गली भावनीति च ।
विभाषाद्वितयं चाथ भम्माण्यन्धालिका तथा ॥८५॥

भिन्नपञ्चमके भाषा शुद्धभिन्ना वराटिका ।
विशालिन्यपरा प्रोक्ता तथा धैवतभूषिता ॥८६॥

चतस्रस्तु विभाषैका कैशिकीति मता सताम् ।
टक्ककैशिकरागे तु भाषाद्वन्द्वमुदीरितम् ॥८७॥

मालवा भिन्नललिता द्राविडयेका विभाषिका ।
छेवाटी वेसरी चूतमञ्जरी षड्जमध्यमा ॥८८॥

पिञ्जरी भिन्नपौराली गौडी मालववेसरी ।
मधुरीति समाख्याता हिन्दोलेन च भाविका ॥८९॥

बोट्टे स्यान्माङ्गलीत्येका भाषा शार्दूलसम्मता ।
खञ्जिनी गुर्जरी हर्षपुरी मालववेसरी ॥९०॥

मङ्गाली माङ्गली गौडी पौराली चार्धवेसरी ।
शुद्धा मालवरूपा च सैन्धव्याभीरिकेति च ॥९१॥

त्रयोदशेति विज्ञेया भाषा मालवकैशिके ।
देवारवर्द्धिनी चाथ तद्वत् काम्बोजिकापि च ॥९२॥

विभाषाद्वितयं चात्र विज्ञेयं दत्तिलोदितम् ।
गान्धारपञ्चमे रागे भाषा गान्धारिकैकिका ॥९३॥

षड्जभाषा च कालिन्द्री तुम्बरी ललिता ततः ।
श्रीकण्ठिका च बाङ्गाली गान्धारी स्वरवल्लिका ॥९४॥

गान्धारवल्ली कच्छेल्ली दाक्षिणात्या निषादिनी ।
त्रवणा मध्यमा शुद्धा सैन्धवी च पुलिन्दिका ॥९५॥

भाषाः सप्तदश ज्ञेया विद्वद्भिर्भिन्नषड्जके ।
देवारवर्द्धनी तद्वत् पौराली मालवी तथा ॥९६॥

कालिन्दीति चतस्रस्तु विभाषाः परिकीर्तिताः ।
अत्र भाषे भवेतां द्वे रागे वेसरषाडवे ॥९७॥

एका नट्टाभिधा चान्या संप्रोक्ता बाह्यषाडवा ।
विभाषाद्वितयं तद्वत् श्रीकण्ठी पार्वती तथा ॥९८॥

विभावनी वेदवती भावनीति समाख्यया ।
तिस्रो भाषास्तु विज्ञेया रागे मालवपञ्चमे ॥९९॥

ताने तानोद्भवा भाषैकैव प्रोक्ता पुरातनैः ।
ज्ञेया पोताभिधैकैव भाषा पञ्चमषाडवे ॥१००॥

विभाषा [1]पल्लवीत्येका तिस्रश्चान्तरभाषिका(ः) ।
प्रथमा भासवलिता द्वितीया करणावली ॥१०१॥

तृतीया शकललिता माष्टिकेनोररीकृता ।
चतस्रोऽनुक्तजनकाः पल्लव्याद्याः स्मृता बुधैः ॥१०२॥

प्रोचुर्भाषांशकामेके तद्विदो रेवगुप्तके ।
एवं भाषा(ः) षण्णवतिर्विभाषा विंशति(ः)स्मृताः ॥१०३॥

चतस्रोऽन्तरभाषा(ः)स्युर्ग्रामरागान् समाश्रिताः ।
चातुर्विध्यं बृहद्देश्यां मतङ्गो निरदीधरत् ॥१०४॥

भाषाणां तत्र मुख्याः[2] [3]स्युर्भाषाः काश्चन काश्चन ।
स्वराख्यया समाख्याता(ः) काश्चिद्देशाख्यया पुनः ॥१०५॥

उपरागभवाः काश्चित्तत्र मुख्यास्तु ताः स्मृताः ।
अनन्याश्रयगा यास्तु यास्तु ख्याताः स्वराख्यया[4] ॥१०६॥

स्वराख्यास्ता(ः) स्मृता देशे नाम्नाख्यातास्तु देशजाः ।
उपरागभवा भाषाः प्रोच्यन्ते चोपरागजाः ॥१०७॥

टक्के मुख्या समाख्याता भाषा मालववेसरी ।
सौराष्ट्रिका सैन्धवी च मालवी चेति देशजाः ॥१०८॥

त्रवणी त्रवणोद्भूता ललिता वेगरञ्जिका ।
कोलाहला तथा ताना[5] स्मृताः षड्उपरागजाः ॥१०९॥

---

[1] B. पल्लकी ।
[2] A. omits विसर्ग ।
[3] A. स्युः भाषाः ।
[4] [5] A. B. add विसर्ग ।

स्वराभिधा मध्यदेहा तया पञ्चमलक्षिता ।
आभीरी पञ्चमे मुख्या सौराष्ट्री गुर्जरी तया ॥११०॥

[1]दाक्षिणात्या सैन्धवी च बाङ्गाली देशजाः स्मृताः ।
त्रवणा कैशिकीति द्वे उपरागसमुत्थिते ॥१११॥

हिन्दोलके स्मृता मुख्या भाषा मालवकैशिकी ।
गौडी काम्बोजकेति द्वे देशजे तत्र कीर्त्तिते ॥११२॥

उपरागभवा भाषा छेवाटी कीर्त्तितैकिका ।
मालवा नु समाख्याता मुख्या मालववेसरे ॥११३॥

मालवी सैन्धवी हर्षपुरी गौडी च बाङ्गली(बङ्गाली) ।
पञ्च स्युर्देशजा भाषा भिन्नषड्जभवा अथ ॥११४॥

शुद्धषड्जा तु मध्यैका दाक्षिणात्या च सैन्धवी ।
बाङ्गाली [2]चेति तिस्रः स्युर्देशजाश्चोपरागजाः ॥१२५॥

श्रीकण्ठी त्रवणाख्या च ललिता ककुभे पुनः ।
मुख्या रगन्तिकैका स्यादाभीरी देशसंभवा ॥११६॥

उपरागभवा भिन्नपञ्चमी परिकीर्त्तिता ।
त्रवणा मध्यमग्रामदेहा गान्धारपञ्चमी ॥११७॥

कोलाहला च वैरञ्जी छेवाटी त्रवणोद्भवा ।
वाहेर्या ललिता चैव सौराष्ट्री रविचन्द्रिका ॥११८।

गुर्जरी सैन्धवी चैव तथा मालववेसरी ।
पञ्चमा याष्टिकस्त्वेता मते षोडशभाषिकाः ॥११९॥

टक्कोद्भवा विभाषैका पोताख्या तत्र कीर्त्तिता ।
पौराली [3]हर्षपुर्य्यवेसरी गुर्जरी तया ॥१२०॥

सैन्धव्याभीरिका चैव बाङ्गाली पञ्जरी तया ।
अष्टौ भाषाः समुत्पन्ना रागान्मालवकैशिकात् ॥१२१॥

विभाषैका तु [4]शुद्धाऽस्ति [5]मधुरी भोगवर्द्धनी ।
काम्बोजी दाक्षिधा च मध्यमग्रामिका तया ॥१२२॥

---

[1] A. दक्षिणान्या ।

[2] B. चेतिस. ।

[3] A. B. हर्षपुर्यूद्वेगरी ।

[4] A. B. शुद्धे(ऽ)स्ति ।

[5] B. माधुरी ।

शालवाहनिका भिन्नपञ्चमी ककुभोद्भवा ।
सप्त भाषा विनिर्दिष्टा वेसरी षड्जमध्यमा ॥१२३॥

छेवाटी मधुरी चूतमञ्जरी पञ्च भाषिका ।
हिन्दोलाख्यात् समुत्पन्ना भावन्यान्ध्री च सैन्धवी ॥१२४॥

तानोद्भवा त्रावणी च बाङ्गाली पञ्चमोद्भवा ।
[1]षड भाषास्तु चतस्र [2]स्युर्विभाषा गुर्जरी पुनः ॥१२५॥

दाक्षिणात्याऽऽभीरिका च पञ्चमी याष्टिके मते ।
भिन्नषड्जात्समुत्पन्ना शुद्धा गान्धारिका तथा ॥१२६॥

सैन्धवीभाषिकास्तिस्रो विभाषा [3]दाक्षिणात्यिका ।
थीकण्ठी चैव पौराली बाङ्गाली च क्रमादिमाः ॥१२७॥

चतस्रोऽन्तरभाषे द्वे क(का)लिन्दी च पुलिन्दिका ।
साधारिका च गान्धारी-सौवीरी-वेगमध्यमाः ॥१२८॥

सौवीरिका[4]श्चतस्र स्युः [5]भिन्नपञ्चमतः पुन ।
शुद्धभिन्ना विशाला च तथा धैवतभूषिता ॥१२९॥

विशालेति(?) चतस्र स्युरथ मालवपञ्चमात् ।
भावन्येका स्मृता भाषा बाङ्गाली बोट्टरागत ॥१३०॥

टक्ककैशिकतस्तिस्रो द्राविडी मालवी तथा ।
तृतीया भिन्नवलिता चतुर्णां तु मते मता ॥१३१॥

भाषा [6]सार्धशत सर्वश्चित्वारिंशच्चवाधिका ।
विभाषाश्चान्तराख्यास्तु चतस्रः परिकीर्तिताः ॥१३२॥

समाने नाम्नि भाषाणां हेतुरागभिदावशात ।
विभिन्नता स्वरूपतो न गण्या पुनरुक्तिता[7] ॥१३३॥

सकीर्णदेशजा(जे)मूला छायामात्रेति नामभि ।
याष्टिकेनोदिता एताः सुज्ञानानामत( ) स्फुटाः ॥१३४॥

॥इति ग्रामरागोपरागभाषाविभाषान्तरभाषोद्देश ॥

---

[1] B षट् भाषास्तु ।
[2] A B स्वविभाषा ।
[3] B दक्षिणात्मिका ।
[4] B सौवीराच्चतस्र ।
[5] B पञ्चमरागत ।
[6] B सार्धं ।
[7] A पुनरुक्तिता ।

॥ इति ग्रामरागोपरागभाषाविभाषान्तरभाषोद्देशः ॥

अधुना ग्रामरागाणां लक्षणं प्रतिपाद्यते ।
उद्देशक्रममाश्रित्य भरताचार्यसम्मतम् ॥१३५॥

नन्वेषां ग्रामसंबन्धः कथमत्रोपदिश्यते ।
आचार्यवचनादेव तद्वाक्यं दर्श्यते यथा ॥१३६॥

षाडवो मध्यमग्रामे पञ्चमः कैशिकस्तथा ।
षड्जे साधारितश्चैव तथा कैशिकमध्यमः ॥१३७॥

[1]मुखे तु मध्यमग्रामः षड्ज(:) प्रतिमुखे तथा ।
गर्भे साधारितश्चैव ह्यवमर्षे तु पञ्चमः ॥१३८॥

संहारे कैशिकः प्रोक्तः [2]पूर्वरङ्गे तु षाडवः ।
चित्रस्याष्टादशाङ्गस्य त्वन्ते कैशिकमध्यमः ॥१३९॥

शुद्धानां विनियोगोऽयं ब्रह्मणा समुदाहृतम् (तः) ॥१४०॥इति॥

यस्य ग्रामस्य संबन्धे या जातिरिह वर्त्तते ।
तया यो जन्यते रागः स तद्ग्राम ईरितः ॥१४१॥

यस्मिन् वा दृश्यते रागे यस्य ग्रामस्य मूर्च्छना ।
स स्यात्तद्ग्रामसम्बन्ध इति काश्यपनिर्णयः ॥१४२॥

त्रि(द्वि)चतुःश्रुतिकत्वं तु यस्य मध्यमषड्जयोः ।
नियामकमिति प्रोक्तं प्रागेव पृथिवीभुजा ॥१४३॥

इत्येषां परिभाषाऽत्रानुक्तग्रामविशेषके ।
रागे ग्रामविशेषाय विज्ञातव्या विपश्चिता ॥१४४॥

॥ अथ शुद्धग्रामरागाः ॥

॥अथ शुद्धकैशिकमध्यमः ॥१॥

जातिभ्यां कैशिकीशुद्धमध्यमाभ्यां समुत्थितः ।
तारस्थानस्य-[3]षड्जांशग्रहः काकलिना युतः ॥१४५॥

स्वल्पगान्धारकोपेतः पञ्चमर्षभवर्जितः ।
प्रसन्नान्तोऽलंक्रियालंकृतः [4]षड्जादिमूर्च्छनः ॥१४६॥

---

[1] cf. N. S. 32. 451-54. and Brh. p. 87.

[2] A. B. पूर्वरागे ।

[3] A. षड्काश B. षट्कारा ।

[4] B. षट्ज्यादि ।

मध्यमस्वरगन्यासो वर्णेनैवावरोहिणा ।
उपेतो वासरस्याद्ये प्रहरे संप्रयुज्यते ॥१४७॥

रसेष्वद्भुतवीराख्यरौद्रेष्वाद्ये तथा पुनः ।
सन्धौ निर्वहणाख्ये तु शशाङ्कप्रीतिकारकः ॥१४८॥

षड्जग्रामसमुद्भूतः शुद्धकैशिकमध्यमः ।
नन्वयं मध्यमग्राम-[1]जातकैशिकिकोद्भवः ॥१४९॥

कथमत्र भवद्भिस्तु षड्जग्रामे तु वर्ण्यते ।
सत्यं यज्जातिजो रागो यः स्यात्तद्ग्रामग्रामिता ॥१५०॥

तस्य यद्यपि संसिद्धा तथाप्यत्रोपदर्श्यते ।
पञ्चमर्षभहीनत्वात् षड्जग्रामनिवासिता ॥१५१॥

आलापो रूपकञ्चैव करणं वर्त्तनी तथा ।
आक्षिप्तिका चेतिरूपं[2] राग(:)स्यात् पञ्चभि(:)स्फुटः ॥१५२॥

ग्रहोंऽशस्तारमन्द्रौ च न्यासोऽपन्यास एव च ।
व्यक्ति गच्छन्ति यत्रैते स रागालाप ईरितः ॥१५३॥

रागालापवदेव स्याद्रूपकं किन्तु तत्र च ।
पृथक् क्रियन्ते वाद्यादेः स्वरा ये स्युर्विवादिनः ॥१५४॥

चित्रादिमार्गत्रितये ताले चञ्चत्पुटादिके ।
संदर्भिता स्वरपदैरुदिताऽऽक्षिप्तिका बुधैः ॥१५५॥

करणस्य भिदाः सन्ति बोध्या वर्त्तनिकापि च ।
प्रोक्ता कारणवद्रूपं रूपकेषु तयोरतः ॥१५६॥

निरूपयिष्यते यस्मात्तदन्तर्गमिता तयोः ।
तत्रालापचतुर्भिस्तु स्वस्थानैः प्रकटीभवेत् ॥१५७॥

भवानीपतिरागेण विरागेण विगर्हिते ।
मृषालापविहीनेन रागालापः प्रदर्श्यते ॥१५८॥

यस्मिन् रागे ग्रहो यस्तं स्थायिनं परिकल्प्य च ।
तृतीयान्दोलनादूर्ध्वं द्वितीयस्मिन् विलम्ब्य च ॥१५९॥

न्यासस्वरविरामे च स्वस्थानं प्रथमं स्मृतम् ।
ग्रहा(त्)तूर्येषु वेदाब्धिन्यासैः प्रोक्तो द्वितीयकः ॥१६०॥

तुर्याद्याब्धियुगान् कृत्वा स्थित्वा पञ्चमके ततः ।
विधाय रसबाणाब्धीन् न्यासेनान्त्ये तृतीयकम् ॥१६१॥

---

[1] A. B. ग्रामकैशिकिकोद्भव. ।

[2] B. adds विसर्ग ।

॥ इति ग्रामरागोपरागभाषाविभाषान्तरभाषोद्देशः ॥

अधुना ग्रामरागाणां लक्षणं प्रतिपाद्यते ।
उद्देशक्रममाश्रित्य भरताचार्यसम्मतम् ॥१३५॥

नन्वेषां ग्रामसंबन्धः कथमत्रोपदिश्यते ।
आचार्यवचनादेव तद्वाक्यं दर्श्यते यथा ॥१३६॥

षाडवो मध्यमग्रामे पञ्चमः कैशिकस्तथा ।
षड्जे साधारितश्चैव तथा कैशिकमध्यमः ॥१३७॥

[1]मुखे तु मध्यमग्रामः षड्ज(:) प्रतिमुखे तथा ।
गर्भे साधारितश्चैव ह्यवमर्षे तु पञ्चमः ॥१३८॥

संहारे कैशिकः प्रोक्तः [2]पूर्वरङ्गे तु षाडवः ।
चित्रस्याष्टादशाङ्गस्य त्वन्ते कैशिकमध्यमः ॥१३९॥

शुद्धानां विनियोगोऽयं ब्रह्मणा समुदाहृतम् (तः) ॥१४०॥इति॥

यस्य ग्रामस्य संबन्धे या जातिरिह वर्तते ।
तया यो जन्यते रागः स तद्ग्राम ईरितः ॥१४१॥

यस्मिन् वा दृश्यते रागे यस्य ग्रामस्य मूर्च्छना ।
स स्यात्तद्ग्रामसम्बन्ध इति काश्यपनिर्णय : ॥१४२॥

त्रि(द्वि)चतुःश्रुतिकत्वं तु यस्य मध्यमषड्जयोः ।
नियामकमिति प्रोक्तं प्रागेव पृथिवीभुजा ॥१४३॥

इत्येषां परिभाषाऽत्रानुक्तग्रामविशेषके ।
रागे ग्रामविशेषाय विज्ञातव्या विपश्चिता ॥१४४॥

॥ अथ शुद्धग्रामरागाः ॥

॥अथ शुद्धकैशिकमध्यमः ॥१॥

जातिभ्यां कैशिकीशुद्धमध्यमाभ्यां समुत्थितः ।
तारस्थानस्य-[3]षड्जांशग्रहः काकलिना युतः ॥१४५॥

स्वल्पगान्धारकोपेतः पञ्चमर्षभवर्जितः ।
प्रसन्नान्तोऽलंक्रियालंकृतः [4]षड्जादिमूर्च्छनः ॥१४६॥

---

[1] cf. N. S. 32. 451-54. and Brh. p. 87.
[2] A. B. पूर्वरागे ।
[3] A. षड्काश B. षट्कारा ।
[4] B. षट्ज्यादि ।

मध्यमस्वरगन्यासो वर्णेनैवावरोहिणा ।
उपेतो वासरस्याद्ये प्रहरे संप्रयुज्यते ॥१४७॥

रसेष्वद्भुतवीराख्यरौद्रेष्वाद्ये तथा पुनः ।
सन्धौ निर्वहणाख्ये तु शशाङ्कप्रीतिकारकः ॥१४८॥

षड्जग्रामसमुद्भूतः शुद्धकैशिकमध्यमः ।
नन्वयं मध्यमग्राम-[1]जालकैशिकिकोद्भवः ॥१४९॥

कथमत्र भवद्भिस्तु षड्जग्रामे तु वर्ण्यते ।
सत्यं यज्जातिजो रागो यः स्यात्तद्ग्रामग्रामिता ॥१५०॥

तस्य यद्यपि संसिद्धा तथाप्यत्रोपवर्ण्यते ।
पञ्चमर्षभहीनत्वात् षड्जग्रामनिवासिता ॥१५१॥

आलापो रूपकञ्चैव करणं वर्त्तनी तथा ।
आक्षिप्तिका चेतिरूपै[2] राग(ः)स्यात् पञ्चभि(ः)स्फुटः ॥१५२॥

ग्रहोंऽशस्तारमन्द्रौ च न्यासोऽपन्यास एव च ।
व्यक्ति गच्छन्ति यत्रैते स रागालाप ईरितः ॥१५३॥

रागालापवदेव स्याद्रूपकं किन्तु तत्र च ।
पृथक् क्रियन्ते वाद्यादेः स्वरा ये स्युर्विवादिनः ॥१५४॥

चित्रादिमार्गत्रितये ताले चञ्चत्पुटादिके ।
संदर्भिता स्वरपदैरुदिताऽऽक्षिप्तिका बुधैः ॥१५५॥

करणस्य भिदाः सन्ति बोध्या वर्त्तनिकापि च ।
प्रोक्ता कारणवद्रूपं रूपकेषु तयोरतः ॥१५६॥

निरूपयिष्यते यस्मात्तदन्तर्गामिता तयोः ।
तत्रालापचतुर्भिस्तु स्वस्थानैः प्रकटीभवेत् ॥१५७॥

भवानीपतिरागेण विरागेण विगर्हिते ।
मृगालापविहीनेन रागालापः प्रदर्श्यते ॥१५८॥

यस्मिन् रागे ग्रहो यस्तं स्थायिनं परिकल्प्य च ।
तृतीयान्दोलनादूर्ध्वं द्वितीयस्मिन् विलम्ब्य च ॥१५९॥

न्यासस्वरविरामे च स्वस्थानं प्रथमं स्मृतम् ।
ग्रहा(त्)तुर्येषु वेदाब्धिन्यासैः प्रोक्तो द्वितीयकः ॥१६०॥

तुर्याद्याम्मिमुगान् कृत्वा स्थित्वा पञ्चमके ततः ।
विधाय रसबाणाब्धीन् न्यासेनान्त्ये तृतीयकम् ॥१६१॥

---

[1] A. B. ग्रामकैशिकिकोद्भवः ।

[2] B. adds विसर्ग ।

प्रहाब्धिवेदबाणाग्निनागान् कृत्वा विलम्ब्य च ।
द्वितीयमग्निपक्षौ च विधाय न्यसनस्वरे ॥१६२॥

न्यासाच्चतुर्थं स्वस्थानमित्युक्तं पृथिवीभृता ।
अत्र या गणना प्रोक्ता द्वितीयादिस्वरादितः ॥१६३॥

असौ विज्ञेन विज्ञेया वर्जयित्वा विवादिनम् ।
द्विःसा मां धां तथा सा च निधौ सनी च सांत्रयम् ॥१६४॥

धा नि द्विर्मा तथा सा गाद्वयं सा धाद्वयं च सां ।
निधौ सनी द्विः सा धा मा माधौ मगौ ग सत्रयम् ॥१६५॥

धा मा सगौ च सा गा मा धा सनी धा च सांत्रयम् ।
धानी द्विर्मा तथा सा गाद्वयं मा धाद्वयं च सां ॥१६६॥

निधौ सनी द्विःसां धा मा मधौ सगौ गसत्रयम् ।
धा मा सगौ च सा गा मा धा सनी धा च सांत्रयम् ॥१६७॥

नी मा धीयतो (?मन्द्रमागतो)न्यास आलापः प्रसृतः पटुः ।
प्रत्येकं द्विः समधमा धमन्यो धमसांत्रयम् ॥१६८॥

द्विरेवं तु पुनर्द्विः सां गसौ गमौ मधौ समौ ।
निधौ त्रिःसां धमौ द्विर्द्विरित्येकं वा (वि)रमिष्यत ॥१६९॥

धमौ मगौ मसौ गसौ गमौ धमौ धसौ गनी ।
गाद्वयं सात्रयं मानां चतुष्ट्वं करणे स्मृतम् ॥१७०॥

द्विः सा धा पा तथा मा धा पा मां[1] इति कलादिमा ।
धा पा द्विर्द्विस्तु सारी मांद्वयं[2] स्यादपरा कला ॥१७१॥

नी धा मा नी तथा धा नी साद्वयं तु तृतीयिका ।
नी धा नी पञ्चकं सानां चतुर्थी, पञ्चमी पुनः ॥१७२॥

द्विर्धा सा मा तथा द्वौ री द्विः सा, षष्ठी ततः स्मृता ।
द्विर्धा मागाद्वयं मागा, सप्तम्यां नी च धा तथा ॥१७३॥

मा नी धा नी तथा द्विः सा, कला स्यादष्टमी पुनः ।
धा सा धा नी माचतुष्कमित्येवं स्यात् स्वरावलिः ॥१७४॥

---

[1] A. B. पामामिति ।

[2] A. B. मात्रय ।

१. सां सां धां पां मां धां पा मां[1]
[2]ॐ ० का ० र मू ० र्ति

२. धा पा सा सा री री मा मा
सं ० स्थं ० मा ० त्रा ०

३. नी धा मा नी धा नी [3]सा सा
त्र य भू ० षि तं ० ०[4]

४. नी धा नी [5]सा सा सा सा सा
क ला ० ती ० तं ० ०

५. धा धा [6]सा मा री री सा सा
व र दं ० व रं ० व

६. धा धा [7]मा मा [8]गा गा मा गा
रे ० ण्य ० गो ० विं ०

७. नी धा मा नी धा नी सा सा
द क सं ० स्तु तं ० ०

८. [9]धां सा धा नीं मा मां मा मा
वं ० ० दे ० ० ० ०

ब्रह्मप्रोक्तानि जानीयात् पदान्याक्षिप्तिकासु च ।
वर्तनीकरणेनैव व्याख्यापि (स्यात्) क्वचित् क्वचित् ॥१७५॥

पार्थक्येनोच्यते क्वापि क्वचित् स्यादुभयं पृथक् ।
मतङ्गादिमहाचार्यसम्मतंकानुसारिणा ॥१७६॥

---

[1] S. R. सा सा धा पा मा धा पा मा ।
[2] The verbal structure is as follows :—
ॐकारमूर्तिसस्थ मात्रात्रयविभूषितम् ।
कलातीत वरद वर वरेण्य गोविन्दकसस्तुत वन्दे ॥
[3] A. B. सा सा, S. R. सा सा ।
[4] A. B. and S. R. क and the fourth Kalā begins with ला ० ।
[5] S. R. सा सा सा सा सा ।
[6] A. B. सा मा; S. R. मा मा ।
[7] A. B. मा गां गा मा ।
[8] S. R. गा गा मा गा ।
[9] A. B. सां मा धा नी मा मा मा मा; S. R. धा सा धां नी मा मा मा मा ।

निरूप्यते मया सम्यक्(ग्) भाषादिष्वेव रूपकम् ।
इति प्रोक्ता(क्तो) मया सम्यक् शुद्धकैशिकमध्यमः ॥१७७॥

॥ अथ शुद्धसाधारितः ॥२॥

षड्जमध्यमिकाजातेरुद्भूतः पूर्णतामितः ।
षड्जादिमूर्च्छनस्तारस्थानषड्जग्रहांशकः ॥१७८॥

अल्पद्विश्रुतिको [1]न्यासमध्यमेन विभूषितः ।
अवरोहिणि वर्णे स्यादलंकारस्तयाऽत्र च ॥१७९॥

प्रसन्नान्तो, दिनस्याद्ये प्रहरे गीयते बुधैः ।
विनियोगोऽस्य विज्ञेयो गर्भसन्धौ, रसौ पुनः ॥१८०॥

वीररौद्रौ, कतिपये शृङ्गारमपि मन्वते ।
शुद्धसाधारितो रागो विज्ञेयो रविदैवतः[2] ॥१८१॥

षड्जपञ्चमधा री [3]पाद्वयं धर्षभपञ्चमाः ।
धप धा सांद्वयं पा धा नी धा पा माद्वयं च री ॥१८२॥

पा धा रीति त्रयाणां स्याद् द्वयं पाधाय साद्वयम् ।
धा मां री मां मधौ रीं सा सांद्वयं सरिगा अपि ॥१८३॥

पा धा रीति द्वयं द्विः स्यात् पाधेति द्वितयं पुनः ।
त्रिःसां रीगा तया सापा धानी धा पा च मांद्वयम् ॥१८४॥

इत्यालापोऽय करणं द्विर्द्विः सप धरी रिपा ।
धमौ द्विः [4]सां इदं खण्डं द्विर्द्विरन्यत् पुनः स्मृतम् ॥१८५॥

रिरी पधौ[5] धनी द्विःपौ रिपौ धसौ च साद्वयम् ।
रिमसाद्वितयञ्चेति तृतीयं द्विरयोच्यते ॥
ससौ धसौ रिगौ द्विःसां पाधा निधपमाद्वयम् ॥१८६॥

द्विः सा धा नी पाचतुष्कं प्रथमा,-ऽथ द्वितीयिका ।
धा नी री पा पृथग् द्विर्द्वि-,स्तृतीया री च पात्रयम् ॥१८७॥

---

[1] A. न्यासे ।
[2] B. देवतः ।
[3] B. च पाद्वयं ।
[4] A. B. सामिदम् ।
[5] B. पपौ ।

धा नी पा मेति, धा मा धा पञ्चसा(ः) स्युश्चतुर्थिका ।
द्विर्धा सा धा तथा सा री गा [1]सां इति च पञ्चमी ॥१८८॥

री गा षट् पास्तु षष्ठ्यां स्यु,-र्धामाद्वितयतः[2] पुनः ।
सांचतुष्कं च सप्तम्या,-मष्टमी तु फलोच्यते ॥१८९॥

पा मा(धा) निधौ च पा मानां चतुष्कमिति कीर्तिता(तः) ।
शुद्धसाधारितो रागो ब्रह्मशैलावनीभृता ॥१९०॥

१. सा सा धा नी पा पा पा पा
[3]उ द य गि रि शि ख र

२. धा धा नी नी [4]री री पा पा
शि खा ० तु र ग खु र

३. री पा पा पा धा नी पा[5] मा
[6]धू ० त वि भि ० न्न ०

४. धा मा धा सा सा सा सा सा
घ न ति मि रः ० ० ०

५. धा धा सा धा सा री गा सा
ग ग न त ल स क ल

६. री गा पा पा पा पा पा धा
वि लु लि त स ह ० स्र

७. धा मा धा मा सां सां सां सां
कि र णो ० ज य तु ०

८. पा धा निध पा [7]मा मा मा मा
भा ० ०० ० नु ० ० ०

---

[1] A. B. सामिति ।

[2] A. B. द्वितियत. ।

[3] The verbal structure is as follows :—
उदयगिरिशिखर*-शिखातुरगखुर†-धूतविभिन्नघनतिमिरः ।
गगनतलसकलविलुलितसहस्रकिरणो जयतु भानु. ॥
* S. R. शेखर । † S. R. क्षत ।

[4] S. R. री री ।

[5] B. धा ।

[6] A. B. र धू त ० वि भि ० न्न; S. R. र ० क्षत etc.

[7] S. R. मा पा मा मा ।

॥ अथ षड्जग्राम ॥३॥

षड्जमध्यमया जात्या जात पूर्णस्वरस्तथा ।
तारषड्जग्रहाशश्च मध्यमन्यासभूषित ॥१९१॥

षड्जादिमूर्च्छनोपेत काकल्यन्त(र)राजित ।
षड्जापन्यासवान् गेयो वीररौद्राद्भुते रसे ॥१९२॥

प्रसन्नान्तालङ्कृतिकस्तया वर्णेऽवरोहिणि ।
दिनस्य प्रथमे यामे देवतागुरुदैवत ॥१९३॥

प्रावृट्काले प्रतिमुखे विनियुक्तो महर्षिणा ।
षडजग्रामाभिधो राग षड्जग्रामसमुद्भव ॥१९४॥

द्वि' सां रि ग घगौ री ग स नि धा पा ध धा रि ग ।
सा रि गा स रि गा पा नि धनि सा स म सा ग सा ॥१९५॥

रिगपा निधपा पा मेत्यालाप, करण तथा ।
ससौ मधौ गरी सा सा नि धा पा पा री री गधा ॥१९६॥

गरी षड्जाष्टक [१]मन्द्रमिति खण्ड द्विवारत ।
नी धा री री ग धा गा री सा सा नी धाय पाद्वयम् ॥१९७॥

री री पपौ निधौ नी साश्चत्वारश्च रिसौ रिगौ ।
धा निधौ प पगौ माला त्रयमाक्षिप्तिका तत ॥१९८॥

[२]रीद्वय च तथा गा धा गा री सांद्वन्द्वमादिमा ।
धापारीति पृथग द्वि स्याद् [३]गाधान्त्याऽथ तृतीयिका ॥१९९॥

गा री षट्क [४]मन्द्रसाना, द्वि सा गा च धनौ इति ।
नीचतुष्क चतुर्थी तु, पञ्चमी गा रिगौ [५]द्विर्धा ॥२००॥

गा री द्वि [६]सा, अथो षष्ठी नी धा द्वि' पा द्वौ रो द्वि' सा ।
[७]नी धा नी साचतुष्क च सरिसा' सप्तमी कला ॥२०१॥

---

[१] A मण्डमिति ।

[२] A रीद्वय च तथा गान्धारी साद्वन्द्वमादिमा, B रीद्वय च तथा गा धा री साद्वन्द्वमादिमा ।

[३] A B गाधान्याथ ।

[४] A B मान्द्रषड्जा ।

[५] A B द्विधा ।

[६] A B सामपो ।

[७] A B [illegible] नीधा ।

पा धा निधौ च पा मन्द्रमध्यमानां चतुष्ककम् ।
अष्टमीति यथार्थाख्यः षड्जग्रामो निरूपितः ॥२०२॥

१. [1]री री गा धा गा री [2]सा सा
[3]स ज य तु भू ० ता ०

२. [4]धा धा पा पा री री गा धा
धि प तिः ० प रि क र

३. गा री [5]सां सां सां सां सां सा
भो ० गी ० न्द्र कु ० ण्ड

४. सा सा गा धनि नी नी नी नी
ला ० भ र० ण ० ० ०

५. गा रिग धा धा गा [6]री सां सां
ग ज० च ० र्म प ट नि

६. नी धा पा पा री री [7]सा सा
व स न ० श शा ० ङ्क

७. नी धा नी [8]सा सा सा सा सरिस
चू ० डा ० म णि ० ०००

८. पा धा निध पा मां मा मां मा
शं ० ०० भुः ० ० ० ०

॥ अथ शुद्धपञ्चम ॥४॥

मध्यमापञ्चमीजातिसंजात काकलीयुत ।
अन्तरस्वरसयुक्तो विरामान्वितपञ्चम ॥२०३॥

---

१ S. R. री री गा सा गा री गा सा ।

२ A. B. सा सा ।

३ The verbal structure is as follows :—
स जयतु भूताधिपति. परिकरभोगीन्द्रकुण्डलाभरण ।
गजचर्मपटनिवसन शशाङ्कचूडामणि. शम्भु ॥

४ S. R. नी धा etc.

५ S. R. सा सा सा सा सा सा ।

६ S. R. गरि सा सा ।

७ S. R. पा पा ।

८ A. B. सा सा सा सा ।

॥ अथ षड्जग्रामः ॥३॥

षड्जमध्यमया जात्या जातः पूर्णस्वरस्तथा ।
तारषड्जग्रहांशश्च मध्यमन्यासभूषितः ॥१९१॥

षड्जादिमूर्च्छनोपेतः काकल्यन्त(र)राजितः ।
षड्जापन्यासवान् गेयो वीररौद्राद्भुते रसे ॥१९२॥

प्रसन्नान्तालंकृतिकस्तथा वर्णेऽवरोहिणि ।
दिनस्य प्रथमे यामे देवतागुरुदैवतः ॥१९३॥

प्रावृट्काले प्रतिमुखे विनियुक्तो महर्षिणा ।
षड्जग्रामाभिधो रागः षड्जग्रामसमुद्भवः ॥१९४॥

द्विः सां रि ग धगौ री ग स नि धा पा म धा रि ग ।
सा रि गा स रि गा पा नि धनि सा स म सा ग सा ॥१९५॥

रिगपा निधपा पा मेत्यालापः, करणं तथा ।
ससौ गधौ गरी सा सा नि धा पा पा री री गधा ॥१९६॥

गरी षड्जाष्टकं [१]मन्द्रमिति खण्डं द्विवारतः ।
नी धा री री ग धा गा री सा सा नी धाय पाद्वयम् ॥१९७॥

री री पपौ निधौ नी साश्चत्वारश्च रिसौ रिगौ ।
धा निधौ प पगौ माना त्रयमाक्षिप्तिका ततः ॥१९८॥

[२]रीद्वयं च तथा गा धा गा री सांद्वन्द्वमादिमा ।
धापारीति पृथग् द्विः स्याद् [३]गाधान्त्याऽथ तृतीयिका ॥१९९॥

गा री षट्कं [४]मन्द्रसानां, द्विः सा गा च धनी इति ।
नीचतुष्कं चतुर्थी तु, पञ्चमी गा रिगौ [५]द्विर्धा ॥२००॥

गा री द्विः [६]सा, अथो षष्ठी नी धा द्विः मा द्वौ री द्विः सा ।
[७]नी धा नी साचतुष्कं च सरिराः सप्तमी कला ॥२०१॥

---

[१] A. मण्डमिति ।

[२] A. रीद्वय च तथा गान्धारी साद्वन्द्वमादिमा, B. रीद्वय च तथा गा धा री साद्वन्द्वमादिमा ।

[३] A. B. गान्धान्याथ ।

[४] A. B. मान्द्रषड्जा ।

[५] A. B. द्विधा ।

[६] A. B. सामयो ।

[७] A. B. नीसा नीधा ।

पा धा निधौ च पा मन्द्रमध्यमानां चतुष्ककम् ।
अष्टमीति यथार्थाख्यः षड्जग्रामो निरूपितः ॥२०२॥

१. [1]री री गा धा गा री [2]सा सा
[3]स ज य तु भू ० ता ०
२. [4]धा धा पा पा री री गा धा
धि प तिः ० प रि क र
३. गा री [5]सां सां सां सां सा सां
भो ० गी ० न्द्र कु ० ण्ड
४. सा सा गा धनि नी नी नी नी
ला ० भ र० ण ० ० ०
५. गा रिग धा धा गा [6]री सां सां
ग ज० च ० र्म प ट नि
६. नी धा पा पा री री [7]सा सा
व स न ० श शा ० ङ्क
७. नी धा नी [8]सा सा सा सा सरिस
चू ० डा ० म णि ० ०००
८. पा धा निध पा मां मां मा मां
शं ० ०० भुः ० ० ० ०

॥ अथ शुद्धपञ्चम ॥४॥

मध्यमापञ्चमीजातिसंजात काकलीयुत ।
अन्तरस्वरसंयुक्तो विरामाञ्चितपञ्चम ॥२०३॥

---

[1] S. R. री री गा सा गा री गा सा ।
[2] A. B. सा सा ।
[3] The verbal structure is as follows :—
स जयतु भूताधिपति परिकरभोगीन्द्रकुण्डलाभरण ।
गजचर्मपटनिवसन शशाङ्कचूडामणि शम्भु ॥
[4] S. R. नी धा etc.
[5] S. R. सा सा सा सा सा सा ।
[6] S. R. गरि सा सा ।
[7] S. R. पा पा ।
[8] A. B. सा सा सा सा ।

मध्यसप्तकसंस्थानपञ्चमांशग्रहस्तया ।
हृष्यकामूर्च्छनोपेतः कामकामादिदैवतः ॥२०४॥

प्रसन्नादिविभूषश्च पूर्णः संचारिवर्णवान् ।
षड्जापन्यासससंयुक्तः स्वल्पद्विश्रुतिकः स्वर ॥२०५॥

विनियुक्त ऋतौ ग्रीष्मे प्रहरे वासरादिमे ।
शृङ्गारहास्ययोरेव रसयोरवमर्शके ॥
सन्धौ नाटकसंबन्धे शुद्धपञ्चमसंज्ञकः ॥२०६॥

पा धा मा धा नि धा पा पा प ध नी रिमयोर्युग्मम् ।
पधमाश्च धनी धा पात्रयं धानिरिगा द्वि(:) सां ॥२०७॥

मा पमौ गा री री मा प धा मा धनिधपा प सा ।
गा नी धा पा पनी री मा पा धा मा ध नि धा प पा ॥२०८॥

इत्यालापोऽस्य करणं माचतुष्कं धमौ धमौ[१] ।
निधौ पा पेति [२]षड्जं द्विः पपौ धनी रिमौ पपौ ॥२०९॥

मधौ निपौ पपौ चेति द्वितीयं च पपौ धनी ।
पृथग् द्विः स्यू रिगसरिग[३]-रयश्च मगौ मपौ ॥
धमा-धधौ[४] निधौ[५] पेति गदिताऽक्षिप्तिका तत ॥२१०॥

पांचतुष्कं[६] द्वी री द्विः [७]सां आद्या, पा गा पमौ च गा ।
रीत्रयं सा द्वितीया तु, मासारीणां द्विकं द्विकम् ॥२११॥

गा सां इति तृतीया तु, मा गा पमौ च गा तथा ।
रींत्रय सां चतुर्थी तु, रीमापानां पृथक् पृथक् ॥२१२॥

द्विकं धामेति पञ्चमी, मा धा द्विः सां [८]नी धा द्विः पा ।
षष्ठी, धा नी री मा री तु मात्रयं सप्तमी कला ॥
धां मां धां नी तथा पानां चतुष्कं वसुसम्मिता ॥२१३॥

---

[१] B. पधौ ।
[२] B. तण्ड ।
[३] A. B. add रि ।
[४] B. निधौ ।
[५] B. पधौ ।
[६] A. पांचतुर्यं ।
[७] A. B. गामाद्या ।
[८] A. B. निपा च पात्रयम् ।

१. [1]पां पां पां पां रीं रीं सां सां
[2]ज य वि ष म न य न

२. पा गा पम गा री री री सा
म द न० त नु द ह न

३. [3]मां मां सां सां रीं रीं गां सां
व र वृ ष भ ग म न

४. मां गां पंमं गां [4]रीं रीं रीं सां
पु र द० ह न ० ० ०

५. [5]रीं रीं मां मां पां पां धा मा
न त स क ल भु व न

६. मा धा सां सां नी धा [6]पा पा
न त स क ल भु व न

७. धां नीं रीं मां रीं मां [7]मा मा
भ व म म भ य ह र

८. [8]धां मां धां नीं पां पां पा पां
भ व श र णं ० ० ०

---

[1] A. B. पा पा पा पा री री सा सा (B. सा), S R सा सा सा सा री री गा सा।

[2] The verbal structure is as follows :—
जय विषमनयन ! मदनतनुदहन ! वरवृषभगमन पुरदहन !
नतसकलभुवन ! सितकमलवदन ! *भव मम भयहर ! भव शरणम्।
* A. B. omit भव मम भय हर and repeat भव शरणम् in the eightth Kalā.

[3] S. R. मा सा etc.

[4] A. B. मा मा पम गा री री री सा; S. R. मा गा पम गा री री री री।

[5] S. R. री री मा मा पा मा धा मा।

[6] S. R. पा मा।

[7] S. R. पा पा।

[8] S. R. धा मा धा नी पा पा पा पा।

इत्युक्त पञ्चमो रागो मध्यमग्रामसभव ॥२१४॥

॥ अथ मध्यमग्राम ॥५॥

गान्धारिकामध्यमाख्यापञ्चमीजातिसभव ।
मन्द्रषड्जग्रहांशश्च मध्यमन्याससयुत ॥२१५॥

सकाक्लीक सौवीरमूर्च्छनो ध्रुवयल्लभ ।
अवरोहिणि वर्णे स्यात् प्रसन्नादिविभूषित ॥२१६॥

नियोज्यो वासरस्याद्ये प्रहरे ग्रीष्मकालगे ।
शृङ्गारहास्ययोराद्यं सप्रोक्तो रसयो रसौ ॥२१७॥

मुखसन्धौ नाटकस्य, मध्यमग्रामसभव ।
सपूर्णो मध्यमग्रामो रागोऽस्यालाप ईर्यते ॥२१८॥

सा नो धा पा धा धरी गां सा रि ऽगां नो स सा ग पां ।
पपपा नी पनो सा सां गा सां निध नि नी नि री ॥२१९॥

गा सां पा घ मपो नीधामेति चालाप ईरित ।
पृथक् सपपसा द्विर्रो रिगो निसो घ सांद्वयम् ॥२२०॥

सगपा द्वि पृथद्द मञ्चा पमो धनिसनीपपा ।
पाम्रप मी पनो सानां नय गा घ सनी धनो ॥२२१॥

निगों री गा द्वि( ) सा पा पा मा पा नि ध प माद्वयम् ।
इत्येतत् करणं मापात्पर्गिर्पिताचा प्रोच्यते मया ॥२२२॥

द्वि सां द्विमी पुनरााद्वरेणा स्यात् प्रथमा कला ।
द्विर्मा गा मां धा मी द्वि सा द्वितीया,-ऽय तृतीयिका ॥२२३॥

१. [1]सां सां मां मां पां पां मां मां
[2]अ म र गु रु म म र

२. [3]मां मां गां मां धां नीं सा सा
प ति म जे ० यं ० ०

३. सां सां मां मां पां पां सां सां
जि त म द नं श शि श

४. [4]री गा नी सां सा सा सा सा
क ल ति ल कं ० ० ०

५. [5]नीं नीं नीं नीं धां पां मां मां
ग ण श त प रि वृ त

६. गां मां गां मां धां नीं सां सां
म शु भ ह रं ० ० ०

७. नीं रीं गां नीं सां सां पां पां
प्र ण म त सि त वृ ष

८. सा सा निध पा [6]मां मां मां मां
र थ ग० म नं ० ० ०

[7]मध्यमग्रामरागोऽयं षड्जापन्यासभूषितः।
सालापकरणाक्षिप्तिकादिरूप उदाहृतः ॥२२६॥

---

[1] In accordance with verse 223 the first Kalā should read as सा सा मा मा सा सा मा मा। A. B. सा सा मा मा पा पा मा मा; S. R. सा सा गा गा पा पा मा मा।

[2] The verbal structure is as follows:—

अमरगुरुममरपति-*मजेय, जितमदन †शशिशकलतिलकम्।
गणशतपरिवृत‡-मशुभहर, प्रणमत सितवृषरथगमनम्॥

* S. R. मजयम्।

† S. R. सकलशशितिलकम्।

‡ A. परिवृत्त।

[3] A. B. मा मा गा मा धा नी सा सा। S. R. गा मा मा मा धा नी सा सा।

[4] A. B. and S. R. री गा नी सा सा सा सा सा।

[5] A. B. नी नी नी नी धा पा मा मा; S. R. नी नी नी नी धा पा मा मा।

[6] S. R. मा मा मा मा।

[7] B. मध्यमरागरागोऽयं।

॥ अथ शुद्धषाडवः ॥६॥

मध्यमाजातिसंजातस्तारमध्यमकग्रहः ।
मध्यमांशन्यासयुक्तो मध्यमादिकमूर्च्छनः ॥२२७॥

काकल्यन्तरसंयुक्तः प्रसन्नान्तरभूषितः ।
अवरोह्यादिवर्णश्च[1] स्वल्पगान्धारपञ्चमः ॥२२८॥

संपूर्णः पूर्वरङ्गे च प्रयोक्तव्यो मनीषिभिः ।
शृंगारहास्यरसयोर्दैत्यदेवतदैवतः ॥२२९॥

दिनस्य प्रथमे यामे गेयोऽयं शुद्धषाडव ।
मा सा री नी ध सा धा नी मा पा पा धनी मा ध सा ॥२३०॥

री मा धा सा ध मा री गा मा मा धा मा रि गा रि नी ।
ध सा धा नी च माद्वन्द्वमित्यालाप प्रकीर्त्तित ॥२३१॥

ममौ रिगौ समौ संसं[2] इति द्वि खण्डमादिमम् ।
धनी स सा धनी मा मां सकृदन्यद् द्विशः पुन ॥२३२॥

म प नी म ध सा री गा री गा मा री ग मायुगम् ।
करणं वर्त्तनी चाथ प्रोच्यते, मा धनौ धपौ ॥२३३॥

मा रिमौ निधधा धौ सौ रिगौ सौ धनिधा [3]पमा ।
मा गां री गा म मा धा मा गा री गा स ग री ग सा ॥२३४॥

सा धनी मा धनी धा सा धनी माना चतुष्ककम् ।
वर्त्तन्येषा समुद्दिष्टाऽऽक्षिप्तिका तूच्यतेऽधुना ॥२३५॥

प्रथमा माद्वयं धा नी सा धा नी पा प्रकीर्त्तिता ।
धा नी मा सा तथा मा री मा नीति स्यात्ततः परा ॥२३६॥

धा नी द्वि सा गा रिगौ धाद्वयं धाम्या, चतुर्थिका ।
सा धा सा च मगौ मानां चतुष्कं, पञ्चमी पुन ॥२३७॥

मगौ री गा मात्रयं च पमो [4]गाऽयोऽपि, षष्ठिका ।
री गा मापट्कमथ च, सप्तमी नी च धा तथा ॥२३८॥

---

[1] A. B. वर्णाच ।
[2] A. B. ससमिति ।
[3] A. B. पमाम् ।
[4] A. B. गापावि पष्ठिका ।

नी धा सानां चतुष्केणाष्टमी गा रीद्वयं च गा ।
मांचतुष्कमिति प्रोक्ताऽऽक्षिप्तिकायां स्वरावलिः ॥२३९॥

१. [1]मा मा धा नी सा धा नी पा
[2]पृ थु ग ० ण्ड ग लि त

२. [3]धा नी मा सा मा री [4]मा नी
म द ज ल त ति सौ ०

३. [5]धां नीं सा सा गा रिग धा धा
र भ ल ० ग्न प० ० ट्प

४. सा धा सा मग मां मां मां मां
द स मू ०० हं ० ० ०

५. मग री गा मा मा मा पम गा
मु० ख मि ० न्द्र नी ०० ल

६. री गा [6]मां मां मां मां मां मां
श क लै ० भूं ० षि त

७. [7]नी धा नी धा सा सा सा सा
मि व ग ण प ते ० ०

८. गा री री गा मां मां मां मां
० ० जं य तु ० ० ०

इत्युक्तः षाडवः शुद्धो रागराजिविभूषणम् ॥२४०॥

---

[1] S. R. मा मा धा धा ।

[2] The verbal structure is as follows :—
पृथुगण्डगलित-*मदजलततिसौरभलग्नषट्पदसमूहम् ।
मुखमिन्द्रनीलशकलैर्भूषितमिव †गणपतेर्जयतु ॥
* S. R. मतजनमति
† A. B. गणपतिर्जयतु ।

[3] S. R. धा नी मां मा मा री मारी ।

[4] B. गा ।

[5] A. B. *धा नी सां सा etc.*; S. R. *धा नी सां सा etc.*

[6] S. R. सा सा etc.

[7] A. B. नी धा नी धा सा सा सा सा; S. R. नी धा नी धा सा सां सा सा ।

॥ अथ शुद्धकैशिकः ॥७॥

कार्मारवीकैशिकीभ्यामुत्पन्नः काकलीयुतः ।
संपूर्णः सावरोही च प्रसन्नान्तेन भूषितः ॥२४१॥

षड्जादिमूर्च्छनस्तारषड्जांशग्रहपेशलः ।
पञ्चमस्वरविश्रामः पृथिवीसुतदैवतः ॥२४२॥

वीररौद्राद्भुतरसो विनियोज्यो मनीषिभिः ।
सन्धौ निर्वहणे ज्ञेयः शिशिरे वासरादिमे ॥२४३॥

प्रहरे ज्ञेय(गेय)कालज्ञैः शुद्धकैशिकसंज्ञकः ।
सा सगौ सा सरी गा मा सा मी सा री सधा मधा ॥२४४॥

मा धा नी धा प मा गा मा पा पेत्यालाप ईरितः ।
स मरी सरिगा सा म ग म सा रि स सा द्विशः ॥२४५॥

मन्द्रषड्जचतुष्कं च रिरौ ममौ पपौ धमौ ।
धसौ धनी समन्द्राणां चतुष्कं रिगसा पधौ[१] ॥२४६॥

द्विशो धमौ चाथ पमौ पधा सां च चतुष्टयम् ।
धसंन्येषाऽऽक्षिप्तिका तु प्रोच्यते धरणीधृता ॥२४७॥

षट् सा नी धेति तत्राद्या, द्विः सा री मा च सा तथा ।
री गा मेति द्वितीया तु, तृतीया तु कलोच्यते ॥२४८॥

मा गा री पञ्चकं तानां, चतुर्थी सांचतुष्कतः ।
नी सा नी नी तु, पञ्चम्यां द्विर्मा गा री द्विर्मा द्विः पा ॥२४९॥

धा नी पा धा तथा माधाद्वयं षष्ठ्यथ, सप्तमी ।
सांचतुष्कं तथा नी धा पाद्वयेन प्रकीर्तिता ॥२५०॥

धा मा गा सा पाचतुष्कमष्टम्यां च स्वरावलि ॥२५१॥

१. [२]सा सा सा सा सा सा नी धा
[३]अ ० ग्नि ० ज्वा ० ला ०[४]

---

[१] A. पधा ।

[२] A. B. सा सा etc.

[३] The verbal structure is as follows :—
अग्निज्वाला*-शिखाशेखि ! मांसशोणितभोजिनि !
सर्वाहारिणि ! †निर्मांसि ! धर्ममुण्डे ! नमोऽस्तु ते ॥
* A. B. मिखाशेखि etc. † A. B. निर्मांसि ।

[४] A. B. and S. R. read मि and नि respectively and the next Kalā starts with गा ।

२. सा सा री मा सा री गा मा
शि खा ०.के ० शि ० ०

३. [1]मा गा री सा सा सा सा सा
मां ० स शो ० ० णि त

४. [2]सा सा सा सा नी सा नी नी
भो ० ० जि नि ० ० ०

५. मा मा गा री मा मा पा पा
स ० र्वा ० हा ० रि णि

६. धा नी पा [3]धा मा धा मा धा
नि ० र्मो ० से ० ० ०

७. [4]सा सा सा सा नी धा पा पा
च ० र्म मु ० ण्डे ० ०[5]

८. [6]धा मा गा सा पा पा पा पा
न मो ० ऽस्तु ते ० ० ०

शुद्धकैशिकसंज्ञोऽयं रागः सम्यङ् निरूपितः।
मध्यमग्रामसंबन्धी, शुद्धाः सप्तापि कीर्तिताः ॥२५२॥

॥ अथ भिन्नरागाः ॥

॥ अथ भिन्नकैशिकमध्यमः ॥१॥(८)

षड्जग्रामसमुद्भूतः षड्जमध्यमिकोद्भवः।
वर्णे संचारिणि स्फीतः काकलीस्वरराजितः ॥२५३॥

षड्जग्रहांशापन्यासो मध्यमन्यासभूषितः।
षड्जादिमूर्च्छनः पूर्णः प्रसन्नादिविभूषणः ॥२५४॥

वीररौद्राद्भुतरसो नक्षत्राधीशदैवतः।
वासरप्रथमे यामे नियोज्योऽयं मनीषिभिः ॥२५५॥

---

[1] S. R. सा etc.
[2] A. B. सा सा सा सा नी सा नी नी; S. R. सा सा सा सा नी सा नी नी।
[3] S. R. मा धा मा धा सा।
[4] A. B. सा सा सा सा etc.
[5] A. B. and S. R. न and the eihtth 'Kalā' begins with मो।
[6] S. R. धा नी गा मा etc.

गमकैर्मन्द्रभूयिष्ठैर्भिन्नकैशिकमध्यमः ।
सा नी धा सा मां ममौ मा मगयुगं च गा मा मा ॥२५६॥

धा धा नी धा स(म)युग्मं सा गा मा धा नि धा स सा ।
मा धा [1]मधौ गमौ सा गा सधौ धा मा स सा ग मा ॥२५७॥

धा नी धा सा सा मधौ च पमौ पञ्चममायुगम् ।
इत्यालापो वर्त्तनी च ससौ निधौ ससौ ममौ ॥२५८॥

मधौ मगौ मधौ निमौ मनी धानी मधौ ममौ ।
निधौ नी पञ्चकं सानां धधौ ममौ मसौ सगौ ॥२५९॥

मसौ समौ धधौ धधौ ममौ धमौ धमौ मधौ ।
संचतुष्कं धम धध पा मा पामेति कीर्तिता ॥२६०॥

द्विः सा नी धा द्विः सा द्विर्मा प्रथमा,-ऽथ द्वितीयिका ।
मा धा मा गा पुनर्मा धा नी मेति स्यात्, तृतीयिका ॥२६१॥

मा नी धा नी पुनर्माधा मीमे,-ऽथय चतुर्थिका ।
नी धा नी पञ्चकं सानां, पञ्चम्यां न्यादिसात्रयम् ॥२६२॥

नी धा पा पेति, धा नी मा पा गा री माद्वयं तथा ।
षष्ठी, सप्तमिका पा मात्रयं धा मी पमौ गुरू ॥२६३॥

सा धा धा नी माचतुष्कमष्टम्याक्षिप्तिका स्मृता ॥२६४॥

१. सा सा नी धा सा सा मा मा
[2]बृ ह दु द र वि क ट

२. मा धा मा गा मा धा नी मा
ग ० म न र ज स वि

३. मा नी धा नी मा धा नी [3]मा
भ ० क्तं ० गु वि पु ल

---

[1] B. गधौ ।

[2] The verbal structure is as follows :—

बृहदुदरविकटगमन-*रजगविभक्त गुविपुलनीनागम् ।
अरिदमन-†विमलोपनं गुरुमभितं विनायकं वन्दे ॥

* A. B. रजट, S. R. जरट । जटगविभक्त can also be a possible reading.

† A. रिपम ।

[3] S. R. मी ।

४. नी धा नी सां सां सां सां सां[1]
पी ० नां ० गं ० ० ० ०

५. [2]नी सां सां सां नी धा पा पा
अ रि द म न वि ग म

६. धा नी मा [3]पा गा री मा मा
लो ० च न सु र न मि

७. [4]पा मा मा मा धा नी पा मा
तं ० वि ना ० य कं ०

८. [5]धा सा धा नी मा मा मा मा
व ० ० न्दे ० ० ० ०

इत्येष कथितो रागो भिन्नकैशिकमध्यमः ॥२६५॥

॥ अथ भिन्नषड्जः ॥२॥ (१)

षड्जग्रामे भिन्नषड्जः षड्जोदीच्यवतीभवः ।
मध्यमस्वरविश्रामः पञ्चमर्षभवर्जितः ॥२६६॥

धैवतांशग्रहन्यासः प्रसन्नान्तविभूषणः ।
संचारिवर्णरुचिरः काकल्यन्तरराजितः ॥२६७॥

सार्वभौमोत्सवे गेय उत्तरायतमूर्च्छनः ।
[6]हेमन्ते प्रथमे यामे चतुराननदैवतः ॥२६८॥

भयानके च बीभत्से रसेऽस्यालाप ईर्यते ।
धा मा मगौ तथा सा सां सगौ मधौ धधौ निधौ ॥२६९॥

गमगा माद्वयं तद्वन्मगौ मधौ मगौ ससौ ।
समौ गसौ मगौ धानां त्रयं म नि स सांत्रयम् ॥२७०॥

निधौ निसौ निधौ धा च स नीमन्द्रस्य पञ्चकम् ।
गसौ गमौ धाद्वयं च निधौ मगौ द्विर्मा च धा ॥२७१॥

---

[1] A. B. नी धा नी सा सां सा सा सा, S. R. नी धा नी सा सा सा सा सा ।

[2] A. B. नी सा सा सा S R. मा मस सा सा etc.

[3] S. R. मा ।

[4] S. R. मा मा मा मा धा नी मा मा ।

[5] S. R. सा ।

[6] B. हिमन्ते ।

घनी नि नि गमौ गा च द्विर्मालापः प्रकीर्त्तितः ।
धा [1]धगौ मा मधौ मगौ द्विःसां समौ मधौ द्विर्धा ॥२७२॥

घनी घपौ माद्वयं च द्विरिदं खण्डमादिमम् ।
ममभा मधमा गसौ ससगा मधधा धधौ ॥२७३॥

धनी धमौ निधौ निसौ मन्द्रषड्जचतुष्ककम् ।
निसौ निगौ निसौ निनी द्विर्धा सधौ धनी धपौ ॥२७४॥

निगौ त्रिर्मा मगौ मधौ मगौ ससौ सगौ मधौ ।
द्विर्धा घनी घपौ मगौ माद्वयं वर्त्तनी त्वियम् ॥२७५॥

त्रिर्धा नी धा च पा मा गा प्रथमा,-ऽथ द्वितीयिका ।
[2]सागांमानी च त्रिर्धा नी, धा पा मा गा सगौ मधौ ॥२७६॥

गुरवः स्युस्तृतीयस्यां, पा धा (धा धा) नी गा च मा स्वराः ।
चतुर्धा तु चतुर्थ्यां स्यु,-र्मा नी धा नी च मन्द्रसा ॥२७७॥

चत्वारः पञ्चमी, षष्ठी नी गां सां नी च धात्रयम् ।
नीं अथो सप्तमी प्रोक्ता तृतीयावद,-थाष्टमी ॥
चतुर्थीवदियं स्याताऽऽक्षिप्तिका भिन्नषड्जगा ॥२७८॥

१. धा धा धा नी धा पा मा गा
[3]च ल ० त्त रं ० ० ग

२. [4]सा गा मा नी धा धा धा नी
भं ० ० गु रं ० ० अ

३. धा पा मा गा सा गा [5]मा धा
ने ० ० क रे ० ० णु

४. [6]धा धा नी गा मा मा मा मा
पि ० ०ञ्ज रं ० ० सु

---

[1] B. धमौ ।

[2] B. omits the second line of verse 276 and the first line of 277.

[3] The verbal structure is as follows :—
चलत्तरङ्गभङ्गुरमनेकरेणुपिञ्जरम् ।
सुरासुरैः सुसेवित पुनातु जाह्नवीजलम् ॥

[4] A. B.सा गा etc. ; S. R. सा गां मा नी धाधाधा नी ।

[5] S. R. साधा ।

[6] A. B. धा पा etc; S. R. धा धा नी गा मां मा मां मां ।

५. मा नी धा नी सां सां सां सां
रा ० ० मु रें: ० ० सु

६. [1]नीं गा सा नीं धां धां धां नीं
से ० ० वि तं ० ० पु

७. धा पा मा गा सा गा मा धा
ना ० ० तु जा ० ० ह्न

८. धा धा नी गा मा मा मा मा
यो ० ० ज लं ० ० ०

॥ अथ भिन्नतानः ॥३॥(१०)

मध्यमापञ्चमीजातिसंजातो भिन्नतानकः ।
मध्यमग्रामरागोऽयं पञ्चमांशग्रहत्तया ॥२७९॥

विहीन[2] ऋषभेणायो ऋषभाल्पतया युतः[3] ।
मध्यमस्वरविश्रामः स्वल्पमध्यमकोऽयवा ॥२८०॥

वर्णे संचारिणि ख्यातः प्रसन्नादिविभूषणः ।
हृष्यकामूर्च्छनोपेतः काकलीस्वरपेशलः ॥२८१॥

वासरप्रथमे यामे शृङ्गारे विनियुज्यते ।
निषाददुर्बलः प्रोक्तो भवानीपतिदैवतः ॥२८२॥

अत्र यद्गदितं तज्जैर्दुर्बलत्वं निषादिनः ।
तद्धेतुजातिजं चिन्त्यं रिदौर्बल्यं पुनर्बुधैः ॥२८३॥

पात्रयं धाद्वयं धानी धा पा पा धपमा ध मा ।
म गा म मा प सा गा मा सपगरिसपञ्चमाः ॥२८४॥

त्रिस्त्रिर्मधो पारिपा(:) स्युर्द्धिर्द्धिर्निपधमात्रयम् ।
इत्यालापो, वर्त्तनी च पनी सग पनी द्विशः ॥२८५॥

पनी संगं गसं गा मा पा धा पा म ग मा पपौ ।
धतुः पा संद्वयं धानी पाद्वयं सत्रयं गगौ ॥
पानी सा गां मा प धा पा मगां मामेति कीर्त्तिता ॥२८६॥

---

[1] A. B. नी गा सां नी धा धा धा नी; S R. नी गा सा नी धा धा धा नी ।
[2] A. विहीनो ।
[3] B. पुनः ।

पा नी सा गा पृथग् द्विद्विराद्या, सागां मधौ मगौ ।
संचतुष्कं द्वितीया तु, तृतीयाऽथ कलोच्यते ॥२८७॥

सा गा मा पा तथा धा पा द्विर्मगौ, तु चतुर्थिका ।
सा गा मा पञ्चकं पानां, धा पा द्विः सा [१]द्विः पा द्विर्धा ॥२८८॥

पञ्चमी, साद्वयं द्विःपा धापा मागेति तत्परा[२] ।
धा पा मपौ मगौ द्विःसां पा मा (मा पा) सप्तम्यथा,-ऽष्टमी ॥२८९॥

धा पा मगौ च माः पञ्चाक्षिप्तिका भिन्नतानगा[३] ॥२९०॥

१. पा पा नी नी सा सा गा गा
[४]ह र व र मु कु ट ०[५]

२. [६]सा गा [७]मध मग सां सां सां सां
ज टा ०० लु० लि तं ० ०

३. सा गा मा पा धा पा मग[८] मग
अ म र व धू ० कु० च०

४. सा गा मा पा पा पा पा पा
प रि म लि तं ० ० ०

५. धा पा सा [९]सा पा पा धा धा
ब हु वि ध कु सु म ०[१०]

---

१ A. B. द्विपा द्विधा ।

२ ३ A. B. add विसर्ग ।

४ The verbal structure is as follows :—
हरवरमुकुटजटालुलितं, अमरवधूकुचपरिमलितम् ।
बहुविधकुसुम-*रजोरुणित, †विजयति गगाविमलजलम् ॥
* A. B. रजसा रुणितं ।
† S. R. विजयते ।

५ A. B. and S. R. end the first Kalā with ज and begin the next with टा ।

६ A. B. and S. R. सा गां etc.

७ ८ S. R. मप ।

९ S. R. मा ।

१० A. B. and S. R. end the fifth Kalā with र and begin the sixth with ज and जो respectively.

६. सा सा पा पा धा पा मा गा
र जो ० इ णि तं ० ०

७. धा पा [1]सप मग [2]सां सां मां पां
वि ज य० ति० गं ० गा ०

८. धा पा मग मा मा मा मा मा
वि म ल० ज लं ० ० ०

॥ अथ भिन्नकैशिकः ॥४॥ (११)

कार्मारव्याश्च कैशिक्या उद्भूतो भिन्नकैशिकः ।
ग्रामे मध्यमसंज्ञे तु षड्जांशग्रहगोचरः ॥२९१॥

संपूर्णः पञ्चमन्यासः काकलीस्वरसंयुतः ।
चारुसंचारिवर्णाढ्यः प्रसन्नादिविभूषणः ॥२९२॥

भूरिमन्द्रस्वरयुतस्तथा षड्जादिमूर्च्छनः ।
नियोज्यः शिशिरे यामे वासरस्यादिमे पुनः ॥२९३॥

दानवीरेऽद्भुते रौद्रे रसे शंकरवल्लभः ।
सा सा धा सा निधौ सा नी त्रिः सां नी[3] मां च पां तथा ॥२९४॥

धा मां धा सा निधौ सा नी द्विःसां सां री स मां सरी ।
सा गा धा नी [4]स धा सा म पां मा पौ पाद्वयं तथा ॥२९५॥

इत्यालापः सदालापविज्ञेनात्र निरूपितः ।
द्विः सा धमौ धपौ मा री मपौ धा मा च धा पुनः ॥२९६॥

षण्मन्द्रसा रीद्वयं च सा री गा मा च सारिसा ।
सा गा धा पाद्वयं सा री मा पा धा सेति च द्वयम् ।
धा पा मा पात्रयं प्रोक्ता वर्तन्याक्षिप्तिका पुनः ॥२९७॥

सांचतुष्कं द्विर्द्वौ री मा(ऽऽ)धा, द्वितीया च पाद्वयम् ।
सा सा मा पेति, माद्वन्द्वं पमौ पाः पञ्च चापरा ॥२९८॥

---

[1] S. R. पम मपम सा गा मा पा ।
[2] A. B. सा मा मा पा ।
[3] B. री ।
[4] B. धसा ।

द्विर्मा सनी मन्द्रषड्जपञ्चकं तु चतुर्थिका ।
पञ्चमी साष्टकेन स्यात् नी गा सा सा च धा तथा ॥२९९॥

पामापेति तदन्या च, मा धा सा पा च धा च मा ।
रीमेति सप्तमी प्रोक्ता तृतीयावदथाष्टमी ॥३००॥

१. [1]सा सा सा सा री री मा मा
[2]इ ० ० न्द्र नी ० ० ल

२. [3]पा पा मा धा सा सा मा पा
स ० ० प्र भं ० ० म

३. [4]मा मा पम पा पा पा पा पा
दा ० ०० न्ध ग ० ० न्ध

४. मा मा [5]सनि सा सां सा सां सा
वा ० ०० सि तं ० ० ०

५. सा सा सा सा सा सा सा सा
ए ० ० क दं ० ० त

६. नी गा सा सा धा पा मा [6]पा
शो ० ० भि तं ० ० न

७. मा धा सा पा धा मा री मा
मा ० ० मि तं ० ० वि

८. मा मा पम पा पा पा पा पा
ना ० ०० य कं ० ० ०

भिन्नकैशिकरागोऽयमित्युक्त. पृथिवीभृता ॥३०१॥

---

1 S. R. सा सा सा सा etc.

2 The verbal structure is as follows :—
इन्द्रनीलसप्रभ *मदान्धगन्धवासितम् ।
एकदन्तशोभित नमामि त विनायकम् ॥
* A. B. मददानगन्ध etc.

3 S. R. मा मा पम पा पा पा पा पा ।

4 S. R. मा धा सा पा धा मा री सा ।

5 A. B. and S. R. सनि सा सा सा सा सा ।

6 A. B. पा ।

॥ अथ भिन्नपञ्चमः ॥५॥ (१२)

मध्यमग्रामसंभूतो भिन्नपञ्चक(म)संज्ञकः ।
मध्यमापञ्चमीजातिसजात. पञ्चमान्तकः ॥३०२॥

धैवताशग्रहश्चैव पौरवीमूर्च्छनान्वित. ।
क्वचिन्निषादसयुक्तः काकलीकलितः क्वचित् ॥३०३॥

सचारिवर्णविस्तीर्ण. प्रसन्नाद्येन भूषितः ।
भयानकाख्यबीभत्सरस. सौरिप्रियस्तथा ॥३०४॥

विनियुक्तः सूत्रधारप्रवेशोऽय मनीषिभिः ।
ग्रीष्मे प्राक् प्रहरे गेयो गानकालविचक्षणै. ॥
अत्र द्विश्रुतिकौ स्वल्पौ केषाचन मते मतौ ॥३०५॥

धा मा नी धा पनी धा मा पमा पा पा पगौ मगौ ।
पगौ मगौ [१]मगौ मागा रीत्रय माप पा धमा ॥३०६॥

नी धा धपौ धनी धा च धपौ धनी च धैवत. ।
धा धा मा धा स सा साम गरी गस गसौ गसौ ॥३०७॥

सा नी नी धंवतो धा नी पधधा धा धा च मात्रयम् ।
द्विसालापो, वर्त्तनी तु धससा गर्यभौ मनी ॥३०८॥

धधौ पधौ पनी धौ च खण्डमाद्यमिद द्विश. ।
धपौ धनी धपौ मनी रिगौ रिनी धधौ पमौ ॥३०९॥

गमौ पपौ रिरी माध ममौ धपौ धधौ पनी ।
धनी षड्जत्रय गारी रिरी निधौ धधौ पधौ ॥॥३१०॥

ममौ गमौ मगौ नो धा पनी धापा च मा च गा ।
मां पा (च)पामयो (पा अथो) ख्याताऽऽक्षिप्तिका तद्वयोच्यते ॥३११॥

री मा धपौ धाद्वय च धनी धपौ च मादिमा ।
धा सा नी धा सा[२] (पा) निधौ मा धा द्वितीया,ततः परा॥३१२॥

मा री मा धा धपौ धा [३]धपौ मा, नो धा पधौ नि (नी)धा ।
धाद्वय(त्रय) मा चतुर्थी, री मा धासा च नीं तथा ॥३१३॥

---

१ B omits second मगौ ।
२ A. B. add नी धा पा ।
३ A. B ध मेति ।

गां सां नी पञ्चमी, चैव धा पनी धात्रयं तु मा ।
री मा पष्ठी, सप्तमी धा पमौ गरी च मा धपौ ॥३१४॥

५। पधौ मा,-ऽष्टमी नी धा पधौ धनी च धा तथा ।
मा पादयेन संप्रोक्ताऽऽक्षिप्तिका भिन्नपञ्चमी[1] ॥
इत्यवं पूर्णतामाप्ताः पञ्चभिन्नाः समासतः ॥३१५॥

१. [2]री मा धप धा धा धनि धप मा
[3]वि म ल० श शि ख० ०० ण्ड
२ धा सा नी धा पा निध [4]मा मा
पा ० ० रि णं ०० ० ०
३. मा री मा धा धप धा धप मा
अ म र ग ण० न मि० त
४. नी धा पध [5]नी धा धा [6]धा मा
म भ व० भ यं ० ० ०
५. री मा धा [7]सा नी गा सा नी
यं ० दे ० त्रि लो ० क
६. धा पनि धा धा धा मा री मा
ना ०० थं ० गं ० गा ०
७. धा पम गरि [8]मा धप धा [9]पध मा
स रि० ०० सु स० लि ०० स

---

B. पञ्चमे ।
S. R. धा मा etc.
The verbal structure is as follows :—

विमलशशिखण्डधारिण-,ममरगणनमितभव*भयम् ।
वन्दे त्रिलोकनाथगङ्गा†सरित्सलिलपौत्रटम् ॥

* A. B. मभव भव । † A.B. सरि सलिल etc.

S. R. मां मा ।
S. R. धनि धा धा धा धा ।
B. मा धा ।
S. R. मा नी गा मा नी ।
A. B. and S. R. मा ।
S. R. धप मा ।

२८. नी धा मध धनि धा मा पा पा

धौ ० त० ज० ट ० ० ०

॥ अथ गौडरागाः ॥

॥ अथ गौडकैशिकमध्यमः ॥१॥ (१३)

षड्जग्रामसमुद्भूतः षड्जमध्यमसंज्ञया ।
जात्याऽयं जनितो रागो गौडकैशिकमध्यमः ॥३१६॥

षड्जग्रहांशापन्यासस्तया षड्जादिमूर्च्छनः ।
काकलिकलितः पूर्णो वर्णनारोहिणा युत. ॥३१७॥

प्रसन्नमध्यालंकारो नक्षत्राधीशदैवतः ।
सभयानकवीराख्यरसद्वयविवर्जितः ॥
गेयो मध्याह्नकाले तु रागविद्भिः प्रयोगतः ॥३१८॥

ससौ मधौ मसौ धासौ सधसाद्वितयं सरी ।
मा गा मानां चतुष्कं ध मध री ध चतुष्कनी ॥३१९॥

धनी ध मा ध मा गा ध [1]रि ध नी धसमा द्विश. ।
धधौ षड्जचतुष्क च ध स री स स धा ध स ॥३२०॥

सत्रयं री ग री मा प गसगा सधसद्वयम् ।
चतुष्कं मध्यमाना च धमधा रिचतुष्ककम् ॥३२१॥

धरिधा धनिधा धा स धपमा गा रितुर्यकम् ।
गरिगा गधसा साध धसधा धसरी धरी ॥३२२॥

ममधा रिरिधा नी ध निमधा मसधा रि धा ।
नि ध नी मधगा[2] गा ध रि ध नी धात्रयं सतः ॥३२३॥

धधौ ससौ सरी गा रि म रि गा स ग सा ध सा ।
स मध्यमचतुष्कं च धमधा रिचतुष्ककम् ॥३२४॥

धरी मध्यनि षट्कं तु धैवतानां पधौ पमौ ।
रिचतुष्कं गरी मा गं धसधा मसधा द्विशः ॥३२५॥

री ध री ममधा द्वी री धनिधा म ध नी मधा ।
मगधा रि ध नी धा ध सत्रयं धौ सतुर्यकम् ॥३२६॥

---

१ B. मा ध मा गा ध ।
२ B. मा ।

॥ अथ ध्वनिः ॥१०॥

तारस्थानविवर्जिता ग्रहविरत्यंशोक्तषड्जस्वरा
मध्यस्थानगमध्यमा धपपरित्यक्ता वितारस्वना ।
भाषाङ्गं ध्वनिनामधेयमवनीभारावतारान्तक-
श्रीतामेन्द्रकुलावतंसमणिना प्रोक्तं मतङ्गोक्तितः ॥२५॥

सा रि गा ग नि री गा स नि रि गा स ग गा म मा ।
ग रि सा स ग मा मा म स स सालाप ईरितः ॥२६॥

॥ इत्यालापः ॥

॥ अथ शशिका ॥ ११॥

गन्यासग्रहणा न (ग ?) तारगतिका षड्जस्वरांशाञ्चिता
मन्द्रस्थानकषड्जिका समरवा शेषस्वरा वैणिकैः ।
विज्ञेया प रि पा प पा प विलसत्साम्राज्यभागुक्तित.
स्वस्थानैः शशिका चतुर्भिरमितप्रीतिप्रदा श्रीपतेः ॥२७॥

॥ अथ छाया ॥१२॥

मांशग्रहन्यासविभूषितेयं छायेति भाषाङ्गतया प्रदिष्टा ।
प्रदीप्तमन्द्रर्षभनादवेद्या धपाधिका षड्जविवर्जिता च ॥२८॥

म मा ध पा पा म ध मा ग री गा, ध गा रि गा री म ग री प धा मा ।
ध पा म धा री ग रिं मा म गा पा, प घा म धा गा ग रि मी ध मा मा ॥२९॥

॥ इति चालापः ॥

॥ अथ नादान्तरी ॥१३॥

नादान्तरी सग्रहणावसाना दीप्तर्षभा स्वल्पनिनादगा च ।
भूयिष्ठनी षड्जपर्षपेता मन्द्रस्यमा राजवरप्रदिष्टा ॥३०॥

॥ अथ श्रीकण्ठी ॥१४॥

श्रीकण्ठिकामभाषिष्ट सर्वभाषाङ्गवेदिता ।
धांशग्रहान्ता बहुधा भिन्नषड्जभवा विगा ॥३१॥

॥ अथ तरङ्गिणी ॥१५॥

तरङ्गिणी भूमिभृतोपदिष्टा सतारधांशा मृदुगा च पूर्णा ।
समस्वरा न्यासकृतर्षभा च तदर्षभादित्वमिह प्रयाता ॥३२॥

॥ अथ बटुकी ॥१६॥

निगदिता बटुकी धरणीभृता मविरतिग्रहणा ऋषभोज्झिता ।
बहुलतारयुताल्पमृदुस्वना विरहितात्पिततातिदृतांशकैः ॥३३॥

॥ अथ गोल्ली ॥१७॥

रागराजिविदिहाम्यधादिमां गोल्लिकां मनिगतारनिस्वनाम् ।
धग्रहांशविरतिं रिभूयसीं तारमध्यमयुतां मतान्तरात् ॥३४॥

॥ अथ नागध्वनिः ॥१८॥

नागध्वनिं निगदति पृथिवीहृदीशो
वीरे(ऽ)प्ययं सविरतिग्रहमंशषड्जं ।
पान्तांशकं पुनरमुं घनकालगेयं
कश्चित्तथाङ्गमिह टक्कजवेगरञ्ज्याः ॥३५॥

॥ अथ नट्टा ॥१९॥

हिन्दोले पिञ्जरी या प्रथमत उदिता भाविकाङ्गं तदीयं
नट्टा सांशग्रहान्ता मृदुतरनिरवा सादिसाम्याप्तशोभा ।
दीप्तस्थाना प्रदीप्तप्रतिरवपथगा सादि(तार)स्वराढ्या
गेया दैने परार्धे प्रचुरगमक-[1]भाक् (ग्) युद्धवीरे(ऽ)द्भुते च ॥३६॥

कश्चिद्[2] विमध्यमामेतामाह साहसनिष्ठुरः ।
न तथा दृश्यते लोके न तदाद्रियते ततः ॥३७॥

स नि ध प म ग री गा मा प धा पा म गा री
स रि ग म प म गा री सा रि गा सा ग री सा ।
प म ग रि स नि सा गा मा प धा पा म गा री
प म ग म प स नी सा री स नी मा ग री सा ॥३८॥
॥ इत्यालाप ॥

क्रौञ्चासना पीतवस्त्रा मेघश्यामलरूपधृक् ॥३९॥

॥ अथ शुद्धा वराटी, वटुकी च ॥२०॥

सौवीरे गदितास्ति या प्रथमतः सौवीरिका भाविता
तस्या अंगमिमां वदन्ति सुधियः शुद्धां वराट्याह्वयां ।
षड्जांशग्रहणावसानकलितां तारस्यलोद्यां सदा[3]
योज्यां शान्तरसे दिनस्य विरतौ सप्तस्वरैरञ्चिताम् ॥४०॥

तामेव वटुकीमाह भूरिभिर्धनिपर्युता(म्) ।
धनदस्य प्रतिनिधिर्भूरिभिर्धनपर्युतः ॥४१॥

---

[1] B. युक् ।
[2] A. B. कश्चित् त्रिमध्यमा etc.
[3] A. तास्यलोद्यतसद्या B. तारस्यलोद्यसंध्य ।

स म नि ध म ग री सा सा ग री मा प धा नी
स ध नि ध प ध सा सा मा प गा री स री गा ।
स म नि ध रि ग नी धा सा स मा पा प सं सा
स नि ध प प स मा गा गा म नी धा ध सा सा ॥४२॥

॥ इत्यालापः ॥

॥ अथ लघुकामोदः ॥२१॥

कामानन्दविधायिनी लघुतरा कामोदिका कामद[1]-
श्रीकृष्णेन धना रतामुपगता पूर्णस्वरा मन्द्रगा ।
षड्जाद्यंशविरामसंगतियुता रामप्रमोदप्रदा
शृंगारे विनियोजिता सुगमका गेया निशाद्ये दले ॥४३॥

स सा प धा प मा ग गा म गा प मा ग मा ग री
स नी नि सा रि गा रि सा नि धा नि सा ग री स नी ।
प पा ध नी स नी स नी स पा म पा नि सा नि धा
प मा ग री ग मा प धा प मा ग री ग री स सा ॥४४॥

॥ इत्यालापः ॥

॥ अथ उत्पली ॥२२॥

उत्पलामलविलोचनो(ऽ)न्यधादुत्पलीं मविरतिं च धांशिकाम् ।
तारसग्रहयुतां निमन्द्रिकां पूर्णतामुपगतां रसे(ऽ)द्भुते ॥४५॥

॥ अथ गौडी ॥२३॥

या मतङ्गेन गदिता गौडी मालवकैशिके ।
तामिहाचष्ट भाषाङ्गं राजा रागरहस्यवित् ॥४६॥

कश्चिदवार्चष्ट तामेषोपांगसंगमुपेयुषीम्[1] ।
त्रिषड्जां मन्द्रतारस्थषड्जां सप्तमभूयसीम् ॥४७॥

हिन्दोलरागाश्रयणात् वसन्तोपाङ्गतां गताम् ।
केचिद्गमकसंयुक्तपञ्चमान्तामिहाभ्यधुः ॥४८॥

रसे वीरे शुचौ काले प्रियसभाषणे तथा ।
शृंगारे(ऽ)स्या अपि प्राह विनियोगं नराधिपः ॥४९॥

भाषानिरूपणे चास्या आलापो(ऽ)पि प्रदर्शितः ।
पीतवस्त्रा च गौराङ्गी गजेन्द्रवरवाहना ॥५०॥

---

[1] A. B add विसर्ग ।

॥अथ काम्बोजी ॥२४॥

धान्तग्रहांशा सनिपंश्च भूरिः काम्बोजिकेयं ककुभप्रसूता ।
भाषाङ्गकं षाडिकसंमतस्य काम्बोजिका तुल्यवरा च पूर्णा ॥५१॥

इमा त्रिषड्जां विधारि[१] निभूरिं हिन्दोलआमाहुरतद्विदो(ऽ)न्ये ।
शुचौ नियुक्तां करुणे रसे च संचारिवर्णप्रगुणां वदन्ति ॥५२॥

॥ अथ तोडी[२] ॥२५॥

मध्यमांशविरति प्रदोप्तसा कम्प्रपञ्चमयुतां च मंद्रगाम् ।
शुद्धषाडवभवां समस्वरां तोडिकां[३] शुचिरसां[४] घनागमे ॥५३॥

मा प पा प नि प मा ग पा ग पा, सा नि नी ध ध प मा ग रो स गा ।
री स गा रि नि स मा प पा म पा, पा म पा म प ग री स नी ध मा ॥५४॥

॥ इत्यालापः ॥

रक्ताङ्गी रक्तवस्त्रा च रक्ताशुवरवाहना ॥५५॥

॥ अथ अन्धाली ॥२६॥

शुद्धपंचमजा भाषा दाक्षिणात्या पुरोदिता ।
तदीयमंगमन्धाली तारधा गविवर्जिता ॥५६॥

पञ्चमांशग्रहन्यासा भूयिष्ठर्षभपञ्चमा ।
दिनादौ गीयते काले शुचौ शुचिरसोज्ज्वला ॥
धूम्रवर्णा कृष्णवस्त्रा शूकरं समुपाश्रिता ॥५७॥

॥ अथ आभीरी ॥२७॥

पञ्चमे कथिता भाषा(ऽऽ)भीरिकापि पुरा मया ।
तामेवात्र विजानीयाद्भाषाङ्गत्वेन रागवित् ॥५८॥

कश्चित्ककुभसंभूतामाभीरीमङ्गतां गता(म्) ।
त्रिधां तारपधां भूरिनिरिपां पूर्णमादिकाम् ॥५९॥

आभीरीवल्लभां गेयां रणमूर्द्धनि संजगौ ।
आलापस्तत्र तत्रापि दर्शितः पूर्वमेव हि ॥
नीलवस्त्रा च गौराङ्गी मयूरवरवाहना ॥६०॥

---

[१] A. विधारि ।
[२] B. तोडी ।
[३] A. तोडिका B. तोडिका ।
[४] A. रसा ।

॥ अथ वेगरञ्जी ॥२८॥

या मतङ्गेन मुनिना टक्के भाषा समीरिता ।
भाषाङ्गं सैव संपूर्णा विज्ञेया वेगरञ्जिका ॥६१॥

॥ अथ देवाला ॥२९॥

[1]लोकवर्त्मन्यवर्त्तित्वाद्देवाला न प्रकीर्त्तिता ।
मयूरवाहना श्यामा नीलवस्त्रेति केचन ॥६२॥

॥ अथ कैशिकी ॥३०॥

या पञ्चमे मतङ्गेन भाषा कैशिकिकोदिता ।
सैव भाषाङ्गमित्याह कालजिद्रागराजिवित् ॥
दोलारूढा सुगौराङ्गी गीतगानरता सदा ॥६३॥

॥ अथ भुञ्छी ॥३१॥

धान्तग्रहांशा मृदुमध्यमा च मतारिका येन विवर्जिता च ।
भूरिप्रयोगर्षभपञ्चमा च भुञ्छ्यत्र भाषाङ्गतया प्रदिष्टा ॥६४॥

ध ध नी ध ध नी नी सा नि नि गा नि नि गा ग गा ।
म ग री नि ध नी सा नी नि नि धा नि नि धा ध धा ॥६५॥

॥ इत्यालापः ॥

॥ अथ चैत्रवेलावली ॥३२॥

धान्तग्रहांशा मृदुगा च पूर्णा निगप्रदीप्ता विरतौ दिनस्य ।
प्रोक्ता सबीभत्सभयानकाख्ये वेलावली चित्रपदोपपेता(?) ॥६६॥

ा प नी सा स ग गा ग मा गा, नि सा नि नी नी स ध नी स नी सा ।
ो स री नी ध ध धा ध नी धा, नि पा ग मा गा रि स नी स नी धा ॥६७॥

॥ इत्यालापः ॥

॥ अथ भूपाली ॥३३॥

श्रवणाङ्गं सग्रहांशन्यासा ऋषभवर्जिता ।
भूपालपालकेनोक्ता भूपाली दैन्यलज्जयोः ॥६८॥

स स नी नि ध पा मा ग स ग मा ग म पा नि सा ।
स नि धा म ध नी नी स ग म धा म ध नी स सा ॥६९॥

॥ इत्यालापः ॥

[1] B. लोके ।

॥ अथापरा सैन्धवी ॥३४॥

याष्टिक. पुनराहि(हे)मां सैन्धवीसंज्ञया सुधीः ॥७०॥

॥ अथ श्रावणी ॥३५॥

या भिन्नषड्जे श्रवणा पुरोक्ता तदङ्गकं श्रावणिका प्रदिष्टा ।
धान्तग्रहांशा विरिपा दिनादौ याच्ञाकृतौ प्रेयसि गीयते च ॥७१॥

॥ अथ भैरवी ॥३६॥

उपाङ्गभणिता च तत्र भैरवी प्रतन्यते ।
नीलांशुका रक्तवर्णा शुकवाहनमाश्रिता ॥७२॥

॥ अथ डोम्बक्री ॥३७॥

या भिन्नषड्जे श्रवणा तवङ्गं डोम्बक्रिया भूपतिनोपदिष्टा ।
सांशग्रहा धैवतविभ्रमा च विवर्जिता धर्षभपञ्चमाभ्याम् ॥७३॥

हेमन्तकाले प्रथमे दिनार्द्धे प्रगीयते या करुणे रसे च ।
षड्जस्वरस्थानकृतावसानां तामेव [1]रत्नाकरकृज्जगाद ॥७४॥

स स री म प धा गा म स रि गा म रि गा स धा ।
नि धा मा प ध नी पा म म पा नी स ध नी प धा ॥७५॥

॥ इत्यालापः ॥

हेमवर्णा रक्तवस्त्रा नरयानमुपाश्रिता ॥७६॥

॥ अथ पुलिन्दिका (पुलिन्दी) ॥३८॥

पुलिन्दिका भिन्नषड्जे पूर्वमेवोदिता तु या ।
सैव भाषाङ्गमित्युक्ता सर्वभाषाङ्गवेदिना ॥७७॥

॥ अथ कालिका ॥३९॥

सतारगा निग्रहणांशिका च विपञ्चमा मन्द्रगपाविहीना ।
मृद्वल्पताद्येन विनाकृतेयं निरूपिता भूमिभृतात्र कालिका ॥७८॥

॥ अथ मालवा ॥४०॥

टक्ककैशिकभवा तु मालवा या तदङ्गमिह मालवा मता ।
संगताविह रिपौ सधौ तथा निग्रहांशविरतिर्नियोजिता ॥७९॥

वासरान्तिमदले शुचौ रसे रस्यते च करुणे पुरातनैः ।
धैवतांशविरतिर्भयानके कैश्चिदेव निपुणं विभाव्यते ॥८०॥

[1] cf. S. R. २. २. १०८

॥ अथ गान्धारगतिः ॥४१॥

गान्धारगतिका धांशग्रहान्ता तारगापि च ।
स्तम्भतीर्थिकिकामेतामेवाहुः कश्यपादयः ॥८१॥

धा धा नि धा नि धा नी स रि नि धा रि ग मा ग मा ।
ग म मा ग रि सा सा स नि धा धालाप ईरितः ॥८२॥

॥ अथ [1]चौहाली ॥४२॥

षड्जांशा मग्रहान्ता षहीना चाय[2] समस्वरा ।
धतारा मृदुमध्या च [3]चौहाली तारदेशयुक् ॥८३॥

॥ अथ गेरञ्जी ॥४३॥

षड्जांशग्रहणन्यासा मृदुधा दीप्तपञ्चमा ।
स्वल्पपा धरिभूयिष्ठा पूर्णा गेरञ्जिका मता ॥८४॥

॥ अथ सावेरी ॥४४॥

प्रोक्ता रगन्ती ककुभस्य भाषा सावेरिकाङ्गं कथिता तदीया ।
धांशा गतारा मृदुगाल्पषड्जा विपञ्चमा निग्रहणा निमोक्षा ॥
हास्ये स(च) शृङ्गाररसे नियोज्या शरत्प्रवेशे रिधभूयसी च ॥८५॥

मा धा धा नि ध गा ध नी नि रि रि नी री नी रि गा मा ग मा
मा द्विश्चैतदथो ग गा नि ध [4]नि नी धा धा म गा मा ग गा ।
री नी नी रि नि री ग मा ग रि म गा री नी ध नी नी ध नी
रागालापनकोविदेन निरिपालापः समालापितः ॥८६॥

॥ इति करुणालापः ॥

श्वेतवर्णा नीलवस्त्रा मृगवाहनमाश्रिता ॥८७॥

॥ अथाडीकामोदा[5] ॥४५॥

धांगाली भिन्नषड्जे प्रथमत उदिता या तदङ्गं मतेयं
कामोदाडीति पूर्वा गुरुवचनकृतो पग्रहांशावसाना ।
पूर्णा गान्धारतारा स्वरसमनिनदा मन्द्रमा काल [6]उक्ता
हेमन्ते [7]वासराद्ये दल इह खलु बीभत्ससंज्ञे रसे च ॥८८॥

---

[1,3] B. बौहाली ।
[2] A. B. ष हीन नाय ।
[4] A. ध ।
[5] B. कामोदी ।
[6] A. युक्ता ।
[7] B. वासरस्याद्ये ।

ध धा ध पा धा स रि गा ग सा री, ग री स नी धा प ध सा रि गं गा ।
ध पा ध पा मा म ग री स नी धा, स नी ध पा धा स रि गा ध धा धा ॥८९॥
॥ इत्यालापः ॥

क्रौञ्चयाना गौरदेहा नीलाम्बरविभूषिता ॥९०॥

॥ अथ नीलोत्पली ॥४६॥

नीलोत्पली गेन विवर्जिता च समस्वरा षड्जकृतावसाना ।
षड्जर्षभांशग्रहणा रसे स्याद्भूयानके मन्द्रितपञ्चमा च ॥९१॥

॥ अथ प्रथममञ्जरी ॥४७॥

भोगवर्द्धनिका भाषा ककुभे या पुरोदिता ।
तदङ्गमेषा षांशान्तग्रहा प्रथममञ्जरी ॥९२॥

गमन्द्रा रिधतारा च भूरिगान्धारमध्यमा ।
संपूर्णा शरदि प्रायः शृङ्गारे गीयते बुधैः ॥
लक्ष्येषु लक्ष्यते तज्ज्ञैर्मध्यमाशादि कुत्रचित् ॥९३॥

प पा ध नी पा ध प पा नि धा पा, नि सा नि सा नी[१] ग स री स री गा ।
स नी ध पा मा प ध नी स सा गा, रि गा स गा री रि नि नी ध पा पा ॥९४॥
॥ इत्यालापः ॥

दोलास्था गौरवर्णा च श्रुतिमण्डलवादिनी ॥९५॥

॥ अथ कर्णाटबङ्गालः ॥४८॥

या टक्कभाषा किल वेगरंजी[२] कर्णाटबंगाल इदं तदङ्गम् ।
षड्जावसानं ग्रहणांशमं स्यात् मुख्ये रसे स्याज्जलदागमे च ॥९६॥

गा गा प गा मा ध प पा नि धा मा, पा मा म मा गा ग स नी ध पा नी ।
री सा नि धा पा ध प मा म धा पा, म पा म गा गा ग म गा स सा सा ॥९७॥
॥ इत्यालापः ॥

॥ अथ मल्हारी ॥४९॥

विभाषान्धालिका या तु मल्हारी तत्समुद्भवः ।
पञ्चमांशग्रहन्यासा ममन्द्रा गस्वरोज्झिता ॥९८॥

गेया मुख्यरसे काले वर्षासु सुखवल्लभा ।
[३]शार्ङ्गदेवस्त्विमामाहोपाङ्गत्वे(ऽ)तिसमीपतः ॥९९॥

---

[१] B. री ।

[२] A. मेवरञ्जी B. एवरञ्जी ।

[३] cf S. R. 2.2.153

प प ध ध नि ध नी नी धा प धा सा रि सा री
ध ध ध ध ध प रि सा री सा नि धा सा रि सा नी ।
ध स नि ध म रि री सा री स नी धा प धा नी
स स नि ध प प धा नी पा ध नी पा ध धा पा ॥१००॥

॥ इत्यालापः ॥

नीलाभा रक्तवसना कपोतं[1] वाहनं श्रिता ॥१०१॥

॥ अथ शातवाहनी ॥५०॥

धैवतांशग्रहन्यासा निसंगा(निमन्द्रा)तारवर्जिता ।
संवादिसंगतियुता भाषाङ्गं शातवाहनी ॥१०२॥

॥ अथ दाक्षिणात्या ॥५१॥

भिन्नषड्जे मतङ्गेन दाक्षिणात्योदिता तु या ।
सैव भाषाङ्गमित्युक्ता श्रीकालसेनभूभृता ॥१०३॥

॥ अथ लघुदाक्षिणात्या ॥५२॥

निमन्द्रर्षभतारा स्यात् ममन्द्रा धनिभूयसी ।
पञ्चमांशग्रहन्यासा लघ्वी स्याद् दाक्षिणात्यिका ॥१०४॥

॥ अथ तारावली ॥५३॥

तारावली पग्रहांशावसाना तारषड्जिका ।
संपूर्णा मृदुगान्धारा शृङ्गारे ताडिता मता ॥१०५॥

॥ अथ कालिंगी ॥५४॥

या भिन्नषड्जे कालिङ्गी याष्टिकेन पुरोदिता ।
सैव भाषाङ्गममला परिणाममुपेयुषी ॥१०६॥

॥ अथ गान्धारसिन्धुः ॥५५॥

न लक्षितात्र गान्धारसिंधुर्लक्ष्येष्वदर्शनात् ॥१०७॥

॥ अथ कर्णाटी ॥५६॥

गान्धारतारा मृदुमा धैवतांशग्रहान्तिमा ।
समशेषस्वरा पूर्णा कर्णाटी वर्णिता भये ॥१०८॥

॥ अथ सौराष्ट्री ॥५७॥

नीलाङ्गी कृष्णवसना गजेन्द्रवरवाहना ॥१०९॥

---

[1] B. कपोत ।

गनिधप्रचुरा हीना रिपाभ्यां मन्द्रधैवता ।
षड्जांशग्रहणन्यासा सौराष्ट्री राष्ट्रवर्द्धिनी ॥११०॥

॥ अथ रगन्ती ॥५८॥

ककुभे या रगन्त्युक्ता भाषा सैवाङ्गतामिता ॥१११॥

॥ अथ भम्माणी ॥५९॥

त्रिपा सतारा[1] मृदुमस्वरा च हीना निगाभ्यां धगताल्पता च ।
भम्माणिका याष्टिकसम्मतेन भाषाङ्गमुक्ता वसुधाधिपेन ॥११२॥

॥ अथ सिंहलीकामोदा ॥६०॥

सपूर्णा च समस्वरा धविरतिप्रारम्भगांशस्वरा
गे दीप्ता मृदुमध्यमा निगदिता कामोदिका सिंहली ।

धा धा नी ध ध नी ध पा म ग रि सा नी धा नि धा गा ग पा
मा गा गा रि स नी नि धा ध रि रि सा नी धा नि नी धा नि धा ॥११३॥

॥ अथ रामकृति ॥६१॥

कोलाहला टक्कभवात्र भाषा पूर्वोदिता रामकृतिस्तदङ्गम् ।
सान्ता ग्रहांशीकृतमध्यमा च विवर्जिता पञ्चमनिस्वनेन ॥११४॥
दोलाहला च गौराङ्गी वीणादण्डविभूषिता ॥११५॥

॥ अथ कछेली ॥६२॥

शार्दूलमुनिना भिन्नषड्जे भाषा विभाषिका(ता) ।
सैव भाषाङ्गमित्युक्ता कछेली कृष्णभूभुजा ॥११६॥

॥ अथ कुरजी ॥६३॥

त्रिपा समन्द्रा विधगा भूरिपञ्चमषड्जिका ।
कुरञ्जी स्वरसपूर्णा भाषाङ्गमिह नोदिता ॥११७॥

॥ अथ शाम्बरी ॥६४॥

रगन्ती काकुभी तज्जा शाम्बरी मन्द्रमध्यमा ।
मध्यमांशग्रहा न्यासधैवता[2] स्वल्पषड्जिका ॥
तारगा करणे गेया पहीना शरदागमे ॥११८॥

---

[1] A B मराता ।
[2] A B मध्यमांशग्रहन्यासा धैवता etc

॥ अथ बागाली ॥६५॥

बांगाली भिन्नषड्जे या मतगस्य मते स्थिता ।
तस्या भाषाङ्गतामाह सर्वाङ्गपरिपूरित ॥११९॥

॥ अथ निरालम्बा ॥६६॥

निरालम्बा तु सपूर्णा माशान्ता पञ्चमग्रहा ।
गमन्द्रा तारया चैव शृगारे ताडिता मता ॥१२०॥

॥ अथ सौवीरी ॥६७॥

सौवीरे याष्टिकेनोक्ता सौवीरी यात्र भाषिका ।
सैव भाषाङ्गमित्युक्ता भाषामर्मविदा वरं [१] ॥१२१॥

एव षट्षष्टिसख्याका भाषा अत्र मयोदिता. ।
काश्चिन्नोदाहृता काश्चिल्लक्षिता नाप्रसिद्धित ॥१२२॥

॥ इति भाषाङ्गानि ॥

सत्यभावैकमिष्टेन षड्भाषाचक्रवर्त्तिना ।
भाषागाना कृते(त)लक्ष्म लक्ष्मवेदिमुदे मुदा ॥१२३॥

इति श्रीराजाधिराजश्रीकालसेनेन विरचिते सगीतराजे(गीत)रत्नकोषे
(रागोल्लासे) भाषाङ्गपरीक्षण तृतीयम् ॥

---

[१] A B भाषामर्मविदा वराम् ।

# क्रियाङ्गं नाम चतुर्थं परीक्षणम्

यस्य ध्यानक्रियायां स्युरंगभूताः पराः क्रियाः ।
अक्रियाय नमस्तस्मै क्रियामार्गप्रवर्तिने ॥१॥

॥ अथ पूर्वरामक्रिया ॥१॥

मांशमग्रहविराजपेशला पूर्णसप्तकशरीरशालिनी ।
सादिकस्वरलघुप्रचारिणी[1] पूर्वरामकृतिरीशतोषिणी ॥२॥

मा मा सा धा प मा पा ध प ध स रि रि सा री रि सा री स री मा
री सा धा री स धा सा रि म रि स ध स सा री स धा पा म पा धा ।
मा री मा मा ध पा मा रि रि म रि ध प धा पा म री मा रि सा सा
री सा धा धा नि धा पा म रि म रि स स री सा ध धा नी ध पा मा ॥३॥

॥ इत्यालापः ॥

॥ अथ रामक्रिया ॥२॥

आपञ्चमं तारमृदुप्रचारा साशग्रहान्ता रिसभूरिनादा ।
स्याद्विप्रलम्भे करुणे रसे च रामक्रिया वासरपश्चिमार्द्धे ॥४॥

स नी सा गा मा पा ध प म ध प मा गा म ग ध पा
स नी धा नी धा[2] पा म म ग प म पा मा ग रि नि पा ।
ग मा पा मा पा नी ध प म प ध पा मा ग स नि धा
ध धा नी धा पा मा म प म प नि धा पा म ग रि सा ॥५॥

॥ इत्यालापः ॥

॥ अथ गौडकृतिः ॥३॥

[3]गौडक्रिया सग्रहणाशमोक्षा रिधोज्झिता पञ्चममन्द्रिता च ।
मध्यप्रदीप्ता मपभूरिभावा वीरे(ऽ)द्भुते चैव रसे प्रदिष्टा ॥६॥

स स प प म प मा पा पा प नी पा प मा गा
म ग म स नि प नी सा पा नि सा सा ग मा पा ।
स प स प म प मा पा मा प नी धा प मा गा
म म प नि म प मा गा मा प मा गा ग री सा ॥७॥

॥ इत्यालापः ॥

---

[1] B. प्रसारिणी ।
[2] B. omits धा ।
[3] A. गौंड ।

गौराङ्गी वीणया सवता दोलारूढा ह्युपाश्रिता ॥८॥

॥ अथ देवकृतिः ॥४॥

समस्वरा धग्रहणा निमन्द्रा[1] न्यासांशषड्जा विरिया मतारा ।
देवक्रिया वीररसे प्रदिष्टा तथाद्भुते कृष्णमहीधवेन ॥९॥

ध नि ध स ग म सा नी मा ग सा गा म धा नी
ध नि नि ध स ग मा गा सा नि धा नी म गा सा ।
ग स ग स स ग मा धा नी ध नी सा ग मा गा
स स नि ध ग म गा मा धा नि धा नी स गा मा ॥१०॥

॥ इत्यालापः ॥

मेघाभा रक्तवसना च गरुडोपरि संस्थिता ॥११॥

॥ अथ इन्द्रक्री ॥५॥

धैवतांशग्रहेन्द्रक्री रिन्यासा षड्जवर्जिता ।
रसे नियुक्ता मुनिभिः सबीभत्से भयानके ॥१२॥

॥ अथ भावकृतिनागकृती ॥६-७॥

क्रियाङ्गद्वितयं भावकृतिर्नागकृतिस्तथा ।
लक्ष्यमार्गाप्रसिद्धत्वान्न सम्यगिह लक्षितम् ॥१३॥

॥ अथ विपायक्री ॥८॥

[2]स्यात्त्रिनेत्रकृतेरंगमल्पमध्यमनिस्वना ।
विपायक्री कश्चिदेतामुपाङ्गमित्यकीर्तयत् ॥१४॥

॥ अथ त्रिनेत्रक्री ॥९॥

त्रिनेत्रक्री धैवतांशग्रहन्यासा समस्वरा ।
सतारा स्वल्पषड्जा च भयानकरसाश्रया ॥१५॥

॥ अथ कुमुदक्रीशिवक्रियौ ॥१०-११॥

न लक्षिति(ते ऽ)प्रसिद्धत्वात् कुमुदक्रीशिवक्रियौ ॥१६॥

---

[1] A. B. निमन्द्री ।
[2] B. स्यान्त्रि ।

॥ अथौजक्री: ॥१२॥

सग्रहान्ता मन्द्रमध्या ऋषभेण विवर्जिता ।
स्यात् स्वभावकृतेरङ्गमोजक्री कम्प्रपञ्चमा ॥१७॥

॥ अथ स्वभावक्री(ः) ॥१३॥

सग्रहांशविरामा स्यान्निमन्द्रा धपवर्जिता ।
भूरिमन्द्रस्वरा वीरे स्यात् स्वभावकृतिस्त्वियम् ॥
इमां कश्चिदुपाङ्गत्वेनोक्तवान् रागतत्त्ववित् ॥१८॥

॥ अथ मरुत्कृतिः ॥१४॥

षड्जांशग्रहणन्यासा धैवतर्षभवर्जिता ।
शुद्धभैरवजा धीरैं धीरे मरुत्कृतिः स्मृता ॥१९॥

॥ अथ धन्यक्री ॥१५॥

अङ्गं देवकृतेः प्रोक्तं धन्यक्री केनचित्त्विह ।
लक्ष्ये (ऽ) प्रसिद्धिगा[१] तेन लक्षणं न समीरितम् ॥२०॥

॥ इति पञ्चदशक्रियाङ्गानि ॥

प्रवर्त्तन्ते क्रिया (ः) सागा यत्प्रसादान्महीतले ।
तेन राज्ञा क्रियाङ्गानि लक्षितानि समासतः ॥२१॥

बृहद्देशीविदा राज्ञा देशीरागाः समासतः ।
युगवेदेन्दुरूपेण (१४४) सलक्ष्मणा निरूपिताः ॥२२॥

ग्रहादन्यस्वरे न्यासो य उक्तः पूर्वसूरिभिः ।
रागेषु केषुचित्तत्र रक्तियुक्तिर्दवीयसी ॥२३॥

अत श्रीकालसेनोऽत्र[२] रक्तियुक्तिविधानवित् ।
देशीरागेषु वदति न्यसनं स्वग्रहस्वरे ॥२४॥

प्रातर्वसन्तकालीना मध्याह्ने ग्रीष्मकालिकाः ।
अपराह्ने तथा गेया रागा वर्षासु ये मताः ॥२५॥

रात्रेस्तु प्रथमे यामे गीयन्ते शिशिरे तु ये ।
शरद्गेया मध्यरात्रे परात्रे तथैव च ॥२६॥

---

[१] A. B. लक्ष्ये (ऽ) प्रसिद्धितो तेन ।

[२] B. श्रीकालसेनोक्त ।

हेमन्तकाले ये गेया गातव्यास्ते यथातयम्[१] ।
एवं तत्तदृतुभवा विभज्य दिवसे(ऽ)पि च ॥

यथाकालं प्रगातव्या(:)कृष्णकर्णोक्तितो बुधैः ॥२७॥

रागो यस्य समुल्लसत्यनुदिनं श्रीशम्भुपादाम्बुजे
यस्मिन्नुल्लसति क्षमाधवसुता-चेतो(ऽ)नुरागो(ऽ)न्वहम् ।
धत्ते यच्चरणो(ऽ)रिमूर्द्धसुलसत्सत्पद्मरागास्पदं
रागोल्लास इह क्षमाधिपतिना तेनायमुल्लासितः ॥२८॥

इति श्रीजगदीशयनदेवनिजगणेन जगदीश्वरीकामेश्वरीचरणकिंकरेण श्रीकामाक्षागिरि-
भुना अभ्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्द्धितयशो-
ण वाटिकाचलग्रहणजनितकीर्तिपराजिताचलनायकेन संगमतीरदुर्गोद्धरणोद्धृतसकलमण्डला-
श्वरेण दमनपुरविध्वंसनबंदीकृतयवनीनिचयेन महिपमेरुजयाजेयविभवेन शाकंभरीरमणपरि-
त्नपरिप्राप्तशाकंभरीपरितोषितशाकंभरीप्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरिवारि-
जनगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकादूरोद्धूलनर्धापितामहोरगपुरेण श्रीवनदेव-
ामिप्रसादरचनापरपरमेश्वरेण त्र्यंबकेश्वरसन्निधिकीर्त्तिस्तंभोन्नतजयस्तम्भेन श्रीब्रह्मगिरि-
म-[२]स्वर्गतायथार्थीकरणरचितचाल्पयेन श्रीकामाक्षागिरिनवीननिर्मितपराजितसुमेरुणा
ामहिपाचलोपरिश्रीहरिचरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवन-
लाकालकालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराज-
ोराजमानमृगांकतामरराजेन्द्रनंदनेन महानाम्नी(राज्ञी)सौभाग्यवतीश्रीजसमांबिकाहृदयनंदनेन
कलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंसश्रीमहाराज्ञीश्रीकर्मवतीश्रीलयुमादेवीहृदयाधि-
ष्ठिन श्रीमहाराजाधिराजश्रीकालसेनेन महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां
गीतमीमांसायां गीतरत्नकोशे रागोल्लासे क्रियांगपरीक्षणं चतुर्थं समाप्तम् ॥

(रागोल्लासश्च समाप्ति समगात्)[३]

---

[१] A. तथायथ ।
[२] B. मूर्गता ।
[३] Reference is invited to Appendix II at the end of the text for critical notes and parallel references pertaining to Rāgollāsa.

# तृतीयः प्रकीर्णकोल्लासः

## वाग्गेयकारो नाम प्रथमं परीक्षणम्

यस्य लोकस्य महिमा प्रकीर्ण इव दृश्यते ।
तं नुमो नृत्यबन्धेषु विप्रकीर्णजटं हरम् ॥१॥

अथ वाग्गेयकारादिलक्षणं लक्ष्मविन्मुदे ।
इतस्ततो विप्रकीर्णं प्रकीर्णं विप्ररागवित् ॥२॥

[1]ऐन्द्रादिव्याकृतिज्ञो यतिललितपदच्छन्दसां संगतिज्ञो-
ऽलंकारन्यासदक्षो नवनवरचनाधातुनिर्माणवेदी ।
भेदी तूर्यत्रयस्य प्रविकसदतुलं प्रातिभज्ञानशाली
वाचामाचारसंपद्विजितवरकविप्राज्ञसाम्राज्यसम्पत् ॥३॥[2]

उच्छिष्टोचितप्रबन्धादुपरतधिषणो मूर्च्छनाग्रामजाग्रत्-
तानालंकारवर्णाद्यखिल उपमतिर्नाम कोशेष्वधीति(ती) ।
मेधावी भव्यमूर्ति-[3]विगतगदचयः सर्वशास्त्रप्रवीणो
मुक्तेर्ष्यारोषदोषः परहृद(य)विदामग्रणी रञ्जकश्च ॥४॥

नृत्तज्ञो देशभाषापरिचयचतुरो धातुमात्वोः समत्वे
योक्ता वक्ता सभायां रसविशदमतिः कत्थते नात्मनेत्रः ।
अन्योक्तत्यागनिष्ठः कलसकलकलाकोविदः श्लक्ष्णभाषी
नानादेशस्थितिज्ञः पदविशदमतिर्ग्राम-[4]रागाद्यभिज्ञः ॥५॥

सार्धस्निग्धान्तरात्मोचित-रुचि-[5]रुचितप्रायवाक्यप्रदाक्ष्य-
चातुर्याढ्यप्रबन्धे दृतविशदतरप्रायनिर्माणकारी ।
त्रिस्थानप्रौढितं च स्फुटगमकयुतालप्तिचातुर्यधुर्यो
राज्ञा वाग्गेयकारः कथित इह परं तद्विदामार्यवर्यः ॥६॥

[1] B. ऐन्द्रव्याकृतिज्ञो ।

[2] cf. S. R. 3. 2-9 for 3-8 above.

[3] B. विगत etc.

[4] A. राज्ञा etc.

[5] B. रचित ।

एभिर्युक्तो [1]गुणौघैर्वरमिह गदितो मध्यमो मातुकर्म-
ण्यप्रौढे धातुमातृ अवर्णचरतरे संविद(ा)त्तप्रगल्भः ।
कर्तुं युक्तान् प्रबन्धानधम इति तथा मन्दधीर्धातुकर्म-
ण्युत्कृष्टो मातुकर्मण्यपि समरभुवां सूत्रधारेण राज्ञा ॥७॥

वदति यस्तुकवि गुणपूजितं तदवरं खलु वर्णकविं नृपः ।
तदनु कुट्टिकारं वरधातुषु प्रसभमातुकरं पुरुषाधमम् ॥८॥

॥ इति वाग्गेयकारः ॥

[2]गान्धर्वो मार्गदेशीविदिह निगदितः केवलो मार्गवेत्ता
विज्ञातव्यः स्वरादिः पुनरिह स तथा वर्तनीयः स्वरादिम्(दिः) ।
विज्ञातालापकर्मण्यखिलगुणयुतालप्तिनिर्माणदक्षो-
ऽक्षोभ्यो राजेन्द्रसंसद्यनवरतपराभ्यासतो वश्यकण्ठः ॥९॥

व्यक्षप्राज्यप्रसादाधिगतगुणगणाविष्टशारीरशाली
शालीनप्रोज्झितान्तःकरणपटुतरानेककाकुप्रवीणः ।
रागोपाङ्गक्रियाङ्गाद्यविकलभजनस्फीतभाषाङ्गवेत्ता
जेता प्रावाटुकानामविकलवहनीमार्गगानाप्तमार्गः ॥१०॥

ताले कामप्रवीणोभयगतिचतुरो विभ्रमः सर्वकालं
शास्त्रे सत्संप्रदायः सुघटपटुवरो वस्तुनिर्माणवेदी ।
स्फूर्जन्निर्जवनापटु(ः)पटुधियामग्रेसरः पेशलो
गीतोद्ग्राहविधौ विमुक्तिपदवीपण्डामितः सिद्धिमान् ॥११॥

न्यूनाधिक्यगसावधानधिषणः स्फूर्जद्गहो(हू)ल्लासवान्
प्रोदञ्चद्भुजनो(ऽ) प्रयत्नगमकस्थानत्रयं व्याप्तिमान् ।
[3]शुद्धच्छायालगज्ञः श्रुतिविशदमतिः स्थानसंस्थस्वरज्ञो
गीतज्ञैः शस्यतेऽयं नृपसदसि सदा गायनग्रामनेता ॥१२॥

रम्यविश्रान्तिनिर्वाहशाली सुघरणान्वितः ।
सावधानोऽभियोगी च क्रियावानुत्तमः स्मृतः ॥१३॥

निर्दोषः कैश्चिदेषां रहिततनुरयं सद्गुणानां समूहात्
संप्रोक्तो मध्यमोऽथाधम इह गदितो गायनो दोषयुक्तः ।
संप्रोक्तः पञ्चधाऽयं क्षितिपतिविभुना रञ्जको भावकोऽथो
शिक्षाकारोऽनुकारो रसिक इति तथा लक्षणं प्रोच्यतेऽथ ॥१४॥

[1] B. गुणोघं etc.
[2] cf. S. R. 3. 12-24 for 9-17 verses above.
[3] The metre is changed from the third foot.

स प्रोक्तो रञ्जको य सहृदयहृदय रञ्जयत्पार्श्वतोऽन्यो
विख्यातो भावको योऽतिशयमभिदधात्यत्र गीतप्रपञ्चे ।
शिक्षाकारोऽनुशिष्टो धरणिधवभृतऽन्यूनशिक्षाविदग्ध
स स्यादेवानुकार परकृतरचनाया प्रयस्यानुकारात् ॥१५॥

विज्ञातव्यो रसावेशित इह रसिक स विधाभूयमिष्ट-
श्चैकिल्लो वृन्दगाता यमलक इति तेष्वेक एवात्र गाता ।
विज्ञेय पूर्वमुक्त पर इह गदितो वृन्दगो योऽत्र गायेद्
यो गायेत् स द्वितीयो यमलक इति स प्रोच्यते भूमिभर्त्रा ॥१६।

तारुण्यप्रतिमप्रपञ्चचतुरा माधुर्यधुर्योक्तयो
लावण्यामृतदुग्धसागरकलारूपौघरत्नाकरा ।
नानाभावकलाकलापकलिता हृद्या विदग्धप्रिया
गायिन्यो गदिता हि गायनवरैस्तुल्या नृपेणामुना ॥१७॥

॥ इति गायिन्य ॥

[1]उद्घुष्ट [2]कपिल (विकल ) काकी सूत्कारी सानुनासिक ।
[3]उद्घडो(ऽ)पस्वरो(ऽ)व्यक्तो विरसो [4]विनिमीलन ॥१८॥

तुम्बकी [5]बोम्बको वक्री स्थानभ्रष्टो(ऽ)व्यवस्थित ।
प्रसारो [6]करभो भीत सदष्टोऽनवधानक ॥१९॥

कम्पित शङ्कितो मिश्र करालो च वितालक ।
पञ्चविंशतिरित्येते गायना निन्दिता स्मृता ॥२०॥

उद्घुष्टो विरसो घोषाद् [7]गानतो गायन( )स्मृत ।
॥ इति उद्घुष्ट ॥१॥

न्यूनाधिकश्रुती(रै) गायन् स्वरान् कपिल(विकल) ईरित ॥२१॥
॥ इति कपिल (विकल) ॥२॥

---

[1] S R उद्घृष्ट । cf S R 3 25 38 for 18 34 above
[2] S R विकल ।
[3] S R उद्धड ।
[4] A विनिमीलित । S R विनिमीलक ।
[5] S R झोम्बक ।
[6] B ककुभो ।
[7] B ज्ञानतो ।

काकवत्[1] क्रूरनिर्घोषः काकी गायन उच्यते ॥२२॥

॥ इति काकी ॥३॥

मुहुर्मुहुः सूत्कृतानि गायन्यः(नः) कुरुते स तु ।
सूत्कारी, च नासिकया गायन्नुक्तोऽनुनासिकः ॥२३॥

॥ इति सूत्कारी सानुनासिकश्च ॥४, ५॥

छागवद् वहनिं कुर्वन्नुद्घडो गायनो मतः ।

॥ इति उद्घडः ॥६॥

अपस्वरस्तु स ज्ञेयो यो वर्ज्यस्वरगायनः ॥२४॥

॥ इति अपस्वरः ॥७॥

गद्गदध्वनिरव्यक्तवर्णो(ऽ)व्यक्त इतीरितः ।

॥ इति अव्यक्तः ॥८॥

विरसो नीरसं गायन्, निमीलयति लोचने ॥२५॥

गायन् निमीलकः प्रोक्तः, तुम्बकी स तु कथ्यते ।
यस्तुम्बकवदुत्फुल्लगलो गायति गायनः ॥२६॥

॥ इति विरसः, निमीलकः, तुम्बकी च ॥९, १०, ११ ॥

योम्यकः स तु विज्ञेयो यो गायति विनिन्दितः ।
सि(शि)रालभाल-वदनकन्धरं(रो), वक्रिते गले ॥२७॥

गायन् वक्रीति कथितः, प्राप्तुं यः स्थानकत्रयम् ।
न शक्तोऽस्ति स विज्ञेयः स्थानभ्रष्टो मनीषिभिः ॥२८॥

॥ इति योम्यकः, वक्री, स्थानभ्रष्टश्च ॥ १२, १३, १४ ॥

सोऽव्यवस्थित इत्युक्तः स्थानकैरव्यवस्थितैः ।
यो गायति, प्रसारी तु स स्पन्दशरीरयोः ॥२९॥

प्रसारणात् परिज्ञेयः, करभः स तु कथ्यते ।
गायत्यूर्ध्वीकृतगलो यः पुमान् करभो यथा ॥३०॥

॥ इति अव्यवस्थितः, प्रसारी, करभश्च ॥ १५, १६, १७ ॥

भयान्वितः स्मृतो भीतः, संदष्टः स तु कथ्यते ।
संदश्य दशनान् यो वै गायत्यनवधानकः ॥३१॥

---

[1] B. काक (omits वत्) ।

स्यायवागादिषु प्रायोऽ-[१]वधानेन विवर्जितः ।

। इति भीतः, संदष्टः, अनवधानकश्च ॥ १८,१९,२० ॥

कम्पितः कम्पनाद्युक्तो मिथः शब्दशरीरयोः ॥३२॥

॥ इति कम्पितः ॥२१॥

यः सशङ्करयो[२] गायेत् त्वरया स तु शङ्कितः ।

॥ इति शङ्कितः ॥२२॥

भूरिशो मिश्रयन्युक्तो(क्तः) शुद्धच्छायालगादिकान् ।
रागान्, मिश्रकसंज्ञोऽयं कालसेनेन भूभुजा ॥३३॥

॥ इति मिश्रकः ॥२३॥

कराली विकृताकारप्रसारितमुखो मतः ॥

॥ इति कराली ॥२४॥

गेयं तालच्युतं गायन् वितालः सुद्धिरीरितः ॥३४॥

॥ इति वितालः ॥२५॥

गायकानामिमे दोषा लक्षिताः पञ्चविंशतिः ।
गेयस्य कण्ठसाध्यत्वात् तद्विशुध्यर्थमौषधम् ॥३५॥

प्रोच्यते गायकप्रीत्यै सर्वभूतानुकम्पिना ।
अपथ्यवर्जनाद् दोषा न स्युः प्रायो नृणां यतः ॥३६॥

अतस्तद्वर्जनं पूर्वमुच्यतेऽन्यत्ततोऽपि च ।
गायनो [३]वर्जयेत् [४]क्षारमन्नं पर्युषितं तथा ॥३७॥

[५]आरनालं यवान्नं च कटुकं चापि यद्भवेत् ।
शुष्कपार्श्वमिलावच्च अत्र माहिषक्षीरमादितः ॥३८॥

श्लेष्मकारी च यत्प्रायस्तदश्नीयान्न कर्हिचित् ।
प्रत्यूषे मधुना साकं चूर्णमाहौषधं लिहेत् ॥३९॥

रात्रौ सलवणं चापि भक्षयेत् त्रिफलां सुधीः ।
हृद्यत्कण्ठकरं रात्रौ खादिरं चूर्णमीरितम् ॥४०॥

---

[१] B. -ऽनवधानेन ।
[२] A. B. सशङ्करवयो ।
[३] B. वर्जेत् ।
[४] B. क्षार चान्न ।
[५] A. आनराल ।

नागवल्लीदलैः साकं साकं[1] वा खादिरंदलैः ।
मुस्तापौनर्णवैः पत्रैः क्रमुकैर्मिश्रितीकृता[2] ॥
भक्षिता कुरुते कण्ठं किन्नरीगणगर्वदम् ॥४१॥

तित्तिरास्तैलसंभृष्टा भक्षिता गायकं नरम् ।
कुर्वन्त्यभ्यासतो नूनं वंशवीणानिनादितम् ॥४२॥

क्षीरवृक्षसटीमार्गी (मार्द्री ?)[3] गुडुचीवर्बरैस्तथा ।
कुशकाशैः श्रितं तोयं कण्ठमाधुर्यकारणम् ॥४३॥

अपामार्गशिरीषाम्लवेतसैर्बिल्वसंयुतैः ।
श्रितं पयः प्रकुरुते कण्ठं श्रुतिमनोहरम् ॥४४॥

वासा ब्राह्मी वचा पथ्या क्वाथः समधुपिप्पलिः ।
सेवितः पुरुषं कुर्यात् सप्ताहान्मञ्जुलध्वनिम् ॥४५॥

सर्पिर्मधुकसंसिद्धं प्रत्यहं यः पिबेन्नरः ।
तस्य कण्ठो भवेन्नूनं किन्नरीगणगर्वनुत् ॥४६॥

गुडूच्यपामार्गविडङ्गशङ्खीवचाभयाशुण्ठिशतावरीभिः ।
लीढं घृतं गव्यमहो विधत्ते मेधाविनं किन्नर-(पूजितं) च ॥४७॥

हेमन्ते शिशिरे प्रभातसमये ग्रीष्मे प्रदोषे तथा
पुष्पाणां समयेऽर्धरात्रसमये मध्याह्नतः प्रावृषि ।
कालोऽयो शरदस्त्रिकालसमये मय्योवितकल्लोलिनी
सान्निध्यं सुकवेः प्रयाति नियतं नित्यं सरस्वत्यहो ॥४८॥

यत्पापं स्यात्सहर्त्तुर्न्यकपि मुनिवरैः फूटसाक्ष्यं[4] प्रचक्रु-
र्यत्पापं या च गर्हा सदसि तनुभृतामश्नतो वान्तमन्यैः ।
तत्तद्गीतस्य चौर्यं विदधत उदितं तद्ग्रहो नैव कार्यो
गीतेऽन्येन प्रयुक्ते निखिलनिगमवित्-कालसेनोपदेशात् ॥४९॥

यस्य वार्गतिशेतेऽत्र वाचं शास्त्रकृतामपि ।
वाग्गेयकारस्तेनोक्तः सद्गेययशसा स्फुटः ॥५०॥

इति श्रीराजाधिराजमहीमहेन्द्र[5]-श्रीकालसेनेन विरचिते संगीतराजे गीतरत्नकोशे प्रकीर्णकोल्लासे वाग्गेयकारपरीक्षणं प्रथमम् ॥

---

1 A. omits second साकं ।
2 B. मिश्रतीकृताम् ।
3 B. मार्गी ।
4 A. साद्य B. सा
5 B. महेन्द्रेण ।

## शब्दभेदादि नाम द्वितीयं परीक्षणम्

दोषा गुणा इवाभान्ति यत्प्रसादेन देहिनाम् ।
निर्दोषं निर्गुणं वन्दे तमीशं लोकवन्दितम् ॥१॥

शब्दः सप्तविध. स्वहेतुवशतो वातश्च पित्तं कफं,
हेतुत्वेन निवेदिता मुनिवरैर्व्यस्ताः समस्ता अपि ।
तत्तद्भेदभिधाविशेषसहितं वातादिदोषक्रमात्
तेषा लक्षणमत्र वक्ति विशदं लक्ष्मागमे पारगः ॥२॥

[1]बोम्बकः स इह वातजो मतः स्थूल उच्चतरतामुपेयिवान् ।
सारताविरहितश्च कर्णयो. सज्वरः पुरुषनीरसध्वनिः ॥३॥

नाराटनामानममुं वदन्ति पित्तोद्भवं शब्दविचारदक्षाः ।
स्थानत्रयव्याप्तिवशेन हृद्यं गम्भीरलीनं सुघनं प्रशस्तम् ॥४

श्लेष्मसंभव इहास्ति खाहुलो मन्द्रमध्यगमनेन पेशलः ।
सौकुमार्यमधुरत्वमिश्रितः स्निग्धसुन्दररवः श्रव.पथि ॥५॥

स प्रौढिमापितस्तज्ज्ञैराडं(डि)ल्ल इति कथ्यते ।
समस्तैर्जायमानो य· स मिश्र इति कीर्त्तितः ॥६॥

चत्वार एते गदिता मयात्र भेदा यथावद् ध्वनिवर्त्मगामिनः ।
इत परं द्वन्द्वजशब्दसंस्थं भेदत्रयं चारु विचार्य कथ्यते ॥७॥

द्वन्द्वजौ बोम्बनाराटौ तथा बोम्बकखाहुलौ ।
नाराटखाहुलावेतैस्त्रिभिः स्यात् सान्निपातिकः[2] ॥८।

एतेष्वत्युत्तम. साक्षाच्छब्दः स्यात् सान्निपातिकः[3] ।
निःसारितारूक्षताख्यविरुद्धगुणहानितः ॥९॥

खाहुलोन्मिश्रनाराट उत्तमः परिकीर्तितः ।
खाहुलो बोम्बयुक्तस्तु मध्यम. स्याद् विवर्जितः ॥१०

विरुद्धगुणयोगेन विरुद्धगुणसंश्रयात् ।
अधमो बोम्बनाराटो रौक्ष(क्ष्य)नि·[4]सारतायुतः ॥११॥

---

[1] cf. S. R. 3. 39-81 for 3—49 above

[2] [3] B. सान्निपातक· ।

[4] B. सारिता ।

अधमाधम इत्युक्तः शब्दसाम्यविदा स तु ।
एतेषां बहवो भेदा-[1]स्तत्तद्गुणविमिश्रिताः ॥१२॥

मधुरस्निग्धघनोऽन्यः कश्चित् स्यात् स्निग्धकोमलशब्दः ।
त्रिस्थानव्याप्तिकरः कश्चिद्गानमधुरकोमलकः ॥१३॥

त्रिस्थानमृदु-[2]गम्भीरो(रः)स्निग्धो मृदुर्घनपरो विनिर्दिष्टः ।
त्रिस्थानोऽन्यशब्दो घनमधुरमृदुस्थितित्रये चान्यः ॥१४॥

त्रिस्थाने मृदुमधुरस्निग्ध इति कीर्त्यते ध्वनिरपर इह ।
मधुरस्निग्धगभीरत्रिस्थानव्यापकघनोऽन्यः ॥१५॥

स्निग्धकोमलगभीरघनत्रिस्थानलीनक इति स्मृतोऽपरः ।
कश्चिदत्र मधुरश्च कोमलस्निग्ध एव गदितो महात्मभिः ॥१६॥

स्निग्धलीनश्च त्रिस्थानशोभी गम्भीर इत्यपि ।
एवं दशोदिताः शब्दभेदाः श्रीकृष्णभूभुजा ॥१७॥

नाराटखाहुलोन्मिश्र(:) खाहुलो बोम्बमिश्रितः ।
कोमलस्निग्धनिःसारः स्मृतोऽन्यो मधुरो मृदुः ॥१८॥

निःसारोच्चतरः स्निग्धमृदुरूक्षपरः स्मृतः ।
कोमलस्निग्धनिःसारस्थूलोऽन्यः स्निग्धकोमलः ॥१९॥

मधुरः कोमलस्थूलो निःसारोच्चतरः परः ।
क्षीमनिःसारपीनश्च भेदाः षडितरे मताः ॥२०॥

बोम्बभेदास्तु नाराटे षडन्ये मुनिसम्मताः ।
घनत्रिस्थानरूक्षश्च तत्रैकः परिकीर्तितः ॥२१॥

तथान्यो घनगम्भीररूक्षो मुनिभिरीरितः ।
लीनपीवरनिःसाररूक्षस्तत्र तृतीयकः ॥२२॥

अन्यो लीनघनस्थूलोच्चतरस्तु चतुर्थकः ।
त्रिस्थानघनगम्भीरलीनरूक्षस्तु पञ्चमः ॥२३॥

त्रिस्थानलीननिःसाररूक्षपीवर इत्यमी ।
संप्रोक्ता द्वन्द्वजा भेदा अथ ब्रूमस्त्रियोगजान्[3] ॥२४॥

---

[1] B. स्तद्गुणविमिश्रता. ।
[2] B. गभीरो ।
[3] B. omits this verse.

त्रिस्थानस्निग्धनिःसारस्तत्रैकोऽन्यो मृदुघन ।
मधुरोच्चतरो रूक्षो गम्भीरस्तु द्वितीयक ॥२५॥

तृतीय कोमलस्निग्धघनोच्चतरपीवर ।
चतुर्थ कोमलस्निग्धो लीनत्रिस्थानपीवरः ॥२६॥

निःसारोच्चतरः प्रोक्त पञ्चमो रूक्षपीवर ।
त्रिस्थानलीनमधुरनिःसारोच्चतर स्मृतः ॥२७॥

षष्ठस्त्रिस्थानगम्भीरस्निग्धकोमलसघनः ।
मधुरोच्चैस्तरो लीन सप्तमो मधुरो मृदुः ॥२८॥

गम्भीरलीनत्रिस्थानरूक्षोच्च सारतोज्झित ।
अष्टमः कोमलो लीनत्रिस्थानमधुरो घन ॥२९॥

पीवरोच्चतरो रूक्ष इत्येव परिकीर्तितः ।
एव खाहुलनाराटे योगे शब्दभिदा दश ॥३०॥

बोम्बखाहुलयोर्योगे षड् भेदा परिकीर्त्तिता ।
बोम्बनाराटयोर्योगे षडष्टौ च तथा परे ॥३१॥

बोम्बखाहुलनाराटससर्गे सनिरूपिता ।
सभूयैव विमिश्रस्य त्रिंशद्भेदा प्रकीर्त्तिताः[1] ॥३२॥

गुणससगतोऽप्येषा सूक्ष्मभेदा पर शता ।
[2]सरम्भतोऽपि न प्रोक्ता ग्रन्थविस्तरभीरुणा ॥३३॥

॥ इति शब्दभेदा ॥

मधुर कोमलो गाढत्रिस्थानप्रचुरो घन ।
चेहाल करुणः श्लक्ष्ण स्निग्धोन्मृष्टसुखावह ॥३४॥

श्रावकश्छविमान रक्तियुक्तश्चेत्येवमीरितं ।
गुणैर्विभिद्यते शब्द पञ्चादिदशभि स्फुटम् ॥३५॥

तारस्थान प्रौढियुक्तो माधुर्याञ्चितरञ्जक ।
मधुर प्रोच्यते शब्द कोकिलाध्वनिपेशलः ॥३६॥

कोमलोऽन्वथनामैव गाढ( ) स्यादश्लथस्तथा ।
प्रौढश्च [3]स्थानत्रितये छविरक्तयादयो गुणा ॥३७॥

---

[1] B परिकीर्त्तिता ।
[2] B सभरन्तो ।
[3] B omits स्थान ।

यस्यैकरूपा दृश्यन्ते स त्रिस्थान उदाहृतः ।
पीवरः प्रचुरः प्रोक्तो घनोऽन्तःसारवान् रवः ॥३८॥

न स्थूलो न कृशः साम्याद् घनस्निग्धोऽनुरञ्जकः ।
चेहालः कथ्यते शब्दो ललनानाममयं सदा ॥३९॥

आकण्ठकुण्ठनात् [1]पुंसां तत(ः) स्थूलो यतः स्मृतः ।
श्रवणादेव कारुण्यरसवृद्धिकरो मतः ॥४०॥

करुण,-स्तैलधारावदच्छिन्नो श्लक्ष्ण उच्यते ।
सुदूरं श्रूयते नैव रूक्ष(ः)संस्निग्ध उच्यते ॥४१॥

श्रोतृश्रोत्रसुखो मृष्टो न छिन्न(ः) स्थानकत्रये ।
सुदूरश्रवणात् श्रोत्रसुखकृत् श्रावको मतः ॥४२॥

छविमानुज्ज्वलः शब्दः कण्ठनैर्मल्यतो भवेत् ।
रञ्जको रक्तिमानुक्तो ब्रह्मशैलावनीभृता ॥४३॥

इति पञ्चदश प्रोक्ता गुणा गायकशब्दजाः ।
दोषा अपि समासेन वक्ष्यन्ते शब्दसंश्रयाः ॥४४॥

रूक्षः केणिः कृशः केटिः काकोली स्फुटितस्तथा ।
निःसारो भग्न इत्येतत् शब्दे दोषाष्टकं विदुः ॥४५॥

स्निग्धत्ववर्जितो रूक्षः, स्थानयोस्तारमन्द्रयोः ।
[2]क्लेशगम्यस्तु केणिः स्यादतिसूक्ष्मः कृशो मतः ॥४६॥

केटिर्गुणविहीनस्तु त्रिस्थानव्याप्तिवर्जितः ।
यः काककुलनिर्घोषनिष्ठुरः श्रूयते रवः ॥४७॥

स काकोली स्मृतः शब्द(ः) स्फुटितोऽन्वर्थनामकः ।
एरण्डकाण्डनिःसारो निःसारः कीर्तितो ध्वनिः ॥४८॥

नीरसः कथ्यते भग्नखरोष्ट्रध्वनिनिष्ठुरः ।
इति दूषणसंघातो गातृशब्दे निरूपितः ॥४९॥

[3]सुरक्तं मधुरं पूर्णं सुकुमारमलङ्कृतम् ।
व्यक्तं प्रसन्नं व्युत्कृष्टं श्लक्ष्णं सममिमे दश ॥५०॥

---

[1] A. पूसा ।

[2] A. लेश ।

[3] cf. S. R. 4. 373–79 for 50—58 above.

[१]गुणा गीते समादिष्टा सुरक्त तत्र तद्यथा ।
गात्रोत्थध्वनिवैषम्यवर्जित, मधुर पुन ॥५१॥

हृदयङ्गमविच्छित्तिमाधुर्यगुणसस्मृतम् ।
स्वरैरङ्गै पदे पूर्णं रागेणच्छन्दसापि च ॥५२॥

प्रयोगैश्चापि सपूर्णं, सुकुमारमथोच्यते ।
लावण्य गुणसपूर्णं लघुप्रायाक्षराञ्चितम् ॥५३॥

त्रिस्थानसभव [२]यत्स्यात्तद्विज्ञेयमलकृतम् ।
व्यक्त ज्ञेयमभिव्यक्तं प्रकृतिप्रत्ययाक्षरे ॥५४॥

प्रसन्न कर्क(प्रक)टार्थं स्याद वैदर्भीरीतिसस्मृतम् ।
वि(व्यु)त्कृष्टमुक्तमुच्चाराद् द्रुते मध्ये विलम्बिते[३] ॥५५॥

नीचोच्चयोश्च वर्णाना सुश्रव्य( ) श्लक्ष्णमुच्यते ।
वर्णस्थानलयादीनामवैषम्ये सम स्मृतम ॥५६॥

गीते दश गुणा प्रोक्ता दशदिग्जयशालिना ।
गतक्रम कलाबाह्य श्रुतिकालविरोधि च ॥५७॥

शास्त्रे लोके तथा दुष्ट पुनरुक्तमपार्थकम ।
ग्राम्य सन्दिग्धमित्येवा दशधा गीतिदुष्टता ॥५८॥

रागोऽभिव्यज्यते यत्राभ्यासेनापि विना ध्वनौ ।
तच्छारीरमिति प्रोक्त शरीरेण सहोद्भवात्[४] ॥५९॥

[५]कडाल मधुर चैव सौचल बहुभङ्गि च ।
तच्चतुर्धा स्मृत तस्य लक्षण प्रोच्यते मया ॥६०॥

कडालमिह विज्ञेय कठिन स्थानकत्रयम ।
मधुर तच्च यस्य स्यात् माधुर्यं मन्द्रमध्ययो ॥६१॥

रक्तिप्रकाशक तारे शारीर सौचल मतम् ।
एतद्-गुणविमिश्र यद बहुभङ्गि तदीरितम् ॥६२॥

---

१ A गुणातीते ।
२ A यस्मात् etc
३ B विलम्बित ।
४ cf S R 3 82
५ cf Quotation from Sangitasamayasāra' in Simhabhūpāla's commentary on S R 3 82 for 60 63 above

कडालमधुर चैव तथा मधुरसौचलम् ।
कडालसौचल चैव[1] चतुर्थं त्रममिश्रितम् ॥६३॥

एव चतुर्विध [1]ज्ञेय शारीर बहुभङ्गिकम् ।
[2]माधुर्यं रञ्जकत्व च मृदुता च गभीरता ॥६४॥

स्निग्धानुरणनत्व[3] च घनता कान्तिभागिता[4] ।
स्वभावाद् दृश्यते यत्र तच्छारीरमितीर्यते ॥६५॥

अननुरणनत्व[5] च वैस्वर्यं रूक्षतापि च ।
नि सारता विरक्तिश्च काकित्व स्थानविच्युति ॥६६॥

कृशता ककशत्व चेत्यादिभिर्दूषणैर्युतम ।
कुशारीरमिह प्रोक्त तत् सुशारीरशालिना ॥६७॥

विद्यादानादिभि पुसामुत्कृष्टादृष्टपुष्टित ।
सुशारीरस्य सप्राप्ति प्रसन्ने पार्वतीपतौ ॥६८॥

यद्गानगुणमाकर्ण्य किन्नरै किन्नता धृता ।
तेन श्रीकालसेनेन[6] वर्णितो गुणनिर्णय ॥६९॥

इति श्रीराजाधिराजश्रीकालसेनेन विरचिते सगीतराजे षोडशसाहस्र्या सगीतमीमासाया
ररत्नकोशे प्रकीर्णकोल्लासे शब्दभेदादिपरीक्षण द्वितीयम् ।

---

[1] B चैव ।
[2] cf S R 3 83 86 for 64-68 above
[3] B -नुसरणत्व ।
[4] B भङ्गिता ।
[5] A यत्रानुरणनत्व । B यत्रानुसरणत्व ।
[6] B थालसन ।

# गमकनिरूपणं नाम तृतीयं परीक्षणम्

यदीयस्वरकम्पेन जायते स्वरकम्पनम् ।
मोक्षादिगमकं नौमि तं स्मरारिमकम्पनम् ॥१॥

श्रुत्यन्तरगतां छायां स्वश्रुतिस्थानसंभवाम् ।
स्वरूपं गमयेद् येन गमकस्तेन कीर्त्तितः ॥२॥

[१]श्रोतृचित्तसुखदः स्वरकम्पः कीर्त्तितोऽत्र गमकः क्षितिभर्त्रा ।
तस्य पञ्चदशसम्मितभेदाः प्रकीर्त्तिताः, प्रथमस्तु नामितः ॥३॥

नामित(:)स्वरगणस्य संनतेः [२]कामितस्वरविदा निवेदितः ।
॥ इति नामितः ॥१॥

कम्पितस्फुरितलीनमुद्रितान्दोलिताहतवलित्रिभिन्नकाः ॥४॥

प्लावितस्तिरिप-[३]हुम्फितसंज्ञोल्लासिताह्वकुरलाख्यमिश्रितः ।
कम्पनाद् द्रुतदलस्य(लयस्य) वेगतः कम्पितोऽत्र गमको निरूपितः ॥५॥
॥ इति कम्पितः ॥२॥

अर्धमातृकगतित्रिभागतो वेगत(:) स्फुरितमाह भूमिपः ।
॥ इति स्फुरितः ॥३॥

लाघवाद् द्रुतगतेन कम्पनाल्लीनमाह परकम्पनो नृपः ॥६॥
॥ इति लीनः ॥४॥

मुद्रितोऽत्र गमको निरूपितो वक्त्रमुद्रणभवो महीभुजा ।
॥ इति मुद्रितः ॥५॥

दोलितो लघुगतेन वेगिनान्दोलितो निगदितो महीभृता ॥७॥
॥ इति आन्दोलितः ॥६॥

अग्रिमं स्वरमभिद्रुत गतो यो निवृत्तिमविताहस्तु सः ।
॥ इत्याहतः ॥७॥

कीर्त्तितो विविधवक्रिमयुक्ताद् वेगतो वलिरिभास्यसेविना ॥८॥
॥ इति वलिः ॥४॥

---

१ *cf.* S R 3 87-96 for 3-13 above

२ A B कामतत्स्वरविदा ।

३ S R गुम्फित ।

स्थानकत्रितयविश्रमवर्जं संघनस्वर इह त्रिभिन्नकः ।

॥ इति त्रिभिन्नः ॥९॥

प्लावितः प्लुतगतेन कम्पनात् कीर्तितोऽत्र गमको महीभृता ॥९॥

॥ इति प्लावितः ॥१०॥

यो लघिष्ठडमरुस्थरि(नि)स्वनानुकृतिसुन्दरो रवः ।
व्योमवेगिततुरीयभागवद्वेगवाँस्तिरिप ईरितः स तु ॥१०॥

॥ इति तिरिपः ॥११॥

योऽभ्रमिततुरीयभागवत्तोयसंभ्रम इवापि स्फुरन् ।
विस्फुरच्चलत्तरङ्गरिङ्गणैः सम्मितः स तिरिपो मतः सताम् ॥११॥

॥ इति वा तिरिपः ॥११॥

हुङ्कृतेन हृदयङ्गमो यो गभीरनिनदः स हुम्फितः ।

॥ इति हुम्फितः ॥१२॥

उत्तरोत्तरगतान् स्वरानिहोल्लासितः क्रमवशाद् व्रजन् भवेत् ॥१२

॥ इति उल्लासितः ॥१३॥

प्रोच्यतेऽत्र कुरुलो[1] वलिरेव ग्रन्थिलः[2] स खलु [3]कण्ठचकोमलः ।

॥ इति कुरुलः ॥१४॥

मिश्रणादविरलं गमकानां मिश्रितो निगदितः क्षितिभर्त्रा ॥१३॥

॥ इति मिश्रः ॥

तस्य सन्ति बहुशोऽभिधा पुनः स्थायवेगविवृतौ मया स्फुटम् ।
तत्स्वरूपविवृतिः करिष्यते तांविदन्ति विदुषां वरा. स्वयम् ॥१४

यस्य रा(वा)मवचोभङ्ग्या व्याहृतिर्गमकाविदाम् ।
तेन श्रीकालसेनेन गमकाः सम्यगीरिताः ॥१५॥

इति श्रीराजाधिराजमहीमहेन्द्रश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां गीतरत्नकोशे प्रकीर्णकोल्लासे गमकनिरूपणं तृतीयं परीक्षणम् ॥३॥

---

[1] A कुरल. ।

[2] B. ग्रन्थिन ।

[3] A. कण्ठ० B. कण्ठ० ।

## स्थायवागो नाम चतुर्थं परीक्षणम्

कामिभिः स्थायसम्पत्तिर्यत्प्रसादादवाप्यते ।
तमहं शंकरं देवं वन्दे स्थायममायिनम् ॥१॥

अत्र [1]लक्ष्मप्रकरणे लक्षणे स्थायवागयोः ।
न्यरूपि वागविवृतिर्विभज्य प्रतिपादिता ॥२॥

अथो विवरणं स्थायगतं तावत् प्रतन्यते ।
वागा अपि प्रसंगेन विविच्यन्तेऽत्र केचन ॥३॥

[2]शब्दस्य वाद्यशब्दस्यच्छायाया यन्त्रढाल्ययोः ।
लवन्याहतेस्तीक्ष्णप्रेरितः स्वरलङ्घितः ॥४॥

इत्यसंकीर्णलक्ष्माणो दश स्थायाः प्रकीर्तिताः ।
तत्र शब्देऽस्य ते स्थाया येषां शब्दैरयन्त्रितैः ॥५॥

[3]ग्रहणमिति शब्दस्य तेऽत्र स्थायाः प्रकीर्तिताः ।
॥ इति शब्दस्य (स्थायाः) ॥१॥

येषु राग इवाभान्ति वाद्यशब्दाः स्वभावतः ॥६॥
रागस्यावयवानां च बूहका राजसम्मताः ।
॥ इति वाद्यशब्दस्य (स्थायाः) ॥२॥

ध्वनेर्विकारो यः काकु(ः) सा छाया सा च षड्विधा ॥७॥
स्वरजा रागजा चान्यरागजा देशसंभवा ।
क्षेत्रजा यन्त्रजा चेति तासां लक्षणमुच्यते ॥८॥

श्रुतिन्यूनाधिकत्वेन या स्वरान्तरसंश्रया ।
स्वरान्तरस्य रागे स्यात् स्वरकाकुरसौ भवेत् ॥९॥
॥ इति स्वरकाकुः ॥

सा रागकाकुर्विज्ञेया छाया रागस्य योनिजा ।
॥ इति रागकाकुः ॥

रागे रागान्तरच्छाया काकुः सा त्वन्ययोनिजा ॥१०
॥ इति अन्यरागकाकुः ॥

---

[1] cf. S. Raj. I 2. 3. 50-51.
[2] cf. S. R. 3. 97-188 for 4-132 above.
[3] B. ग्रहण इति ।

देशस्वभावजा छाया या रागे वर्तते क्वचित् ।
सा देशकाकुर्विज्ञेया रागच्छायाविचक्षणैः ॥११॥

॥ इति देशकाकुः ॥

रागे नानाविधा छाया प्रतिक्षेत्रं निसर्गजा ।
सा क्षेत्रकाकुर्विज्ञेया क्षेत्रं देहो यतः स्मृतम् ॥१२॥

॥ इति क्षेत्रकाकुः ॥

वंशवीणादियन्त्रोत्था छाया या दृश्यते क्वचित् ।
रागे सा विबुधैर्ज्ञेया यन्त्रकाकुरिति स्फुटम् ॥१३॥

॥ इति यन्त्रकाकुः ॥

छायास्थायाः स्मृता ये ते रागे छायान्तरं श्रिता(ः) ।
अन्यच्छायाप्रवृत्तौ हि सत्यां रागांशवेदिभिः ॥१४॥

॥ इतिच्छायाया(ः) स्थायाः ॥३॥

दृश्यन्ते यत्र यन्त्रोत्थरागेष्वेव विचक्षणैः ।
बाहुल्यात्ते तु विज्ञेया छाया यन्त्रसमुद्भवा ॥१५॥

॥ इति यन्त्रस्य (स्थायाः) ॥४॥

मुक्ताफलानां गतिवद्येषा¹ सस्खलिता गतिः ।
वर्णानां दृश्यते येषु स्थायास्ते ढालसंभवाः ॥१६॥

ढालशब्देन चलनं प्रोच्यते लुण्ठनात्मकम् ।

॥ इति ढालस्य (स्थायाः) ॥५॥

विना प्रयाससामग्र्यं ताराद् यद् द्रुतकम्पनम् ॥१७॥

सदैव गमनं धातिकोमलं लवनी स्मृता ।
एषु(येषु) सा विद्यते स्थायास्ते लवन्याः प्रकीर्तिताः ॥१८॥

॥ इति लवन्याः (स्थायाः) ॥६॥

वर्णत्रयेऽपि यः कम्पो विचित्रो वेगसंयुतः ।
वहनी नाम सा गीतालप्तिसंबन्धभेदतः ॥१९॥

द्विविधा, सा पुनर्ज्ञेया स्थिता(रा) रागं(देशं) मता, पुन. ।
त्रिधा² द्रुता च कम्पा ³च स्थिरया चेति भेदतः ॥२०॥

---

¹ A. गतिवत् येषा ।
² B. adds च ।
³ B. omits च ।

देहस्था हृदयोद्भूता वहनी सा पुनर्द्विधा ।
खुत्ता चैव तथा[१] फुल्ला तयोर्लक्षणमुच्यते ॥२१॥
विशन्त इव दृश्यन्ते यस्यामन्तः स्वरास्तु सा ।
खुत्तेति परिविज्ञेया, सोत्फुल्लेत्युदिता पुनः ॥२२॥
यस्यामभ्यासवेगेन निर्यान्तीवोपरि स्वराः ।
गमकेषु वलिर्नाम [२]योक्तंवविधरूपिणी ॥२३॥
वहनी नाम सा ज्ञेया यन्त्रवादनकोविदैः ।
येषु रागेषु ते स्थाया वहन्यास्ते प्रकीर्तिताः ॥२४॥
॥ इति वहन्याः (स्थायाः) ॥७॥

सुतीक्ष्ण इव यस्तारस्वरः पूर्णश्रुतिर्भवेत् ।
स तीक्ष्णः प्रोच्यते स्थायः स्वरमर्मविशारदैः ॥२५॥
॥ इति तीक्ष्णः (स्थायः) ॥८॥

तिर्यगूर्ध्वमधस्ताच्च वादकप्रेरितैः स्वरैः ।
प्रेरितो नाम विज्ञेय( ) स्थायश्रुतिविशारदैः ॥२६॥
॥ इति प्रेरितः (स्थायः) ॥९॥

उल्लङ्घयन् स्वरान् भूरीन् लाघवादन्तरान्तरा ।
स्वरलङ्घितनामा स्यात् स्थायः सकीर्णलक्षणः ॥२७॥
॥ इति स्वरलङ्घितः (स्थायः) ॥१०॥
॥ इत्यसकीर्णा दश स्थायाः ॥

॥ अथ सकीर्णाः स्थायाः ॥

स्थापनाया गते रक्तेश्छवेरशावधानयोः ।
द्रुतश्च(स्य) करुणायाश्च निकृतेश्च भृतस्य च ॥२८
नादस्य गात्रभजनापस्थानोपशमस्य च ।
काण्डारणानिर्जवनान्वितानाञ्च[3] ध्वनेस्तथा ॥२९॥
स्वरस्य विविधत्वस्य स्निग्धचोक्षसुदेशिकाः ।
गाढो ललितगाढश्च ललितो लुलितः समः ॥३०॥
कोमलः प्रसृतो घोषापेक्षितोचितसञ्ज्ञकः ।
त्रयस्त्रिंशदमी स्थायाः प्रसिद्धा गुणभेदतः ॥३१॥
स्थापनायास्तु ते ज्ञेयाः स्थाया गुणभिदावशात् ।
पुनः पुनः स्थापयित्वा येषा प्रतिपदं कृतिः ॥३२॥
॥ इति स्थापनायाः (स्थायाः) ॥१॥

---

१ B तयोरफुल्ला । २ A B योक्तव्य विधिरूपिणी ।
3 A B न्वितानामध्वनस्तथा ।

मत्तमातङ्गवद् यत्र सविलासाद् भवेद् गतिः ।
गीतस्य तद्युता(ः) स्याया गतेरुक्ता मनीषिभिः ॥३३॥

॥ इति गतेः (स्यायाः) ॥२॥

[1]उत्कर्षो दृश्यते यत्र रक्ते रक्तेस्तु ते मताः ।
॥ इति रक्तेः (स्यायाः) ॥३॥

कोमला दृश्यते कान्तिर्येषु ते स्युः छबेरिह ॥३४॥
॥ इति छबेः (स्यायाः) ॥४॥

रागान्तरस्य [2]यो रागेऽवयवोंऽशः[3] स उच्यते ।
सप्तधा कारणांशः कार्यांशों(ऽ)शांश एव च ॥३५॥

सजातीयांशको मध्यस्यांशको(ऽ)सदृशांशकः ।
सदृशांशश्च, यो रागे कार्ये(ऽ)शः [4]कारणोद्भवः ॥
कारणांशो यथा रामकृतौ कोलाहलांशकः ॥३६॥
॥ इति कारणांशः ॥

कार्यरागांशको यो वै कारणे दृश्यते क्वचित् ।
स कार्यांशो भैरवेऽस्ति भैरव्यंशो यथार्थतः ॥३७॥
॥ इति कार्यांशः ॥

अंशांशः स तु यत्रांशे(ऽ)शान्तरः संचरेदिह ॥३८
॥ इति अंशांशः ॥

गौडत्वाद्यां समां जातिं समाश्रित्य प्रवर्तिता(ः) ।
कर्णाटाद्याः सजातीयास्तेष्वेकांशोऽपरत्र यः ॥
सजातीयांशके(कः) सोऽत्र विज्ञेयो रागवेदिभिः ॥३९॥
॥ इति सजातीयांशकः ॥

परस्परं नो सदृशौ तावेव सदृशौ च यौ ।
मध्यस्थौ तौ तयोरंशो नट्टादेशाख्ययोर्यथा ॥४०॥

मध्यस्थांशः स विज्ञेयो, -(ऽ)सदृशांशः स उच्यते ।
सादृश्यशून्ययोरंशः परस्परगतो यथा ॥
वेलावल्याश्च गुर्जर्या यथांशो(ऽ)न्योन्यमंशयोः ॥४१॥
॥ इति मध्यस्थांशोऽसदृशांशश्च ॥

---

[1] B. उत्कर्षो ।
[2] A. ये ।
[3] A. B. (ऽ)वयवो(ऽ)शश्च ।
[4] B. कारणोद्भव. ।

सदृशांशो यथा नट्टावराट्योः शुद्धयोर्मिथः ॥
परस्परं सदृशयोरेकोऽशः परिवर्तते ॥४२॥

॥ इति सदृशांशः ॥

येष्वंशो दृश्यते स्थायास्ते(ऽ)शस्य परिकीर्तिताः ॥४३॥

॥ इति अंशस्य (स्थायाः) ॥५॥

चित्तस्यैकाग्रभावेन ग्राह्यास्ते अवधानजाः ।

॥ इति अवधानस्य (स्थायाः) ॥६॥

येषु द्रुतत्वं शब्दस्य स्थायास्ते द्रुतशब्दजाः ॥४४॥

॥ इति द्रुतस्य (स्थायाः) ॥७॥

करुणायाश्च ते स्थाया येषु स्यात् करुणो रसः ॥४५॥

॥ इति करुणायाः (स्थायाः) ॥८॥

अन्यूनाधिकता रागे येषु स्थायेषु दृश्यते ।
ते स्थाया निकृतेर्ज्ञेया बलात् संस्थापिता स्थितौ[१] ॥४६॥

॥ इति निकृतेः (स्थायाः) ॥९॥

भरणं रागरन्ध्राणां यैः स्थायाः स्युर्भृतस्य ते ।

॥ इति भृतस्य (स्थायाः) ॥१०॥

बहुलो दृश्यते येषु नादस्ते नादजाः स्मृताः ॥४७॥

॥ इति नादस्य (स्थायाः) ॥११॥

[२]ये गात्र एव दृश्यन्ते स्थाया गात्रस्य ते मताः ॥४८॥

॥ इति गात्रस्य (स्थायाः) ॥१२॥

आरोप्यते प्रयत्नेन रागे योऽतिशयो बुधैः ।
तदुक्तं भजनं तेन युक्ता(ः) स्युर्भजनस्य ते ॥४९॥

॥ इति भजनस्य ॥१३॥

आयासेन विना यत्र प्राचुर्यं दृश्यते ध्वनौ ।
स्वस्थानं तदपस्थानमेतद्गुणविपर्ययात् ॥
तद् यत्र विद्यते स्थायास्तेऽपस्थानस्य सम्मताः ॥५०॥

॥ इत्यपस्थानस्य (स्थायाः) ॥१४॥

---

१ cf. Quotation from Saṅgītasamayasāra in Siṁhabhūpāla's commentary on S R. 3. 143.

२ A. यो गात्र येव, B. ये गात्र यैव ।

येषूपशान्तिः क्रियते कृत्वा तीव्रतरं ध्वनिम् ।
रागप्रयोगतत्त्वज्ञैर्विद्यादुपशमस्य तान् ॥५१॥

॥ इत्युपशमस्य (स्थायाः) ॥१५॥

स्तम्भादिषु यथा लोके पद्मायुत्किरणं तथा ।
यत्र काण्डारणा रागे स्थाया(स्)ते स्युस्तदुद्भवाः ॥५२॥

॥ इति काण्डारणायाः (स्थायाः) ॥१६॥

सुकुमारो रक्तियुक्तो वक्रः सूक्ष्मत्वमापितः ।
स्वरो येषु क्रमेणैते ज्ञेया निर्जवनान्विताः ॥५३॥

॥ इति निर्जवनायाः (स्थायाः) ॥१७॥

अत्यायताः प्रयोगा ये स्थायास्ते स्युरिह ध्वनेः ॥५४॥

॥ इति ध्वनेः (स्थायाः) ॥१८॥

गाम्भीर्यं चैव माधुर्यं घनत्वं येषु दृश्यते ।
मन्द्रस्थाने स्वरस्यैते स्थायाः पूर्वैरुदीरिताः ॥५५॥

॥ इति स्वरस्य (स्थायाः) ॥१९॥

ये भजन्ते विचित्रत्वकारिणीं भङ्गिमञ्जसा ।
रागे नानाविधोल्लासैः स्थायास्ते विविधत्वजाः ॥५६॥

॥ इति विविधत्वस्य (स्थायाः) ॥२०॥

स्निग्धो रूक्षत्वरहितो ध्वनिर्येष्वत्र दृश्यते ।
स्निग्धाः स्थायास्तु ते प्रोक्ताः, चोक्षस्थायः स कथ्यते ॥५७॥

यत्रौज्ज्वल्यं भवेद्रागे, कथ्यते स सुदेशिकः ।
यो वल्लभो विदग्धानां, तथा गाढः स उच्यते ॥५८॥

शिथिलत्वं न यत्रास्ति, स एव मृदुतामितः ।
प्रोक्तो ललितगाढस्तु, ललितस्तु विलासवान् ॥५९॥

॥ इति स्निग्धाः, चोक्षाः, सुदेशिकाः, गाढाः, ललितगाढाः, ललिताश्च (स्थायाः) ॥२१-२६॥

घूर्णनामृदुतायुक्तो लुलितः परिकीर्त्तितः ।

॥ इति लुलितः ॥२७॥

हीनो वेगविलम्बाभ्यां सम इत्युच्यते बुधैः ॥६०॥

॥ इति समः ॥२८॥

कोमलो(ऽ)कर्कशः प्रोक्तः, प्रसृतः प्रसरान्वितः ॥६१॥

॥ इति कर्कशः, प्रसृतश्च, (स्थायः) ॥२९, ३०॥

महान् य( ) स्निग्धमधुरो वह्‌या च [1]वहेर्वलौ ।[2]
एषा ध्वनि सघोष स्यात् मन्द्रे ते घोषजा मता ॥६२॥
॥ इति घोषा (स्थाया) ॥३१॥

स्थाय स्थायेन पूर्वेण पूत्यर्थं योऽभिकाङ्क्षति ।
अपेक्षितस्तु स ज्ञेय,-स्तर्थवोचितसज्ञक ॥
योग्यतामापितो गीते गीतज्ञेन विपश्चिता ॥६३॥
॥ इति अपेक्षित, उचितश्च (स्थाय) ॥३२, ३३॥

सकीर्णलक्षणा( ) स्थायास्त्रयस्त्रिंशदिमे स्फुटा ॥६४॥
॥ इति त्रयस्त्रिंशत सकीर्णस्थाया, गुणकृतभेदा प्रसिद्धा ॥

प्रलम्बितोऽवस्खलितस्त्रोटितोल्लासितौ वह ।
अक्षराडम्बरक्षिप्तस्थायुको(का) दीर्घकम्पित ॥६५॥

स्थिरभ्रामितसूक्ष्मान्तोत्प्रविष्टा( ) सप्रविष्टक ।
प्रतिगृह्योल्लासितश्च स्यादलम्बविलम्बक ॥६६॥

प्रसृताकुञ्चितश्चाथ स्यात त्रोटितप्रतोष्टक ।
तरङ्गितो निःसरण इति प्रोक्त समासत ॥
असकीर्णा विंशति( ) स्यु स्थाया ईयत प्रसिद्धित ॥६७॥

जल दोलायते यद्वद्भृताद्धभृते घटे ।
गीते लुण्ठन्ति ये तद्वत्ते स्थाया स्यु प्रलम्बिता ॥६८॥
॥ इति प्रलम्बित ॥१॥

यो मन्द्रादप्यधो याति सोऽवस्खलित उच्यते ॥६९॥
॥ इति अवस्खलित ॥२॥

क्वचित स्वरे चिर स्थित्वा तार स्पृष्ट्वाग्निवत परम ।
प्रत्यागच्छति यो वेगात त्रोटित स उदाहृत ॥७०॥
॥ इति त्रोटित ॥३॥

वेगेनोर्ध्वं स्वरा यत्र प्रेर्यन्ते गीतकोविदै ।
उल्लासितो भवेत स्थायस्तत्र सप्रतिपत्तित ॥७१॥
॥ इति उल्लासित ॥४॥

स्रोतसां वेगवत कम्पो यत्र स्वरेषु वहस्तु स ॥७२॥
॥ इति वह ॥५॥

यत्राक्षराणा दृश्यत स्फूर्तिराडम्बराकृति ।
मुख्यास्ते परिविज्ञेया अक्षराडम्बरोद्भवा ॥७३॥
॥ इति अक्षराडम्बर ॥६॥

---

[1] A B वले वहौ ।

ऊर्ध्वमूर्ध्वं प्रसारः(:) स्याद् यस्यासौ क्षिप्त उच्यते ॥७४॥

॥ इति क्षिप्तः ॥७॥

स्थित्वा स्थित्वा स्वरेष्वादावेकैकस्मिन् द्वयोर्द्वयोः ।
त्रिषु त्रिष्वथवा यस्य प्रचार(:) स्थायुकस्त्वसौ ॥७५॥

॥ इति स्थायुकः ॥८॥

स दीर्घकम्पितो यत्र सुचिरं कम्पते स्वर ।

॥ इति दीर्घकम्पितः ॥९॥

स स्थिरो यत्र कम्प(:) स्यात् स्वराणां स्थायवर्णग. ॥७६॥

॥ इति स्थिरः ॥१०॥

विधत्ते यो भ्रमं स्थायः स्वरेषु भ्रामितस्तु सः ।

॥ इति भ्रामितः ॥११॥

निगद्यते स सूक्ष्मान्तो यः क्रमेणाल्पतां गत ॥७७॥

॥ इति सूक्ष्मान्तः ॥१२॥

उत्प्रविष्टः स विज्ञेयो य आरोहे स्वरो घन. ।

॥ इति उत्प्रविष्टः ॥१३॥

संप्रविष्टः स विज्ञेयो (योऽ)वरोहे स्वरो घनः ॥७८॥

॥ इति संप्रविष्टः ॥१४॥

यः कम्बुकवदुत्क्षिप्योत्क्षिप्यैव प्रतिगृह्यते ।
प्रतिगृह्योल्लासितो(ऽ)सौ स्याय उक्तो मनीषिभिः ॥७९॥

॥ इति प्रतिगृह्योल्लासितः ॥१५॥

प्रतिगृह्याविलम्बेन त्रियते यो विलम्बितः ।
गीततत्त्वविरामत्र स्यादलम्बविलम्बक ॥८०॥

॥ इति अलम्बविलम्बक ॥१६॥

प्रसृताकुञ्चित स स्याद् य प्रसार्याकुञ्चित ॥८१॥

॥ इति प्रसृताकुञ्चित ॥१७॥

स त्रोटितप्रत्रोष्ट स्याद्यत्रैवं मन्द्रतारयो ।
त्रोटयित्वा तयोरेव (वं) प्रतिगृह्येत कम्पन ॥८२॥

॥ इति त्रोटितप्रत्रोष्ट ॥१८॥

चलाचला उल्लसन्ति स्वरा यत्र तरङ्गवत् ।
तरङ्गित स विज्ञेय, स तु नि सारणाभिध ॥
नि सरन्त इवाभान्ति स्वरा यत्र क्रमोद्गता ॥८३॥

॥ इति तरङ्गित, नि सरणश्च ॥१९, २०॥

॥ इतीषत्प्रसिद्धा विंशतिरसकीर्णलक्षणम्(णा स्थाया) ॥

घटनाया कलायाश्च सुखस्याक्रमणस्य च ।
प्रकृतिस्थस्य शब्दस्य चालेर्जीवस्वरस्य च ॥८४॥

वेदध्वनेर्धनत्वस्य सहितो लघुरन्तर ।
वक्रो दीप्त प्रसन्नश्च बद्ध कलरवस्य च ॥८५॥

शिथिलोऽवघटो ह्रस्व प्रसन्नमृदुसज्ञक ।
रागेष्टौ(ष्टो)ऽपस्वराभास छान्दसो गुरुदीर्घकौ ॥८६॥

प्लुतश्च सुकराभासो दुष्कराभास इत्यपि ।
साधारणस्तथा(ऽ)साधारण शिथिलगाढक ॥८७॥

निराधारश्च मिश्रश्चेत्येव गुणविभेदत ।
स्थाया ईषत् प्रसिद्धा( ) स्युस्त्रयस्त्रिंशदिह स्फुटा ॥८८

घटिता इव ये भान्ति शिल्पिना सुप्रयत्नत ।
स्थाया गीतेषु ते ज्ञेया घटनाया मनीषिभि ॥८९॥

॥ इति घटनाया (स्थाया) ॥ १ ॥

तालस्य यै कलापूर्ति क्रियते ते कलोद्भवा ।

॥ इति कलाया (स्थाया) ॥ २ ॥

[1]प्राणसौष्ठवतो(ऽ) क्लेशनिर्वाह्या( ) स्यु सुखस्य ते ॥९०॥

॥ इति सुखस्य (स्थाया) ॥ ३ ॥

आक्रमणस्य ते ज्ञेया ये गीते गायनै सदा ।
बलात् प्राणेन गृह्यन्ते, प्रकृतिस्थध्वनेश्च ते ॥९१॥

शब्द प्रकाशते येषु दृत (धृति) भृत्यादिवर्हि—
स्वभावादेव, जवकेति चालिर्नाम गुणो मत
रम्यविश्रान्तिनिर्वाहस्तद्युताश्चालिसभवा ॥

॥ इति आक्रमणस्य, प्रकृतिस्थशब्दस्य, चालेश्च (स्थाया) ॥ ॥

अशो जीवस्वरस्तत्र तत्प्राधान्येन वर्तिता ।
ये ते जीवस्वरस्य स्यु,—स्तथा वेदध्वनेरपि ॥
वेदध्वनिनिभध्वाना( ) स्थाया ये ते प्रकीर्तिता ॥९३॥

॥ इति जीवस्वरस्य, वेदध्वनेश्च (स्थाया) ॥ ७,८ ॥

---

[1] A B प्राणसोष्टवतो ।

ते घनत्वस्य विज्ञेया येऽत्रान्तःसारसंभृताः ॥९४॥
॥ इति घनत्वस्य (स्थायाः) ॥ ९ ॥

तारान्मन्द्रस्थिति यावद् घण्टानादवदायातः[1] ।
संहितः परिविज्ञेयो, लघुः स्याद् गुरुतां विना ॥९५॥
॥ इति संहितः, लघुः (स्थायः) ॥ १०,११ ॥

ध्रुवकाभोगयोरन्तरन्तरः परिगीयते ।
॥ इत्यन्तरः (स्थायः) ॥ १२ ॥

विद्युल्लतेव कुटिलप्रचारो वक्र उच्यते ॥९६॥
॥ इति वक्रः (स्थायः) ॥ १३ ॥

दीप्तप्रसन्नस्तारेऽपि यः सौकर्यमुपागतः ।
॥ इति दीप्तप्रसन्नः (स्थायः) ॥ १४ ॥

बद्धस्तब्धस्तु विज्ञेय,-स्तथा कलरवस्य च ॥९७॥
माधुर्यं यत्र बाहुल्याद् ध्वनौ, स शिथिलो मतः ।
विश्लिष्टसन्धिर्यः स्थायो, दुष्करोऽवघटो मतः ॥९८॥
॥ इति बद्धः, कलरवस्य, शिथिलः, अवघटः (स्थायः) ॥ १५,१८ ॥

दीर्घत्वरहितो ह्रस्वः, सुकरः कोमलो ध्वनिः ।
प्रसन्नमृदुरित्युक्तो, रागेष्टः स तु कथ्यते ॥
रागेणेष्टः स्वपूर्त्यर्थं यः स्थायो गेयकर्मणि ॥९९॥
॥ इति ह्रस्वः, प्रसन्नमृदुः, रागेष्टः (स्थायः) ॥ १९,२१ ॥

स स्यादपस्वराभासो योऽपस्वरवदीक्ष्यते ।
॥ इति अपस्वराभासः (स्थायः) ॥ २२ ॥

छान्दसः स तु विज्ञेयो ग्रामीणजनवल्लभः ॥१००॥
॥ इति छान्दसः (स्थायः) ॥ २३ ॥

स्थायो गुरुर्घनरवः, स्वरादौ दीर्घ आयतः ।
॥ इति गुरुः, दीर्घः, (स्थायः) ॥ २४,२५ ॥

त्रिमात्रयोच्चारितो यः प्लुतोऽत्यन्तविलम्बितः ॥ १०१ ॥
॥ इति प्लुतः (स्थाय.) ॥ २६ ॥

यो दुष्करोऽपि सुकरवदाभाति ध्वनिः सदा ।
स ज्ञेयः सुकराभासः, सुकरो दुष्करो यथा ॥
भासते दुष्कराभासः स ज्ञेय(ः) स्थायवेदिभिः ॥१०२॥
॥ इति सुकराभासः, दुष्कराभासः (स्थायः) ॥ २७,२८ ॥

---

[1] A. B. नादवत्तायत. ।

यस्योपलब्धि( ) सर्वत्र स साधारण इष्यते ।
॥ इति साधारण (स्थाय) ॥ २९ ॥

क्वचिदेव नु (न) सर्वत्र योऽस्त्यसाधारणस्तु स ॥१०३॥
॥ इति असाधारण (स्थाय) ॥३०॥

विश्लिष्टसन्धिरादौ यस्तथान्ते दृढबन्धवान् ।
प्रोक्त शिथिलगाढोऽसौ, निराधार स उच्यते ॥
नापेक्षते वहन्यादि(दी)यं स्वनिर्वाहसिद्धये ॥१०४॥

इति शिथिलगाढ, निराधार (स्थाय) ॥३१,३२॥

एतेषा मिश्रणाज्जातो मिश्रित सोऽप्यनेकधा ।
तिरिपस्फुरितो लीनस्फुरित स्फुरिताहत ॥१०५॥

त्रिभिन्नकम्पितो लीनत्रिभिन्न कुरुलाहत ।
तिरिपान्दोलितो [1]वलित्रिभिन्न(स)तिरिपाहत ॥१०६॥

[2]तिरिपस्फुरितो लीनकम्पित कम्पिताहत ।
आन्दोलितप्लावितक समुल्लासितनामित ॥१०७॥

हुम्फितान्दोलितश्चैव प्लावितोल्लासितस्तथा ।
कुरुलान्दोलितश्चैव तथा नामितमुद्रित ॥१०८॥

लीनमुद्रितसज्ञश्च तथा मुद्रितहुम्फित ।
हुम्फितस्फुरितश्चैव तथा कम्पितहुम्फित ॥१०९॥

तिरिपोल्लासितो लीनमुद्रितो लीननामित ।
वहनीढालयो( )छाययन्त्रयो शब्दढालयो ॥११०॥

तीक्ष्णप्रेरितयोर्ढालवहन्यो शब्दयन्त्रयो ।
वहनीयन्त्रयो शब्दछाययो शब्दवाद्ययो ॥
एकोनत्रिंशदेतेषु(३४?)मिश्रभेदा द्विभेदजा ॥१११॥

कम्पिताहतलीनश्च वलिस्फुरितहुम्फित ।
तिरिपान्दोलितवह प्लावितोल्लासिताहत ॥११२॥

त्रिभिन्ननामितक्षिप्त,-स्तीक्ष्णप्रेरितयन्त्रज ।
नामितान्दोलितवलि,-र्वलिनामितकम्पित ॥११३॥

मुद्रितोल्लासितवलि,-स्त्रिभिन्नकुरुलाहत ।
त्रिभिन्नलीनस्फुरित प्लावितान्दोलिताहत ॥११४॥

---

[1] A B लीनत्रिभिन्नकुरुलाहत ।
[2] A B तिरिपान्दोलितो ।

तिरिपान्दोलितक्षिप्तो लीनकम्पितनामित ।
दीर्घकोमलसूक्ष्मान्त क्षिप्तप्लावितनामित ॥
एते त्रियोगजा मिश्रभेदा षोडश कीर्त्तिता ॥११५॥

वहाक्षराडम्बरजप्रलम्बिततरङ्गित ।
वहाक्षराडम्बरजत्रोटितोल्लासितस्तया ॥११६॥

अविलम्बविलम्बोत्प्रविष्टनि सरण पर ।
प्रलम्बितावस्खलितत्रोटितोल्लासितस्तथा ॥११७॥

दीर्घकम्पितसूक्ष्मान्तस्यायुकश्च तया पर ।
त्रोटितसप्रविष्टोत्प्रविष्टनि सरणाह्वय ॥११८॥

प्रतिगृहीतोल्लासितसप्रविष्टप्रलम्बित ।
त्रिभिन्नलीनस्फुरिताविलम्बकविलम्बक ॥११९॥

ढालशब्दोत्ययन्त्रोत्यवाद्यशब्दभव पर ।
त्रिभिन्नतिरिपस्फुरितवाद्यशब्दज पर ॥
चतुर्योगभवा एते मिश्रभेदा दशोदिता ॥१२०॥

त्रिभिन्नलीनस्फुरितप्लावितोल्लासिताह्वय ।
ढालच्छायायन्त्रवाद्यशब्दस्फुरितसज्ञक ॥१२१॥

तीक्ष्णप्रेरितसूक्ष्मान्तत्रिभिन्नस्वरलङ्घित ।
त्रिभिन्नलीनस्फुरितकम्पिताहतसज्ञक ॥१२२॥

प्रतिगृहीतोल्लासितभ्रामिताहतहुम्फिता (त) ।
पञ्चयोगभवा ( ) पञ्च मिश्रभेदा ( ) प्रकीर्त्तिता ॥१२३॥

तिरिपान्दोलितवलित्रिभिन्नकुरुलाहत ।
तीक्ष्णप्रेरितसूक्ष्मान्तह्रस्वदीर्घप्लुताह्वय ॥१२४॥

यन्त्रच्छायावाद्यशब्दतीक्ष्णप्रेरितहुम्फित ।
वहनीढालयन्त्रोत्यस्थिराकुञ्चितहुम्फित ॥१२५॥

दीर्घकम्पितसूक्ष्मान्तभ्रामितस्थायुकाहत ।
तिरिपान्दोलितक्षिप्तकुरुलाहतहुम्फित ॥१२६॥

एव षण्मिश्रभेदा स्यु षट्सयोगभवा( ) स्फुटा ।
[1] षट्षष्टिरेव सप्रोक्ता मिश्रभेदा समासत ॥१२७॥

अनन्तत्वान्न शक्यन्ते वक्तु कार्त्स्न्येन केनचित् ।
अन्यानपि पथानेन विदाङ्कुर्वन्तु तान् विद ॥१२८॥

ननु मिश्रस्य भेदानां नोच्यन्ते केन हेतुना ।
नामा यत्र, यतस्तेषां नियत नाम किंचन ॥१२९॥

[1] S R 3 178–88 speaks of only 36 mixed varieties

चतुरस्रं तथा वज्रमुपपाताभिधं तथा ।
सप्तेमानि यथाशास्त्रमेतेषां लक्ष्म चक्ष्महे ॥२२६॥

यथापरान्तके वस्तु पूर्वमुक्तं चतुष्कले ।
तद्वदत्र भवेत् पादः प्रतिपादोऽपि तादृशः ॥२२७॥

तदनन्तरतः कार्यः किन्त्वन्यपदनिर्मितः ।
पादस्यैवोत्तरार्द्धेन प्रतिपादं समं परे ॥२२८॥

जगुर्यथाक्षरेणान्ये षद्पितापुत्रकेण च ।
अङ्गमाहुः शीर्षसंज्ञं तदनन्तरतः पुनः ॥२२९॥

द्विकलेनोत्तरेण स्यान्मापघाताख्यमङ्गकम् ।
अपरान्तकवत्तस्मात् परं स्यादुपवर्तनम् ॥२३०॥

यथाक्षरे पञ्चपाणावेतत्संपिष्टकात् परम् ।
केचिदाहु. परे प्राहुरुभाभ्यामथवा परम् ॥२३१॥

संपिष्टकान्मापघातादुपवर्तनतः परम् ।
उपवर्तनवत् सन्धिः पञ्चपाणौ यथाक्षरे ॥२३२॥

युग्मप्रवृत्तवत्तस्मा(द्) द्विकलोत्तरतालतः ।
चतुरस्रन्ततो वज्रं यथा वर्णोत्तरेण तु ॥२३३॥

सन्धिवत् स्यात्ततः संपिष्टकं द्वादशभिः स्मृतम् ।
कलाभिर्दशभिर्वापि तत्र स्याद् द्वादशाङ्गके ॥२३४॥

संपिष्टकं दशकलं तनूद्वादशकं पुनः ।
ओवेणके तु सप्ताङ्गे केचिदङ्गेऽन्यथा पुनः ॥२३५॥

व्यवस्थामाहुरत्र स्याद् वर्णैर्द्वादशभिर्युतम् ।
द्वादशाङ्गं तु सप्ताङ्गं वर्णैः सप्तभिरन्वितम् ॥२३६॥

पक्षे दशकले चेह चतुर्थी पञ्चमी कले ।
स्याज्ये द्वे तत्र पाता(:)स्युर्निष्क्रामप्राक् त्रयं त्रयम् ॥२३७॥

[1]पृथक्श(स्) तालयोः शम्यातालौ द्विर्द्वादशः पुनः ।
सन्निपात इति प्रोक्ता द्वादश द्वादशाङ्गके ॥२९८॥

कला(:) स्युर्द्वादशस्तत्र पातानां पृथगीरणात् ।
व्यवस्थेयं दशकले निगदा गदिता बुधै. ॥२३९॥

स्यातां वेणी प्रवेणी च पञ्चपाणौ यथाक्षरे ।
द्विकले वा भवेदन्ते अ(इ)यवा चतुरस्रतः ॥२४०॥

---

[1] पृथक् पतालयो. can also be a possible reading.

यथाक्षर(ः) स्या(द्) द्विकलश्चतुरस्रस्तयोरिह ।
अथवेमे क्रमात् स्यातां पञ्चपाणौ यथाक्षरे ॥२४१॥

पूर्वापरा तु द्विकले तस्मिन्नेव मुनेर्मतात् ।
प्रवेण्यनन्तरं यद्वा द्विकलोत्तरतालतः ॥२४२॥

केषांचन मते नेह गातव्यमुपवर्तनम् ।
तदा पातोत्तरार्द्धस्य तालेन परिगीयते ॥२४३॥

उपपातो मते तेषां द्विकलेनोत्तरेण वा ।
उपपातानन्तरतो यद्यन्तो नास्ति कर्हिचित् ॥२४४॥

तदान्ताहरणं नाम वैकल्पिकमिहेष्यते ।
अन्ते सति भवेदन्ताहरणं निर्विकल्पकम् ॥२४५॥

ओवेणके तु सप्ताङ्गे युग्मो(ऽ)युग्म इति द्विधा ।
भवेदन्तो द्वादशाङ्गे त्रिधा मिश्रविमिश्रितः ॥२४६॥

उल्लोप्यके तु यल्लक्ष्म प्रोक्तमन्तादितो मया ।
तदेवौवेणकं ज्ञेयं लक्ष्ममर्मविदा विदा ॥२४७॥

विविधाङ्गं भवेद्वेण्यं प्रवेण्यं च प्रवृत्तकम् ।
भरताचार्यसम्मत्या विशाखिलमते पुनः ॥२४८॥

[1]वेण्यां प्रवृत्तं विज्ञेयं प्रवेण्यामवगाढकम् ।
पादोपपात(द) संपिष्टेष्ववदन् विव(वि)धं बुधाः ॥२४९॥

विव(वि)धंककयोरन्यतरवद्वज्ये समीरितम् ।
नित्यमेककमाख्यातमाचार्यैरुपवर्त्तने ॥२५०॥

चतुरस्रे तु विव(वि)धमेककं वा मतान्तरात् ।
कश्चित् कलाविनिर्मुक्तमेककं त्ववपाणिना ॥२५१॥

प्रयुज्य तालभागे तु कलास्वष्टासु तत्त्वतः ।
[2]गातव्यं विव(वि)धं प्राह [3]कलायोगोपलालितम् ॥२५२॥

अन्तं गीतिपदावृत्तियुक्तमिच्छन्ति सूरयः ।
ओवेणके तु सप्ताङ्गे द्वादशाङ्गे तु मन्वते ॥२५३॥

पृथक्पदं तुल्यगीतिगानयोगेन पेशलम् ।
मापघाते द्वितीयादिकलासु तिसृषु क्रमात् ॥२५४॥

---

[1] cf. S. R. 5. 158-62 for 249-55 above.

[2] B. ज्ञातव्य ।

[3] B, काल० ।

सम्यानिष्क्रामतालाः स्युस्तथा संपिष्टके पुनः ।
निष्क्रामः प्रथमं शम्यास्तिस्रस्तालास्त्रयस्ततः ॥२५५॥

शम्यातालौ द्विरावृत्तौ सन्निपातोऽन्तिमस्ततः ।
इति पातविधानेन युक्तमोवेणकं व्यधात् ॥
प्रत्यर्थिपातकालज्ञोऽप्यस्य प्रस्तार ईर्यते ॥२५६॥

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
आनिविता आनिविप्र आनिविश आनिविता आनिविश आनिविश । इति पादः एतत् । एवमेव प्रतिपादः । पादोत्तरार्द्धं वा यथा ।

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽ।ऽऽ।ऽ
आनिविता आनिविश आनिविशं । इति प्रतिपादः । सं ता श ता श ता ।

ऽ।ऽऽ।ऽ ऽऽऽऽऽऽऽऽऽऽऽऽ
इति वा प्रतिपादः । सं ता श ता श ता । इति शीर्षकम् । निशनिता नितानिश ताप्रनिसं । इति मायघातः ।

ऽ।ऽऽ।ऽ ऽ।ऽऽ।ऽ ऽऽऽऽ
संताशताशता । इत्युपवर्त्तनम् । संताशताशता । इति सन्धिः । नि श श ता

ऽऽऽऽ ऽ।ऽऽ।ऽ ऽऽऽऽ
श ता ता सं । इति चतुरस्रः । शं ता श ता श ता । इति ज्ञेयम् । नि श श ता

ऽऽऽऽ ऽऽऽऽऽऽऽऽऽऽ
श ता ता सं । इति दशकलं संपिष्टकम् । निप्रताशनितानिप्रनिसं । इति वा दशकलं[1]

ऽऽऽऽऽऽऽऽऽऽऽऽ ऽ।ऽऽ
संपिष्टकम् । निशशशताताताशताशतासं । इति द्वादशकलं संपिष्ट(क)म् । संताशता-

।ऽ ऽऽऽऽऽऽऽऽऽऽऽऽ
शता । एवमेव प्रवेणी । इत्येकपक्षः । अथवा । निप्रतिताशनितानिशताप्रनिसं । इति

ऽऽऽऽऽऽऽऽऽ
द्विकलोत्तरेण [2]वेणी । एवमेव प्रवेणी । इति द्वितीयपक्षः । यद्वा शताशतानिशनिताश-

ऽऽऽ ऽऽऽऽऽऽ
प्रनिशं[3] । इति वेणी, एवमेव प्रवेणी । इति तृतीयः पक्षः । यद्वा । संताशताशता ।

ऽऽऽऽऽऽऽऽऽऽऽऽ
इति वेणी । निप्रताशनितानिशताप्रनिसं । इति प्रवेणी । इति यथाक्षरद्विकलचतुरस्राभ्याम् ।

ऽऽऽऽऽऽऽऽऽऽऽऽ
इति चतुर्थः पक्षः । निप्रताशनितानिशताप्रनिसं । इति केचन[4] । प्रवेण्यन्तरं द्विकलोत्तर-

ऽऽऽऽ ऽऽऽऽ ऽऽ
तालेन उपवर्त्तनम् । आनिविता आनिविश । इति वा द्विकलोत्तरतालेनोपपातः । संता-

ऽऽऽऽ
शताशता । इत्यन्ताहरणम् । अतश्च सप्ताङ्गे द्विविधः । द्वादशाङ्गे त्रिविधः स तु उल्लोप्यकप्रस्तारतः ज्ञेयः । इति ओवेणकं समाप्तम् ।

---

[1] A. B. दशवलक । [2] A. B. प्रवेणी ।
[3] B. स । [4] A. B. add मते ।

रसाना लाभसतुष्ट कालसेनो [१]रसाधिप ।
रसति स्वेच्छया गीत रोविन्दकमिह स्फुटम् ॥२५७॥

लाभार्थे विदते शेषषष्ठ्यर्थे कनि कर्त्तरि ।
भावे क्विपि रसैर्वा रो रोविन्दकमिति स्फुटम् ॥२५८॥

पादो रोविन्दके कार्य षडिभर्मात्राभिरञ्चित ।
प्रतिपादस्तद्वदेव किंत्वन्यपदनिर्मित ॥२५९॥

[२]पादस्यान्त्ये कलाषट्के प्रतिपादस्य चान्तिमे ।
प्रस्तारसज्ञिका गीतिरेकैवात्र प्रगल्भते ॥२६०॥

अत्रैका गीतिमिच्छन्ति केचिदेतत्कलाष्टके ।
प्रतिपादस्य या अन्त्या कला द्वादश कीर्त्तिता ॥२६१॥

शरीर तत्स्यया गीत्या द्विकलोत्तरलालत ।
प्रतिपादानन्तर स्याद् विधेयमिह सूरिभि ॥२६२॥

तत्र त्रिचतुरा कार्या प्लुताकारा प्रयत्नत ।
मध्ये मध्ये च तेष्वत्र वृत्त स्यात् पूर्वलक्षितम् ॥२६३॥

वृत्तस्योर्ध्वमधश्चैव स्वेच्छया विविधादिकम् ।
विधेयमङ्ग तस्याद्ये कलाषट्क उपोहनम् ॥२६४॥

विव(वि)धो वा प्रवृत्त वोपोहनेऽप्यङ्गमिष्यते ।
उपोहनमविज्ञेयमङ्गमङ्गविदा सदा ॥२६५॥

केचिच्छरीरे(ऽ)पीच्छन्ति विव(वि)धो वा प्रवृत्तकम् ।
अङ्गमङ्गविचारज्ञा न तदाचार्यसम्मतम् ॥२६६॥

शरीरानन्तर केचित् षट्पितापुत्रकेण च ।
उपवर्त्तनक गेय न गेय केचनाम्यधु ॥२६७॥

शीर्षक गीतकस्यान्ते पञ्चपाणौ यथाक्षरे ।
शीर्षक पञ्चधा गेयमिति केचन मन्वते ॥२६८॥

गीतावृत्तिमुपाश्रित्य पदावृत्तिमथापि च ।
उभयावृत्तिमाश्रित्य द्विस्त्रिरावृत्तिमेव च ॥२६९॥

आवृत्त्या(ऽ)थो विना यद्वा प्रथमावृत्तिरत्र तु ।
गेयाकारैस्तु कर्त्तव्य तत्र चैककमङ्गकम ॥२७०॥

[१] B नराधिप ।
[२] cf. S R 5 165-72 for 260 70 above

प्रवृत्तेन पदैर्युक्ता द्वि (तीया परिकीर्त्तिता) ।
.................................... ॥२७१॥

[1]अत्र पत्रमेकं त्रुटिकम् ।
........................................................... ।

(त ?)दोत्तरः स्यात् सुविचारणायां यदत्युत्तरं गीतकमार्यवर्यः ॥२७२॥

[2]मात्रा चतुष्कलाद्या स्यादुल्लोप्यकवदुत्तरे ।
द्विकलोत्तरतालेन ततः शाखा विधीयते ॥२७३॥

शाखावत् प्रतिशाखा स्यात् पादैरन्यैर्विनिर्मिता ।
द्वादशाङ्गा परा शाखा षडङ्गा त्वपरा स्मृता ॥२७४॥

आकारहीना कर्त्तव्या मुखप्रतिमुखान्विता ।
शाखाया(:) प्रतिशाखाया गातव्यं मध्यदेशगम् ॥२७५॥

यथाक्षरे पञ्चपाणौ भिन्नगीतिमुपाश्रिता ।
मध्यान्तयोश्च वा [3]गीतेनैककलेन विधीयते ॥२७६॥

युग्माधिकेभ्यो(ऽ)न्यतरो त(य)तो(ऽ)न्तः परिगीयते ।
नवान्तं केचन प्राहुरुत्तरे गीतकोविदाः ॥२७७॥

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
अस्य प्रस्तारः । आनिविश आनिविता आनिविश आनिविसं । (इति)

ऽ ऽ ऽ ऽ ऽ ऽ
शाखा । (इ)यमेव प्रतिशाखा । सं ता श ता श ता । इति शीर्षकम् । युग्माधिकेभ्योऽन्यतरोऽन्तः । रोविन्दकवदङ्गकल्पना । इत्युत्तरः समाप्तः ।

[4]मार्गद्वयं मन्द्रकादेः [5]शठछत्रकभेदतः ।
[6]शठ(:) स्यादङ्गसंक्षेपात् छत्रकस्त्वङ्गविस्तरात् ॥२७८॥

एतेषां विकृता भेदा(स्) त्रयमार्गानुसारतः ।
भवन्ति बहुधा ते च स्वयमूह्या विपश्चिता ॥२७९॥

कालसेनोपदेशाद्या ज्ञातव्याः शास्त्रवेदिभिः ।
छन्दकं सर्वगीतान्ते गदितं पूर्वसूरिभिः ॥२८०॥

---

[1] B. omits अत्र ।
[2] cf. S. R. 5. 175-77 for 172-75 above.
[3] A. B. reading of गीते is not clear, looks like कट ।
[4] cf. S. R. 5. 178-81 for 278-83 above.
[5] [6] S. R. षड्ड ।

शरीर तस्यान्यतर स्या(त्) त्र्यस्रचतुरस्रयो ।
यं केश्चित् स्वेच्छया बद्धैरङ्गैर्नवभिरञ्चितम् ॥२८१॥

चतुरस्रेण तालेन चतुरस्रमिहोदितम् ।
अङ्गैश्चतुर्भि सहित शरीर छन्दकस्य तु ॥२८२॥

तथैव त्र्यस्रतालेन निबद्ध त्र्यस्रमुच्यते ।
सन्यस्येत् स्वेच्छया यास्मिन् वर्णाङ्गान्यथवा स्फुटम् ॥८३॥

तालाङ्गान्यपि वा(ऽ)स्यान्ते शीर्षक तु विधीयते ।
चक्रमस्य तु केनापि गीतकोक्तमुखेन हि ॥२८४॥

पूर्वमुक्तेन पादेन मुखतालेन वा पुन ।
अस्मिन् प्रतिमुख नाम विधेय गीतवेदिना ॥२८५॥

यत्तच्छन्दानु(ग) तस्मिन्नङ्गानां न्यसन मतम् ।
ततो(ऽ)स्य छन्दक नाम विहित पूर्वसूरिभि ॥२८६॥

ऽ ऽ ऽ ऽ  ऽ । ऽ ।

अस्य प्रस्तार । शताशता । इति चतुरस्र शरीरम् । शलाशता । इति त्र्यस्र शरीरम् । अस्य मुख तु गीतकान्तमुखवत् । प्रतिमुख तु मुखवत् पादबद्धम् । अन्ते येन केनचित शीर्षकेण सदृश (श) शीर्षकम् । इति छन्दक समाप्तम् ॥

सप्तलोकैकविख्यातमहिम्ना कृष्णभूभुजा ।
सप्तगीतकविन्यास शास्त्रमार्गेण दर्शित ॥२८७॥

आसारित जगति येन यशो(ऽ)द्वितीय
नि॰सारित रिपुकुल सकलोर्वराया ।
प्रोत्सारित द्विजकुलात सकल दरिद्र-(च दैन्य )
मासारित वदति सोऽत्र कृतीवरेण्य ॥२८८॥

[1]चतुर्धासारित ज्ञेय कनिष्ठ च लयान्तरम् ।
*मध्यमासारित नाम ज्येष्ठासारितमित्यपि ॥२८९॥*

कनिष्ठे तत्र विज्ञेया कला सप्तदशासु च ।
युग्म स्यात्कलिको द्वौ च पञ्चपाणी यथाक्षरं( ) ॥२९०॥

गुर्वन्ते मुक्तकस्तेषा कलाविधिरथोच्यते ।
सम्यातालो द्विरम्यस्तो सन्तो च द्वि शतो च स ।
ताद्वि॰ शताद्वय पाता( ) सप्तपातो(ऽ)न्तिमस्तथा ॥२९१॥

ऽ।  ऽऽ  ।ऽ  ऽऽ  ।ऽ  ऽ।  ऽऽ  ।ऽ  ऽ
शता शता सता शता शता सता शता शाता स ।

इति कनिष्ठासारितम् ।

---

[1] cf S R 5 182 86 for 289 93 above

लयान्तर कनिष्ठे(तु) व्याख्यातमिह तत्र च ।
कनिष्ठासारिता(ज) ज्ञेय द्वैगुण्य लयमार्गयो ॥
वर्द्धमाननामत [1] केचित् स्वतन्त्रमिद जगु ॥२९२॥

अस्य प्रस्तार कनिष्ठासारितप्रस्तारवत्(ज) ज्ञेय ॥ इति लयान्तरम् ॥

मध्यमासारिते ज्ञेया उत्तरा द्विकलास्त्रय ।
तेषामाद्या( ) कलास्तिस्रस्त्यजेदाद्यस्य तद्यथा ॥२९३॥

ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ
शनिता निशता प्रनिस निप्रता शनिता निशता प्रनिस निप्रता शनिता निशता प्रनिस ।

इति मध्यमासारितम् ।

आसारिते तु ज्येष्ठे स्यु षड्पितापुनकास्त्रय ।
तत्राद्यस्य कला(.) सप्त प्रथमा परिवर्जयेत् ॥२९४॥

| | | | | |
|---|---|---|---|---|
| ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ |
| आनिविश | आनिविता | आनिविश | आनिविस | आनिविप्र । |
| ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ |
| आनिविप्र | आनिविश | आनिमिता | आनिविश | आनिविश । |
| ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ |
| आनिविप्र | आनिविप्र | आनिविता | आनिविश | आनिविस[2] । |

[3]कलाभि पञ्चभि षड्भि सप्तभिश्चाष्टभि क्रमात ।
एतेषूपोहनानि स्युरिह वस्तुत्रय पृथक् ॥२९५॥

विज्ञेय सन्निपातान्तमयास्मिभङ्ग कल्पना ।
एषामुपोहनमुक्त[4] कनिष्ठे च लयान्तरे ॥२९६॥

आसारिते प्रतिमुख युग्मतालेन गीयते ।
मध्यमे तु प्रतिमुख युग्मतालेन गीयते ॥२९७॥

मध्यमे तु प्रतिमुखमाद्या अष्टौ कला स्मृत (ता) ।
कला षोडश आद्यश्च ज्येष्ठे प्रतिमुख स्मृत ॥२९८॥

ज्ञेयौ शरीरसहारौ त्र्यस्रतालेन निर्मितौ ।
विभक्ताङ्गेष्वेव पुन शम्याशम्येव मुक्तिका ॥२९९॥

---

[1] A वर्द्धमाना मत, B वर्द्धमाना मत ।
[2] B श ।
[3] cf S R 5 187-94 for 295-307 above
[4] A मुपोहन वक्त (B वक्र) ।

पादभागान् विहाय श्रीनाद्यानङ्गुलिकर्मणि ।
विभक्ताङ्घ्रिषु शम्या(:)स्युरविभागे पुनर्भवेत् ॥३००॥

यथोक्तमङ्गुलीकर्मापोहनेषु पुनर्मते ।
आदावन्ते च गुरुणी कलयोस्तु द्वयोर्द्वयोः ॥३०१॥

कला(:)स्युर्लघवो मध्ये कनिष्ठादिषु तद्यथा ।
अष्टौ च द्वादश तथा षोडशा अपि विंशतिः ।-३०१॥

सर्वेषूपोहनेषु स्यात्(द्) ध्रुव. पातो(ऽ)न्त्ययोः पुनः ।
कलयोः स्या(द्) द्वयोरेकैकाक्षरं गुरुरूपकम् ॥३०३॥

शेषाः कलाश्चतुर्मात्रैर्गणैः कार्या विजानता ।
ध्रुवपाते बुधैर्ज्ञेयो मार्गो(ऽ)पि ध्रुव एव हि ॥३०४॥

अन्यैरपोहनान्याहुर्मात्राभिर्ध्रुवकादिभि ।
युक्तानोहक्रमेणैव प्रयोज्यानीति केचन ॥३०६॥

केचिदासारितान्याहुर्मुखाङ्गेन विना बुधा ।
अत्रान्तकलयोरेकं गुरुवर्णं पृथक्(ङ) न्यसेत् ॥३०६॥

अन्या(.) कलाश्चतुर्मात्रवर्णा(गणाः) कार्या यथाविधि ।
चतुष्टयं चतुर्मात्रिगणानां स्याद्यदा युजि(:)॥३०७॥

कनिष्ठेति(तु) तदा ज्ञेयं द्वितीये च यथाक्रमम् ।
षट्कं च सार्द्धषट्कं च कुर्यादिति मुनेर्मतात् ॥३०८॥

· लयान्तरितमप्येवं स्वतन्त्रमपि येऽभ्यधुः ।
लयमार्गविरूपत्वात्तन्मते तत्तः पृथक् ॥३०९॥

मध्यमासारिते युग्मभागे(ऽ)ष्टौ कथिता गणाः ।
ओजे तु द्वादशान्ये स्युर्द्वितीये(ऽ)प्ययोजिताः ॥३१०॥

ज्येष्ठे तु षोडश स्युश्चतुर्विंशतिरुत्तरे ।
द्वितीये तूत्तरे सार्द्धे गणाः शास्त्रनियन्त्रिताः ॥३११॥

विभक्ताङ्गासारितेषु सन्निपाते तु मध्यमे ।
गणो वाथ गणार्द्धो वा कर्तव्य इति नोदना ॥३१२॥

[1]यथाक्षरं द्विसंख्यातत्रिसंख्यातविभेदतः ।
आसारितानि सर्वाणि त्रिविधानि मुनेर्मतात् ॥३१३॥

---

[1] cf. S. R. 5. 195.

उपतष्पैनिजेच्छात स्थितिलंघ्वादिभिर्गुणै ।
आर्वात्तताक्षरपय यथाक्षरमिहोच्यते ॥३१४॥

एकयैव द्विसख्यात विवृत्य परिकोर्त्तितम् ।
द्विसख्यात भवे (द्) द्वाभ्या निवृत्तिभ्या समन्वितम् ॥३१५॥

विलम्बितलयेनादौ (गो)त्वा मध्यलयेन तु ।
कार्या निवृत्तिरित्युक्ता(क्त) द्विसख्याते पुरातनै ॥३१६॥

एव निवृत्ति ( ) प्रथमा त्रिरावृत्ते(त्त)त परा ।
निवृत्त्या तु द्वितीयस्या कार्यो द्रुतलयो बुधै ॥३१७॥

[1]यथाक्षर सर्वमार्गे त्रिसख्यात तु दक्षिणे ।
दक्षिणे वार्त्तिके नैव(चैव)त्रि(द्वि)सख्यात प्रकीर्त्तितम् ॥३१८॥

स्वतन्त्र धा वर्द्धमान यन्मते स्याल्लयान्तरम् ।
कनिष्ठ वार्तिके चित्रे तन्मते कीर्तित भवेत् ॥३१९॥

यस्मात् कनिष्ठा(द्)द्विगुण(ण) लयमार्गलयान्तरम् ।
यदि तत्र कनिष्ठाख्य दक्षिणेऽपि प्रयुज्यते ॥३२०॥

तदा त(द्)द्विगुणस्यास्य मार्गस्यानुपलम्भनात् ।
लयान्तरस्योदयन न भवेदिति निश्चय ॥३२१॥

केचिदन्ये वदन्त्यत्र ध्रुवकासारितान्यपि ।
तान्येव ध्रुवमार्गेण स्युरनावर्त्तनादिभि ॥३२३॥

ध्रुवासारितमावृत्य विधुर केचिदभ्यधु ।
ध्रुवमार्गत्वतो यस्मात् कलिक स बुधै स्मृत ॥३२५॥

यथा —

ऽऽ ।।।।।।।।।ऽऽ
देव[2] हिमकरकिरणसनायम । इति कनिष्ठासारितस्य । एवमन्यान्यप्यूहनीयानि । अथ सर्वासारितस्योदाहृति सम्य(ग्)गीयते ।

| | | |
|---|---|---|
| मा मा मा मा री री री री<br>द्वे ० ० ० द ० ० ०<br>श | धा धा नी सा धा नी सा सा<br>व ० ल ० ग ० क ०<br>ता | धा सा धा नी धा पा पा पा<br>ज ० ० ० ० ० ० ०<br>श |
| धा सा धा नी मा मा मा मा<br>मु ० दु ० ० ० ० ०<br>ता | इत्युपोहनम् । | |

[1] cf S R 5 197-98
[2] A B. देवां हेमकर- ।

| | | |
|---|---|---|
| मा पा धनि धा सा रिग सा सा<br>दे[1] ० व० ० दे ०० वै ०<br>स | सा सा धनि सम नी पप मा सा<br>स ० स्तु० त० च रि० ० त<br>ता | सा नी धा पा पध निधप मा मा<br>दै ० त्यै ० य० ००० क्षै- ०<br>श |
| पा पा धनि धा सा धनि धा धा<br>र्ना ० गै० ० पि तृ० प ति<br>ता | धा सा धा नी ऽ पध निध मा मा<br>सि ० द्धै ० स० त० त<br>श | मा मा मा मग ऽ सा सग मा मा<br>प्र ण मि त० च र० ण ०<br>ता |
| मा मा मा पम ऽ गा सग मा मा<br>त्रै ० ० ०० ० ०० ० ०<br>स | धा मा धा सा पा मा धा मा<br>लो ० ० ० ० ० ० ०<br>ता | री गा री गा ऽ सा नी सा (सा)<br>क्य ० ० ० ० ० ० ०-<br>श |
| धा धा सा सा ऽ धा धा नी नी<br>हि ० त ० ० ० ० ०<br>ता | मा मा मा धा पा मा मा धा<br>रु ० ० ० द्र ० ० ०<br>श | धा धा निस सनि धा धा री री<br>श र ०० ण० म ह मु प<br>ता |
| धा मा धा सा ऽ मा मा मा पा<br>ग त ० ० ० ० ० ०<br>स | इति कनिष्ठासारित, इदमेव लयमार्गद्वैगुण्येन गीयमान लयान्तर भवति ॥ | |

| | | |
|---|---|---|
| सा मग रिग सा ऽ मग मा मा मा<br>शु ०० ०० द्ध ०० ० ० ०<br>श | धा नी गा री ऽऽ गा मा मा मा<br>ज ० ग ति य ० ० ०<br>निता | धा धा नी मा ऽऽ धा नी सा सा<br>य ० लि ० त ० क ०<br>निश |
| धा सा धा नी ऽऽ धा मा मा मा<br>दि ० गि ० नि ० गि ०<br>ताप्र | धा सा धा सा ऽऽ सा सा मा मा<br>कु ० च ० ज ० ल ०<br>निसं | धा सा सा नी ऽऽ मा मा मा मा<br>शु ० ० ० द्ध ० ० ०<br>निप्र |

इत्युपोहनम[2] ।

---

[1] The verbal structure is as follows —

देव देवै सस्तुतचरित,* दैत्यैयक्षैर्नागै पितृपतिसिद्धै,
सततप्रणमितचरण, त्रैलोक्यहित रुद्र शरणमहमुपगत ॥

* A B नमित ।

[2] B adds समाप्त श्री ।

| | | |
|---|---|---|
| सा मा गा मगरिऽसा गगध गा मा<br>[1]भू ० ता ००० यि प०० ति ०<br>ताश | धा धा नी नी ऽऽ मम मा सा सा<br>म ग ने ० त्र० ह र ०<br>नित | सा सा गा मग ऽऽ री मनि सा सा<br>भ ग ने ०त्र ह र० ० ०<br>निश |
| मा गा सा सा ऽऽ धा नी धा सा<br>दे ० व ० ० ० ० ० | धध निनि मा धा ऽऽ सा सा सा सा<br>ग० ज० च ० र्म ध र ०<br>निस | सा सा धनि सा ऽऽ धनि धप मा मा<br>रौ ० द्र० श र० ण० ० ०<br>ताप्र |
| धा धा पप पा ऽऽ धध निस सा सा<br>रौ द्रा भय द गज चम ध र<br>ताश | सा सा सा सा ऽऽ मा मा मा मा<br>ज्व ल न नि भ ज ट ०<br>निता | सा सा गम मग ऽऽऽ रिस मग सा सा<br>भु ज ग० प० चि० कु० र ०<br>नि श |
| मा नी धा नी ऽऽ सा सा सा सा<br>ह ० ष्ट ० श र ण ०<br>ता प्र | धा धा नी नी ऽऽ सा सा सा सा<br>म हु मु प ग त ० ०<br>नि स | इति मध्यमासारितम् । |
| ऽऽऽऽ<br>मा मा मा मा पा धा पा मा<br>मु ० ० ० ट ० ० ० | ऽऽऽऽ<br>धा नी धा नी नी धा धा पा<br>ज ० ग ० ति ० य ० | ऽऽऽऽ<br>धा धा नी नी सा सा सा सा<br>दि ० ग ० नि ० गि ० |
| ऽऽऽऽ<br>धा मा नी सा सा सा सा सा<br>नि ० ति ० म ० ल ० | ऽऽऽऽ<br>धप निस सा सा सा सा धा सा<br>कु० च० ० ० म ० ल ० | ऽऽऽऽ<br>धा सा धा नी नी धा धा मा<br>मु ० ० ० ट ० ० ० |

इत्युपोहनम् ।

| |
|---|
| मा मा मा मा ऽ मा मा मा मा<br>अ म र ० प्र व र ०<br>श |

ऽऽऽऽ
धा धनि निध धप मा मा गा मा सग मा मा मा मा मा गा मा
म द० ०० नां० ० ग ह र ०० अ म र प्र व र ०
आनिविन

[1] The verbal structure is as follows —
भुजगाधिपतिर *भगनेत्रहरं, भगनेत्रहरं देव, गजचर्मधर रौद्रं
[illegible], रौद्रमदद गजचर्मधर ज्वलनतिलकं,
भुजगाधिपतिः, [illegible] ॥
* A भग्नेत्र हर । B भग्नेत्र हर ।

ऽऽऽऽ

धा धा निनि नी मा मग सा सा　री गरि गा नी गा मा सा सा
अ म र० ० प्र व० रं ० म द० नां ० ग ह रं ०

आनिविता

---

ऽऽऽऽ

धा धा नी नी धा धा सा सा　नी धा पा पा धा पा सा सा
प्र ण ता म र पि तृ ग　ण न त च र णं ० ०

आनिविसं

---

ऽऽऽऽ

पा धा नी धा पा मा मा धा　मा सा मा मा मा मा सा सा
प्र ण ता म र पि तृ ग　ण न त च र णं ० ०

आनिविप्र

---

ऽऽऽऽ

सा सा सा सा नी नी धा नी　धा धा सा सा नी नी सा मा
पृ थ्वी स लि लौ ज्व ल न　प व न सू र्या च ० न्द्रौ

आनिविता

---

ऽऽऽऽ

मा मा मा मा मा मा मा मा　मा मा मा मा री री गा सा
सू ० र्या च ० न्द्रौ य ज　मा ० ना ० का ० शं ०

आनिविश

---

ऽऽऽऽ

| | | | |
|---|---|---|---|
| मामामामा | मामामामा | रीगामामा | सासामामा |
| सू ० र्यं ० | सो ० मं ० | य ० ज्ञा ० | धिपतिं ० |

आनिविता

---

ऽऽऽऽ

| | | | |
|---|---|---|---|
| धाधासाधा | नीनीसामा | मामामामा | मामामामा |
| विकृतैः ० | विमुखैः | विकटैः ० | प्रमथैः ० |

---

* The verbal structure is as follows :—
अमरप्रवर, मदनाङ्गहर, अमरप्रवर, अमरप्रवर, मदनाङ्गहर, प्रणतामरपितृगणनतचरण, प्रणतामरपितृगणनतचरण, पृथ्वीसलिलौ, ज्वलन पवन सूर्याचन्द्रौ, सूर्याचन्द्रौ यजमानाकाश, सूर्यं सोम यज्ञाधिपतिं, विकृतैः, विमुखैः, विकटैः, प्रमथैः, सतत परिवृततनुमहमीश प्रणमे।

ऽ ऽ ऽ ऽ

| | | | |
|---|---|---|---|
| धाधानीधा | धासासासा | मामामामा | मामामामा |
| स त सं प | रि वृ त त | नु म हू मी | शं प्र ण मे |

आनिविसं

---

इति ज्येष्ठासारितम् ।

(इति) त्रयोदशविधमासारितम् ।

वर्द्धमानमथो वक्ष्ये विस्तरात् खण्डिकातनुम् ।
तत्सापेक्षतया तासामग्रतो वच्मि लक्षणम् ॥३२६॥

[1]चतस्रस्ता विशालाद्या संगता च सुनन्दिका ।
सुमुखा चेति तत्र स्याद् विशालायां कला नव ॥३२७॥

मध्यमासारितस्याद्यवस्तुवत्ताल ईरितः ।
उपोहनं कला(ः) पञ्च कनिष्ठासारिते [2]तथा ॥३२८॥

शम्यातालौ द्विरावृत्तौ सन्निपातस्ततः परम् ।
गुरुद्वयं भवेदादावन्ते गुर्वेकमिष्यते ॥
चतुर्दशलघूनि स्युर्मध्यतो(ऽ)स्यामुपोहने ॥३२९॥

शताशतासं । इति विशालायामुपोहनम् ।

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
श नि ता नि श त(ता) प्र नि सं नि प्र ता श नि ता नि
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
श ता प्र नि सं नि प्र ता शनि तानि शता प्रनि ॥

इत्येषा चतुरावृत्तिवशाद्विस्तीर्णसंगता ।
यतस्ततो विशालेति राजराजेन कीर्तिता ॥३३०॥

॥ इति विशाला ॥१॥

संगतायामष्टकला द्विकलो युग्म ईरितः ।
तालस्तस्या(ः) षट्कलं स्यादुपोहनमिति स्थितिः ॥
उपोहने संगताया द्विकलस्त्र्यस्र ईरितः ॥३३०॥

ऽ ऽ ऽ ऽ ऽ ऽ
निशतासनिसं । इति संगताया उपोहनम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निशतानिताशप्रनिसं । इति संगता ॥२॥

---

[1] cf. S. R. 5. 200-218 for 327-58 above.

[2] A. यथा ।

सुनन्दा षोडशकला तालो युग्मश्चतुष्कलः ।
उपोहनं सप्तकलं युग्मस्तालो यथाक्षरः ॥३३२॥

ऽऽऽऽ
शताशता । इति सुनन्दोपोहनम् ।
आनिविश आनिविता आनिविप्र आनिविसं ।
इति सुनन्दा ॥३॥

सुमुख्यामिह् विज्ञेया(:) कला द्वात्रिंशदाविता(तः) ।
उपोहनं त्वष्टकलं तत्र तु द्विकलो मतः ॥३३३॥

तालश्चञ्चत्पुटस्तज्ज्ञैः ससुमुख्यामुदाहृतः ।
चतुष्कला द्विरभ्यस्ता(:) [1]प्रस्तारो(ऽ)स्या (:)प्रतन्यते ॥३३४॥

ऽऽ ऽऽ ऽऽ ऽऽ
निश निता शप्र निसं । इति सुमुख्या[2] उपोहनम् ।
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
आनिविश आनिविता आनिविप्र आनिविसं आनिविश आनिविता आनिविप्र आनिविसं
इति सुमुखी ॥४॥

तिसृष्वेतासु विज्ञेया विशालावयुपोहने ।
वर्णा आद्यन्तगा मध्ये लघवः स्युः क्रमादिमे ॥३३५॥

अष्टादशस्तथा द्वात्रिंशतिः षड्विंशतिस्तथा ।
ते चोक्ता ब्रह्मणा पूर्वं नियताः श्रेयसे यथा ॥३३६॥

क्षुष्टुमादौ क्ष(ज)गतिय ततो विलतिका(वलिकिता)इति ।
ततो दिगिनि(दि)गीत्येते [3]ततस्तितिकुचा इति ॥३३७॥

कनिष्ठासरिते ज्ञेया वर्णास्तितिकलाः पुनः ।
लयान्तरेऽधिका ज्ञेया मध्यमासारितेऽधिकाः ॥३३८॥

वर्णा(:) कुचकला ज्येष्ठेऽधिकास्तितिकुचा इति ।
चतस्रः खण्डिका एता यथालक्षणलक्षिताः ॥
यथोक्तेनैव तालेन [4]गातव्या वा ध्रुवेण वा ॥३३९॥

इति चतस्रः [5]खण्डिकाः ॥
एताः क्रमेण निर्दिष्टाः परिवर्त्तं विनापि च ।
भगवान् भरतस्त्वासां परिवर्त्तान् दशावदत् ॥३४०॥

---

[1] A. प्रस्तारो यथोच्यते ।
[2] B. सुमुख्यामुपोहनम् ।
[3] A. B. तदं तितिविचा ।
[4] B शातव्या ।
[5] S. R. कण्डिका all throughout.

[1]सद्वात्रिंच्छतं चात्र कलानां स्याद्यथाविधि ।
कलानामक्षराणां च लयस्य च विवर्द्धनात् ॥३४१॥

यतो(?) स्ववर्द्धमानत्वमभाषन्त पुरातनाः ।
अपरे तु चतु(प्)पक्षं परिवर्त्तं जगुर्यथा ॥३४२॥

विशाला संगताद्या च सुनन्दा संगताविमा ।
सुमुखी च सुनन्दाद्या विशालाद्या च संगता ॥३४३॥

अस्मिन् परिवर्त्तपक्षे तु खण्डिकानां विशालासंगताद्येति क्रमेण प्रस्तारो ज्ञेयः ।

इति खण्डिकावर्द्धमानम् ॥

आसारितानां मध्येऽयो वर्द्धमानं वदाम्यहम् ।
वर्द्धमाननिदानत्वादासारितचतुष्टयी ॥३४४॥

भासतेऽय तद्वदियं तत्तदाभासतामगात् ।
सोपोहनं स्वतालेन युक्तमन्तकलावियुक् ॥३४५॥

खण्डिकान्त्यकलार्द्धेनोपेतं बालं(?)यदा भवेत् ।
तदा [2]कनिष्ठाभासन्तु वर्द्धमानं निगद्यते ॥३४६॥

विशालाया नव कला यदाष्टादशधा कृताः ।
तदोक्तेन [3]प्रकारेण प्रकटीक्रियते ह्यदः ॥३४७॥

ऽऽऽऽऽ
यथा । शताशतासं । इत्युपोहनम् ।

।।।।। ।। ।। ।। ।। ।। ।।
शताशतासं । ताश ताश तासं ताश ताश तासं ।

इति कनिष्ठा(सारिता) भासं वर्द्धमानम् ।

संगतायाः कलाषट्कमादौ कृत्वा प्रगीयते ।
विशाला चेत्तथा तद्वद्गुण्याल्लयमार्गयोः ॥
तदा लयान्तराभासं सत्तालं समुपोहनम् ॥३४८॥

ऽऽऽऽऽ ऽऽऽऽऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽ
शताशतासं । इत्युपोहनम् । शताशता शताशता शतासं ताशताशताशं[4] ॥ इति लयान्तरा(भा)सं । वर्द्ध(मा)नम् ॥

ननु पाता(:) सप्तदश कनिष्ठासारिते स्फुटाः ।
अस्मिन्नवकला(:)साम्यं कथमत्रेति तच्छृणु ॥३४९॥

---

[1] A. B. सद्वात्रिंशत् शतं ।

[2] A. कनिष्ठाभासमिति । B. कनिष्ठाभासामिति : ।

[3] B. omits प्रकारेण ।

[4] B. स ।

गुर्व्…………………कलालोपे कृते सति ।
अपचारिक(त ?)मश्चेष्टं कनिष्ठत्वं पुरातनैः ॥३५०॥

सोपोहना सुनन्दादौ संगता सविशालिका ।
[1]मध्यासारिततालेन गीतास्तिस्रोऽपि चेद्यदा ॥
मध्यमासारिताभासं वर्द्धमानं तदा भवेत् ॥३५१॥

ऽऽऽऽऽऽऽ
शताशताप्रनिसं । इति मध्यमासारिताभासोपोहनम्

| ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ |
|---|---|---|---|---|
| आनिविश | आनिविता | आनिविप्र | आनिविसं[2] | निशनिता |
| ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽऽ | | |
| शप्रनिशं | शनिलानि | शताप्रनिसं । | इति मध्यमासारिताभासम् । | |

सुमुख्यादौ सुनन्दाद्यो संगता सविलासिका ।
ज्येष्ठासारिततालेन गीता सोपोहना यदा ॥
तज्ज्येष्ठासारिताभासं तदा स्याद् वर्द्धमानकम् ॥३५२॥

ऽऽऽऽऽऽऽऽ
निशनितासप्रनिसं । इति उपोहनम् ।

| ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ |
|---|---|---|---|
| आनिविश | आनिविता | आनिविप्र | आनिविसं |
| ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ |
| आनिविश | आनिविता | आनिविप्र | आनिविसं[3] |
| ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ | ऽऽऽऽ |
| आनिविशं[4] | आनिविता | आनिविप्र | आनिविसं |

| ऽऽऽऽ | ऽऽऽऽ | ऽऽ | ऽऽ | ऽऽ | ऽऽऽ |
|---|---|---|---|---|---|
| निशनिता | [5]शप्रनिश | शनि | तानि | शता | प्रनिसं |

इति ज्येष्ठासारिताभासं वर्द्धमानम् ।

आसारित(।)दितानत्वे वर्द्धमानस्य चेष्यते ।
वर्द्धमानासारिताख्या भरताद्यैर्महर्षिभिः ॥३५३॥

विशाल्याद्याः प्रगीयन्ते यदा स्वै(:)स्वैरतालकैः ।
पूर्वोक्तक्रमतो भेदश्चतुर्द्धास्य तदा भवेत् ॥३५४॥

[1] A मध्यमासारित० ।
[2] B. श ।
[3] B. श ।
[4] B. स ।
[5] A. adds प्र before श ।

यथाक्षरा(रं) द्विसंख्यातं त्रिसंख्यातमिति त्रिधा ।
पुनरेतानि भिद्यन्ते पुनः स्युर्मार्गतोऽपि च ॥३५५॥

षट्प्रकाराणि सर्वाणि यथा तद्वन्निरूप्यते ।
यथाक्षराविभित्रितयं मार्गः(र्गे) स्याद्दक्षिणे पुनः ॥
वार्तिके द्वितयं ज्ञेयं चित्रे त्वेकमिहेष्यते ॥३५६॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
एवं प्रस्तारः । वि श नि ता श प्र नि श श नि ता नि श ता प्र नि शं । इति वर्द्धमानाभासं कनिष्ठम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
वि श आ नि वि ता आ नि वि प्र आ नि ता नि प्र आ नि वि शं ।
इति वर्द्धमानाभासं कनिष्ठम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
वि श आ नि वि ता आ नि वि प्र आ नि ता नि प्र आ नि वि सं ।
इति वर्द्धमानाभासं लयान्तरम् ।

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
आनिविश आनिविता आनिविप्र आनिविसं [1]निशनिता । सप्रनिसं शनितानि
ऽऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
शताप्रनिसं । इति वर्द्धमानाभासं मध्यमासारितम् । आनिविश आनिविता आशविप्र
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽऽ
आनिविसं आनिविश आनिविता आशविप्र आनिविसं आनिविश शताप्रनिसं
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
आनिविता आनिविप्र आनिविश निशनिता सप्रनिशं शनितानि ।

इति वर्द्धमानाभासं ज्येष्ठासारितम् ।

वर्द्धमानानि त्रीण्येव तत्रान्त्यद्वितये मतः ।
सर्वपदविधिस्तज्ज्ञैः स्वतन्त्रासारिताश्रयः ॥३५७॥

मार्गभेदविभिन्नत्ववर्द्धमानविमिश्रणात् ।
भेदा(:) स्युर्बहवस्तज्ज्ञैरूहनीयाः स्वबुद्धितः ॥३५८॥
इति [2]पञ्चाशद्भेदानि वर्द्धमानानि ।

वर्द्धमानं यशो वीक्ष्य वर्द्धमानगुणाकरः ।
वर्द्धमानं समतनो(द्)गीतकं गीतकोविदा(दः) ॥३५९॥

---

[1] B. confuses the प्रस्तार of मध्यमासारितम् and ज्येष्ठासारितम् ।
[2] S. R. चतुष्पञ्चाशद्भेदानि ।

[1]या (आ)द्या रोविन्दके मात्रा पाणिकाया मुख तया ।
अङ्गैरष्टभिरश्रेष्ठा वरा षोडशभि स्मृता[2] ॥३६०॥

अङ्गान्यत्र विधेयानि तत्तैवल्लोप्यके यथा ।
आकारान्तरितैरस्यां विदार्य स्यु स्तुते पदं ॥३६१॥

केवलैर्वा स्तुतिपदैराकारैरथ केवलं ।
मुखात् पर प्रतिमुख मुखवत् स्यात् पदान्तरे ॥३६२॥

तत शरीरे चत्वार उत्तरा( ) स्युर्यथाक्षरा ।
ष्टकाङ्केन सैककेन ततो भवेत् ॥
[3]अन्येऽन्ताहरणेनेद सान्त्येनेच्छन्ति सूरय ॥३६३॥

ऽ ऽऽऽ ऽ ऽऽऽ ऽ ऽऽऽ ऽ ऽऽऽ
आनिविप्र आनिविता आनिविप्र आनिविस । इति मुखम् ।
ऽ ऽऽऽ ऽ ऽऽऽ ऽ ऽऽऽ ऽ ऽऽऽ
आनिविप्र आनिविता आनिविप्र आनिविस । इति प्रतिमुखम् ।
ऽ। ऽऽ ऽ। ऽऽ ।ऽ ऽ। ऽऽ ।ऽ ऽ। ऽऽ ऽऽ
सता शता सता शता शता सता शता शता सता शता शता । इति शरीरम् ।
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निश शता शता शता शता तास । इति शीर्षकम् । इति पाणिका ।

अर्थानुवशगं पादं पदैर्लौकिकवैदिकैं ।
अष्टाक्षरार्धं छन्दोभिर्जगत्यन्ते प्रगीयते ॥३६४॥

(?)ऋक्स्यात्र कला अष्टचत्वारिंशत् प्रकीर्तिता ।
एकाक्षरा ऋगलपत्वे कलाना पूरण मतम् ॥३६५॥

स्तोभाक्षरैर्मन्त्रपदैरस( ) स्तोभाक्षरावलि ।
शण्डुमादौ जगतिय ततो [4]वलिकितेन च ॥३६६॥

तत कुचझला वर्णास्ततस्तितिझला इति ।
तत पशुपतीत्युक्त्वा वर्णा विगिनि(वि)गीत्यथ ॥३६७॥

दिग्गे(र्गो) गणपतिप्राया तिति चा(घा) इति तान पुरा ।
नियतानब्रवीत्(द) ब्रह्मा तत(·) स्तोभाक्षरावलौ[5] ॥३६८॥

ओकारश्च हकारश्च स्वरव्यञ्जनसयुत ।
त्रिकल षट्कलो वापि गानयोगे निवेशितो ॥३६९॥

---

[1] cf S R 5 219 35 for 360 79 above

[2] A B add विसग ।

[3] A B अन्या ।

[4] A B वलतिकेय च ।

[5] The स्तोभाक्षर can be read together as follows —शण्डु जगतिय-वलिकितकुचझलतितिझलपशुपतिदिगिदिगिदिग्गेगणपतितितिघा ।

अङ्गान्यत्र निवेश्यानि प्रस्तारादीनि सप्त च ।
[1]वर्णाश्चापि साम्नः स्युर्विदार्यश्च यथारुचि ॥
[2]शोभामनतिक्रम्य स्या(त्) स्वेच्छया गानसंततिः ॥३७०॥
इति ऋचां गानविधिः ॥

अष्टाविंशत्युत्तरेण कलानां स्याच्छतेन हि ।
गाथा तत्र कलापूर्तिः कार्या स्तोभाक्षरैरपि ॥३७१॥
मात्रावृत्तैश्च विज्ञेयाः कलाश्च चतुरक्षराः ।
तर्यककानां बाहुल्यं विध(वि)धानामिहाल्पता ॥३७२॥
सामाङ्गानां च भूयस्त्वं वर्णालंकारगीतयः ।
यथाक्षो(स्तो)भं प्रगातव्या गाथायां मुनिशासनात् ॥३७३॥
इति गाथा ॥

अथ गीतविशेषस्य साम्नो गानं निरूप्यते ।
यथा स्याद् वैदिके भागे स्तोभानां रचना तथा ॥३७४॥
साम्नि सप्तापि चाङ्गानि प्रस्तावादीनि तद्यथा ।
प्रस्तावश्च तयोद्गीथ(ः) प्रतिहार उपद्रवः ॥३७५॥
निधनं पञ्चमं ज्ञेयं हिंकारोंकारकावपि ।
पूर्वेषामत्र पञ्चानां गाने स्युरभिधा इमाः ॥३७६॥
स्यादुद्ग्राहो(ऽ)प्यनुद्ग्राह. संबोधध्रुवकावपि ।
निधनं पञ्चमं तत्र क्रमादन्त्यद्वया(ये) पुनः ॥३७७॥
कलापूरग(क)ता ज्ञेया गायत्रीप्रभृति स्मृतम् ।
छन्दः संकृतिपर्यन्तमृक्सामे(म्नो)विनियोजितम् ॥३७८॥
गद्ये षण्णवति(ः) प्रोक्ता(ः)कला एकाक्षरास्तथा ।
अपरे(ऽ)ष्टचत्वारिंशदिह प्राहुः कलाविदः ॥३७९॥
ऋचीव मन्त्रस्तोभानामिह स्यात् त्रिकलादिकम् ।
इति गानविधिं सम्यक् साम्नि सामविचक्षणः ॥
सप्ताङ्गराज्यसंपन्नः सप्ताङ्गसहितं व्यधात् ॥३८०॥
यद्यतुर्दशनाडीभिर्घटिकागिरिमपहीन् ।
समरे शोऽस्तनोद्राजा गीतकानि चतुर्दश. ॥३८१॥
इति श्रीराजाधिराजमहीमहेन्द्रश्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां
संगीतमीमांसायां गीतरत्नकोशे प्रबन्धोल्लासे गीतकपरीक्षणं
प्रथमं समाप्तम् ।

---

[1] A. B. वारवण्यादि । [2] A. B· शोभामनतिक्रमाग्स्याः ।

## सूड-प्रबन्धा नाम द्वितीयं परीक्षणम्

येन बद्धा प्रबन्धेन सुरत्राणचतुष्टयी ।
देशीसिद्धप्रबन्धेषु सोऽधुना यतते कृती ॥१॥

तत्र यद्गदितं द्वेधा मतङ्गादिमतादिह ।
विभज्य लक्ष्यते सम्यक्(ङ) निबद्धमधुना मया ॥२॥

प्रबन्धो रूपकं वस्तु तस्य संज्ञात्रयं विदुः ।
एषामभेदेऽपि भिदा लक्ष्मतः स्यात् कियत्यपि ॥३॥

अङ्गैः षड्भिश्चतुर्भिश्च धातुभिर्बध्यते यतः ।
ततः प्रबन्ध इत्युक्तो गजबन्धनबन्धुना ॥४॥

आरोप्यते गुणग्रामोपाधिकं यत्र नायके ।
रामादित्वं महीभर्त्रा तद्रूपकमुदीरितम् ॥५॥

यस्मिन् वसन्ति नियतं धातवोऽङ्गानि कानिचित् ।
सद्वस्तुध्वनिमुख्येन तद्वस्तु परिकीर्तितम् ॥६॥

[1]धातुः पञ्चविधस्तत्र प्रबन्धावयवाभिधः ।
उद्ग्राह आद्यभागः स्यात्ततो मेलापकध्रुवौ ॥७॥

अन्तराभोगसंज्ञौ च, लक्ष्मैषां प्रागुदाहृतम् ।
यदन्तरप्रतिज्ञेयात्(द्) धातुः पञ्चविधो भवेत् ॥८॥

तत्त्वं तालगसूडस्थे तस्मिन् प्रागेव दर्शितम् ।
धारणाद्गीतदेहस्य धातु(स्) तेषां बुधैः स्मृता(त) ॥९॥

प्रबन्धोऽपि त्रिधा द्वित्रिचतुर्धातुयुग्भवेत् क्रमात् ।
तत्र मेलापका-[2]भोगौ न भवेतां द्विधातुके ॥१०॥

त्रिधातुके प्रबन्धे तु स्वेच्छयैकस्तयोर्मतः ।
एतावेद्वृकयोस्तौ तु धातू नित्यं व्यवस्थितौ ॥११॥

स्वरः पदं च बिरुदं तालः पाटश्च तेनकः ।
अङ्गानि षड् भवन्त्यस्य प्रबन्धस्याङ्गिनो यथा ॥१२॥

---

[1] cf S R 4 7-14 for 7-16 above

[2] B मेलापको भागो ।

एतच्चरणहेतुत्वाच्चरणौ स्वरतालकौ ।
पाटाश्च बिरुदं चैव प्रबन्धस्य करौ मतौ ॥१३॥

मृदङ्गादौ यतः पाटाक्षराणि स्युः कराहतेः ।
बिरुशब्दं बिरुद्धार्थं महाराष्ट्रा(:) प्रचक्षते ॥१४॥

तद्दातीति बिरुदं संभवेत् करसंयुतम् ।
अत कराभिधा धत्तस्ते तेनपदसंज्ञिते ॥१५॥

नेत्रे [1]तस्य विनिर्दिष्टे प्रबन्धार्थप्रकाशनात् ।
तेनेति तत्पदेनेह वाच्यं ब्रह्माभिधीयते ॥१६॥

संस्कृतप्राकृतापभ्रंशान्तकत्वात् त्रिधा पदम् ।
प्रकाशस्य च साधर्म्यादितयोर्नेत्रतोदिता ॥१७॥

[2]षडङ्गादिद्विपड्कान्तप्रबन्धानां क्रमादिमाः ।
मोदिन्यथानन्दिनी च दीपनी पावनी तथा ॥१८॥

तरावल्ली(ली) तु पञ्च स्युर्जातयो भारते मते ।
कोहलस्य मते तावत् श्रुतिर्नीतिस्तथैव च ॥१९॥

सेना च कविता चैव चम्पूः पञ्चेति सम्मताः ।
सनिर्युक्त इति ख्यातः छन्दस्तालादिसंयुतः ॥२०॥

स एव स्यादनिर्युक्तस्तद्विरुद्धसमाश्रयः ।
सूडालिविप्रकीर्णाख्यभेदात्ते त्रिविधा(:) पुनः ॥२१॥

सूडोऽपि त्रिविधः शुद्धमिश्रसालगभेदतः ।
उद्देश(:) क्रमतस्तेषां क्रियते कृष्णभूभुजा ॥२२॥

एला च करण ढेङ्की वर्तनी झोम्बडी तथा ।
लम्भरासावेकतालीत्यष्टभिः क्रमयोजितैः ॥२३॥

शुद्धसूडः समादिष्टः, पञ्चधा तं तु केचन ।
अत्युत्तमोत्तमौ मध्यो जघन्यातिजघन्यकौ ॥२४॥

अष्टभिः सप्तभिः षड्भिः पञ्चभिश्च यथाक्रमात् ।
चतुर्भिरपि तत्रैलादिकैकस्य ग्रहणतः ॥२५॥

---

[1] B. नेत्रेस्य ।

[2] cf S. R. 4. 19-24 for 18-23 above.

भवन्ति भेदा· पञ्चेति केचिदिच्छन्ति कुत्रचित ।
करण प्रथम केचिद्वृत्तरादिषु मन्वते ॥२६॥

[1]एलाभिधानां प्रथममथ सालग उच्यते ।
ध्रुवश्च मण्ठकश्चैव प्रतिमण्ठो नि( )सारुक ॥२७॥

अड्डतालश्च रासश्चायैकतालीत्यनुक्रमात् ।
अथ मिश्रप्रबन्धाना नामानि व्याहरामहे ॥२८॥

दशावतारकीर्त्तिधवल· ॥१॥ हरिविजयमङ्गलाचार ॥२॥
माधवोत्सवकमलाकर· ॥३॥ सामोददामोदरभ्रमरपाद· ॥४॥
मधुरिपुरत्नकण्ठिका ॥५॥ अक्लेशकेशवकुञ्जरतिलक ॥६॥
मुग्धमधुसूदनहसक्रीड ॥७॥ हरिवल्लभाशोकपल्लव ॥८॥
स्निग्धमधुसूदनरासावलय ॥९॥ हरिसमुदयगरुडपदा ॥१०॥
साकाङ्क्षपुण्डरीकाक्षभ्रमररुत· ॥११॥ धन्यवैकुण्ठकुङ्कुम ॥१२॥
हरिशरणकदलीपत्र(म्) ॥१३॥ हरिरमितचम्पकशेखर· ॥१४॥
हरिरसमन्मथतिलक· ॥१५॥ नारायणमदनावास ॥१६॥
लक्ष्मीपतिरत्नावली ॥१७॥ अमन्दमुकुन्दमकरन्द· ॥१८॥
चतुरचतुर्भुजरागराजिचन्द्रोद्योत ॥१९॥ हरिहारतालराजिजलधरविलसित· ॥२०॥
तालरागार्णवमुरारिमङ्गलकुसुमलता ॥२१॥ सानन्दगोविन्दरागश्रेणिकुसुमास्तरण ॥२२॥
मधुरिपुमोदविद्याधरलील· ॥२३॥ सुरतारम्भचन्द्रहास ॥२४॥
कामतृप्तिकामहास· ॥२५॥ पौरुषरसप्रेमविलास ॥२६॥
कामादभुताभिनवमृगाङ्कलेखा ॥२७॥ प्रीति(त)पीताम्बरतालश्रेणिमुक्ताफलाभिध ॥२८॥

अष्टाविंशतिरेतेऽत्र प्रबन्धा( ) कृष्णभूभुजा ।
स्वोपज्ञगीतगोविन्दमिश्रसूडे [2]प्रपञ्चिता· ॥२९॥

[3]आलिक्रमप्रबन्धानामुद्देशोऽथ प्रतन्यते ।
पञ्चतालेश्वरस्तालार्णवो रागकदम्बक ॥३०॥

स्वरार्थो मातृका गद्य दण्डको ध्वनिकुट्टिनी ।
आर्या गाथा द्विपथको वर्णो वर्णस्वरो घट· ॥३१॥

कैवालो(डो) गजलीला च हयलीलाङ्कचारिणी ।
स्तव( ) सुप्रकाशश्च वृत्त हरिविलासक· ॥३२॥

---

[1] cf S R 4 313

[2] B प्रकीर्त्तिता ।

[3] cf S R 4 24 33 for 30 42 above

द्विपदी तोटकश्चक्रवालः सरभलीलकः ।
कलहंसाभिधः श्रौञ्चपदाख्य(:) कन्दनामकः ॥३३॥

रससन्दोहनामाय राजचूडामणिस्तथा ।
एते त्रिंशत् समाख्याता(:) प्रबन्धा आलिसंश्रयाः ॥३४॥

यद्येलादिप्रबन्धस्थः कश्चनैषु प्रगीयते ।
तदालिक्रमगः सोऽपि गीयते तद्विवेचकैः ॥३५॥

अयैकैकत्वगानार्हान् प्रकीर्णान् कतिचिद् ब्रुवे ।
श्रीरङ्गः श्रीविलासश्च पञ्चाननचतुर्मुखौ ॥३६॥

सुदर्शनः स्वराङ्कः श्रीवर्द्धनो हर्षवर्द्धनः ।
सिंहलीलो हंसलीलो वीरश्री(:) स्तवमञ्जरी ॥३७॥

प्रतापवर्द्धनो वीरः शृङ्गारो रणरञ्जकः ।
सुधासागरशृङ्गारविलासौ शुकनर्तनौ ॥३८॥

त्रिपदी षट्पदी वस्तु विजयस्त्रिपदाह्वयः ।
चतुष्पदी पञ्चभङ्गिरुमातिलककन्दुकौ ॥३९॥

त्रिभङ्गिर्झम्बडं चन्द्रकलाख्यो वदनाह्वयः ।
धवलो मङ्गलाचारो मङ्गलश्चतुरङ्गकः ॥४०॥

चच्चरी पद्धडी चर्या विजयश्च वदन्तिका ।
ॐवि (ओवी)लोली ढोल्लरी च धम्माली राहडीति च ॥४१॥

पञ्चचत्वारिंशदिमे प्रकीर्णा(:) स्युः प्रबन्धकाः ।
अथोद्देशक्रमादेषां सम्यक्(ग्) लक्ष्माभिधास्यते ॥४२॥

बृहद्देश्यादिकान् ग्रन्थान् पर्यालोच्येह तत्त्वतः ।
तत्सामान्यविशेषाभ्यामुदाहृतिपुरःसरम् ॥४३॥

लक्ष्यते लक्ष्मतत्त्वज्ञतोषायैला किलायता ।
एकधातुर्द्विखण्डश्च तत्राद्यश्चरणोऽभवेत् ॥४४॥

वर्णसाम्यविचित्रोक्तिविशदस्तदनन्तरम् ।
कार्यः प्रयोगो गमकसंदर्भैरुपलक्षितः ॥४५॥

[1]ततः पदत्रयं तस्मिन् कार्यं पल्लवसंज्ञितम् ।
विलम्बितलये तत्र द्विपदेऽथ तृतीयकम् ॥४६॥

[1] cf. S. R. 4. 34-36 for 46-49 above.

द्रुतमानेन गातव्यमेव पादद्वय परम् ।
उद्ग्राहे तु तुल्यधातु स्यात् किन्तु पादे तृतीयके ॥४७॥

पदत्रय पल्लवाख्य न स्यादन्य प्रकल्पयेत ।
साम्बोधकपदैर्युक्त प्रयोग तस्य चाभिधाम् ॥४८॥

मेलापक इति प्राहुर्भोजराजादिसूरय ।
अथ ध्रुवाभिधो धातुस्तत्र द्वे तुल्यधातुनी ॥४९॥

पदे तृतीयमन्येन धातुना स्यात् पद तथा ।
त्रयमेतदनुप्रासविभूय　　भूषयेदमुम् ॥५०॥

स्तुत्यनाम्ना लयस्तस्मिन् विधातव्यो विलम्बित ।
अत्र स्थाय्यादिवर्णेषु यो विशेषो विपश्चिता ॥५१॥

रागविन्यासवैचित्र्यजनित स निगद्यते ।
धातुशब्देन तद्भेदा बहवस्तत्र तत्र च ॥५२॥

रागसघट्टनाधर्मैस्ते ज्ञेया रत्नतत्त्ववत ।
रागानुभवनिष्णातै स्वरभेदविवेचकै ॥५३॥

अथ प्रबन्धनिर्मातुरभिधानविजृम्भितम ।
गीत्वा(ऽऽ)भोग सकृन्न्यस्येत पुनर्गीत्वा ध्रुवाभिधम ॥५४॥

आभोगे केचिदिच्छन्ति वणस्य विरुदावलिम् ।
सामादन्यो प्रहस्ताल एलाया परिकीर्तित ॥५५॥

[1]मण्ठद्वितीयिक कालप्रतितालेषु कश्चन ।
वर्णन शौर्यधैर्यादिगुणग्रामस्य चेष्यते ॥५६॥

एलास्तान्यलक्ष्मतद्राजवाहनसम्मतम् ।
षोडशास्या पदानि स्युरुदग्राहे तानि षट पुन ॥५७॥

तावन्ति पल्लवाख्यानि मेलापस्यैकक परम ।
पदत्रय ध्रुवे खण्ड पदशब्देन गीयते ॥५८॥

केचिन्मेलापक हित्वा क्षिप्त्वा(ऽऽ)भोग पदास्पदे ।
जगुस्तावन्ति नैवेद राजवाहनसम्मतम् ॥५९॥

[2]अकारेकारलेष्वत्र वर्णोध्वेषु यथाक्रमम् ।
[3]श्रीशकामश्रियो नित्य निवसन्ति यतस्तत ॥६०॥

---

[1] cf, S R 4 40　　[2] cf S R 4 42

[3] A श्रीशकामिश्रयो B श्रीशकामिश्रिया ।

ऐहिकामुष्मिकफलां वदन्त्येलां पुराविदः ।
अविष्णुरीमहालक्ष्मीरेतयोर्मिथुनं यतः ॥६१॥

ला(ले)ति प्राहुरतः केचिदेलामीप्सितकामदाम् ।
[1]तत्पदानां षोडशानां वच्मि नामान्यनुक्रमात् ॥६२॥

[2]काम(ो)मन्मथवच्चेति पूर्वखण्डद्वयाभिधे ।
पल्लवत्रिपदी कान्तजितमत्ताभिधा मताः ॥६३॥

विकारी चैव माध्याता द्वितीयेऽड्घ्रौ पदाभिधे ।
सुमतिश्च तथा शोभी सुशोभीति पदत्रये ॥६४॥

पल्लवाख्ये भिधा(दे) प्राहुर्द्वे गीतकोचिताभिधे ।
तृतीयां(ये) ह्रस्वपदयोर्मेलापकपदस्य तु ॥६५॥

वि(सु)चित्रसंज्ञा ध्रुवके वासवोऽथ मृदुस्तथा ।
विचित्र इति संज्ञाः स्युः पदानां त्रितये पृथक् ॥६६॥

एवं षोडशसंज्ञाः स्युर्ये तु मेलापकाभिधम् ।
नेच्छन्ति पदसंज्ञायां तन्मते स्याद्विचित्रतः ॥६७

तृतीयं ध्रुवगं चान्यदन्त्यमाभोगगं पदम् ।
पदान्येवं षोडशाना देवता वच्मि तत्त्वतः ॥६८॥

पद्मालया पद्मिणी च रञ्जनी सुमुखी शची ।
वरेण्या वायुवेगा च वेदिनी मोहिनी जया ॥६९॥

गौरी ब्राह्मी च मातङ्गी चण्डिका विजयाभिधा ।
चामुण्डेति समाख्याता हरं पञ्चदशं परे ॥७०॥

पदान्येलासु सर्वासु संत्यज्याद्यानि षट् क्रमात् ।
मान्याग्रादिषु[3] पादेषु स्युः प्राणा दश दशस्विमे ॥७१॥

समानो मधुरः सान्द्रः कान्तो दीप्तः समाहितः ।
*अग्राम्यः सुकुमारश्च प्रसन्नौजस्विनावपि ॥७२॥*

[1] cf. S. R. 4 43-52 for 62-80 above

[2] A. कामवान्मयवाञ्चेति । B कामवान्मयपाञ्चेति । कामश्च मयवच्चेति can also be a possible reading. S R. reads काममन्मथवत् ।

[3] One syllable is extra in this line. Reading as मान्यानादिपरेषु स्युः or omission of स्युः can rectify the metre.

मध्यस्थानस्थितैर्वर्णै(·) क्रियद्भिर्व्यञ्जितो ध्वनि ।
मन्द्रतारान्तरगत समाना सद्भिरुच्यते ॥७३॥

मधुर· स तु विज्ञेयो यस्तारस्थानकेऽपि सन् ।
श्रोतृचित्ताह्लादकरो ध्वनिर्ध्वनिविदावरै ॥७४॥

तारस्थानगतो गाढबन्धवर्णगणाश्रय ।
प्राणाभिधो रवो ज्ञेय स सान्द्रश्च मनीषिभि ॥७५॥

त्रिस्थानगतिसम्पूर्णश्रोतृपीयूषपेशल ।
नाद· कान्त इति ज्ञेय कान्तवर्ण(ै) जनप्रिय ॥७६॥

यो रागव्यञ्जको नादस्तारस्थान[1]·स्थितोऽपि सन् ।
दीप्तत्वाद् दीप्त इत्युक्तो रागतत्त्वविवेचकै ॥७७॥

न पौनरुक्त्यमाशङ्क्य तारस्थानगता व्रत ।
यतोऽत्र गाढबन्धस्य नियमो नाक्षराश्रय ॥७८॥

समूर्च्छनस्थायिवर्णेषु नाद प्रोक्त समाहित ।
य सचारिषु वर्णेषु स्थित कर्णरसायनम ॥७९॥

स नादोऽग्राम्य इत्युक्तो बुधैरग्राम्यकर्मभि ।
नादाक्षरगता(ऽ)वृत्तिरग्राम्य इति केचन ॥८०॥

वर्णेषु मूर्च्छनाया च य कोमल(ै)मत स्वन ।
तमाह सुकुमाराख्य कुमारसमविक्रम ॥८१॥

स्वरस्थानपदादीना य प्रसादमुपागत ।
स प्रसाद( ) परस्वेषु रव प्राह प्रसन्नकम् ॥८२॥

निबिडाक्षरबन्धत्वात् त्रिषु स्थानेषु दीप्यते ।
एव भाव· स[2] ओज स्यादोजस्वी तद्युतो रव· ॥८३॥

स[3]ग्वासभूयानोजस्वीत्येके प्राणविदो विदु ।
अनुस्वन· स्वरूप· सन् प्रबन्धपदगामिभि· ॥८४॥

उपाधिभिरभिव्यक्त· स्थानत्रितयवर्तिभि· ।
प्रीणयञ्जनचेतासि प्राण इत्युच्यते रव· ॥८५॥

उपाधिभि प्रोक्तरूपैर्नानात्वारोपतो रवे ।
प्राणसज्ञा दशविधे गदिता कृष्णभूभुजा ॥८६॥

---

[1] A ०स्थानास्थितो० ।
[2] A B एव भावस्ततोज ।
[3] A B ससासभूयानोज० ।

रागोऽत्र टक्को हिन्दोलस्तथा मालवकैशिकः ।
ककुभश्चेति चत्वार एते चतसृषु क्रमात् ॥८७॥

स्थानेऽत्र टक्करागस्य श्रीरागं ब्रुवते परे ।
[1]गणमात्रावर्णदेशछन्दोवस्तुविशेषणात् ॥८८॥

एला स्यात् षड्विधा तत्र गणरूपं निरूप्यते ।
गणः संघो वर्णमात्रामिश्रभेदात् स तु त्रिधा ॥८९॥

वर्णास्तु द्विविधास्तत्र गुरुलघ्वादिभेदतः ।
तद्भेदः छन्दउल्लासे सप्रपञ्चो निरूपितः ॥९०॥

[2]एवं या जायते काचित् सा गणैला प्रकीर्तिता ।
सा तु स्यात् त्रिविधा शुद्धा संकीर्णा विकृतेति च ॥९१॥

नादावत्यादिभेदेन शुद्धा ज्ञेया चतुर्विधा ।
नादावती तथा हंसावती नन्दावतीति च ॥९२॥

भद्रावतीति, तासां च क्रमाल्लक्षणमुच्यते ।
आसु यो नियमः प्रोक्तो मतङ्गाद्यैर्गणादितः ॥९३॥

स आद्यचरणस्यात्र पदद्वयसमाश्रयः ।
पदद्वयानन्तरतः स्वेच्छया गणकल्पनम् ॥९४॥

नान्ताः स्युः पञ्च भगणा नादावत्यां तथा पुनः ।
तालो मण्ठष्टक्करागः श्रीरागो वा निबध्यते ॥९५॥

ऋग्वेदजा विप्रजातिः पाञ्चालीरीतिसंश्रया ।
कैशिकीवृत्तिका श्वेता शृङ्गाररसरञ्जिता ॥
भारत्याः प्रीतिजननी भारतीसेवकोदिता ॥९६॥

॥ इति नादावती ॥१॥

हंसावती स्याद्रगणैः पञ्चभिः सगणान्तकैः ।
तालो द्वितीयो राग(ः) स्याद्धिन्दोलो वृत्तिरत्र वा ॥९७॥

भवेदारभटी रीतिर्लाटी रौद्रो रसः स्मृतः ।
यजुर्वेदसमुद्भूता क्षत्रिया वर्णतोऽरुणा ॥९८॥

चण्डिकाप्रीतिजननी मेधिदिग्यन्दोलतरयतः ।
थान्तं रागमिच्छन्ति हंसावत्यामपीतरे ॥९९॥

॥ इति हंसावती ॥२॥

---

[1] cf. S. R. 4. 53-54 for 88-90 above.
[2] cf. S. R. 4. 60-75 for 91-103.

जगणान्तैः पञ्चभिः स्यात्तगणैः प्रतितालतः ।
वृत्तिः स्यात् सात्वती रीतिर्गौडी वीरो रसस्तया ॥१००॥

सामवेदोद्भवा पीता वैश्या मालवकैशिके ।
रागे नन्दावतीन्द्राणीप्रीतये तद्विदोदिता ॥१०१॥

॥ इति नन्दावती ॥३॥

पञ्चभिर्मगणैर्यन्तैरेला भद्रावती मता ।
रागे तु ककुभे ताले कङ्कालेऽथर्ववेदजा ॥१०२॥

कृष्णवर्णा शूद्रजातिर्वैदर्भीरीतिरञ्जिता ।
भारतीवृत्तिरुचिरा रसे बीभत्सनामनि ॥
वाराहीप्रीतये ज्ञेया गानयोगविचक्षणैः ॥१०३॥

॥ इति भद्रावती ॥४॥

नन्वत्र वृत्तिशब्देन वर्णनीयोपबृहका:।
अनुप्रासाः पृथक्(ग्) यत्र वर्त्तन्ते साभिधीयते ॥१०४॥

दीप्तमध्यमृदुप्रायैर्वर्णोपाधिभिरिष्यते ।
उपनागरिका ग्राम्याभिधा नागरिकेति च ॥१०५॥

तस्यास्त्रिधत्वमेतस्या रीतिरप्यपराभिधा ।
उपनागरिका गौडी ग्राम्या पञ्चालिका मता ॥१०६॥

वैदर्भी स्यान्नागरिकेत्येवं सति यदुच्यते ।
हंसावत्यां रीतिरेषा लाटी [1]सा कथमुच्यताम् ॥१०७॥

कथ्यतेऽत्र समासेन वैदर्भीप्रमुखास्तु याः ।
वर्णभेदेन गदिता अनुप्रासविशेषतः ॥१०८॥

तत्र तालाद्यभेदेन पदानुप्राससंश्रया ।
लाटदेशप्रियत्वाच्च वृत्तिर्लाटी निगद्यते ॥१०९॥

एवं सति न भेदोऽभूद्वृत्तिरीत्योर्भवन्मते ।
श्रूयतामेतयोर्भेदनिबन्धमवधानतः ॥११०॥

कैशिक्यारभटी वृत्तिः सात्त्वती भारतीति च ।
वृत्तिरन्येयमुदिता साभिधेयगुणाश्रया ॥१११॥

यथा संघट्टनां प्राप्य रसानां स्युः प्रकाशकाः ।
अभिनेयदशां प्राप्य ते वृत्तित्वेन कीर्त्तिताः ॥११२॥

[1] A. B. साकतमोच्यताम् ।

गणाः सप्तचतुर्मात्रा लघ्वन्ताश्चेत्(द्) यदा तदा ।
मात्राहसावतीत्युक्तार्जुनसम्मतवेदिना ॥१४९॥
॥ इति मात्राहसावती ॥

लघ्वन्तका गणाः सप्त चतुर्मात्रा यदा तदा ।
मात्रानन्दावती प्राह धनञ्जयमतानुग ॥१५०॥

गणाष्टक चतुर्मात्रमन्तस्फूर्जत्त्रिमात्रकम् ।
मात्राभद्रावतीकर्तृ जगत्कर्तृगणोदितम् ॥१५१॥
॥ इति मात्राभद्रावती ॥
॥ इत्यर्जुनोक्तमात्रैलाचतुष्टयम ॥

मात्रैलाना चतसृणां त्रिष्वङ्घ्रिषु यदा भवेत् ।
एकद्वित्रिचतुष्पञ्चमात्रावृद्धिस्तदा पुन ॥
एता विचित्रपूर्वा( ) स्यु( ) श्वेतवाहनसम्मता ॥१५२॥
॥ इत्यर्जुनोक्त विचित्रमात्रैलाचतुष्टयम् ॥

मतङ्गोऽपि च [1]मात्रैलाचतुष्टयमभाषत ।
रते कामा च बाणा च चन्द्रा लेखा रवे परे (गणे परे ) ॥१५३॥

अश्विरामैर्युगरसै ऋतुनन्दैरनुक्रमात ।
वसुदस्रेन्दुभिश्चैताश्चतस्र स्युः कला( ) करै ॥१५४॥

आद्ये पादे द्वितीये च यस्या रुद्रकला पृथक् ।
तृतीये दिङ्मिता सा स्याद्रतिलेखा रतेगणै ॥१५५॥

कामलेखा कामगणै पादयोराद्ययो पृथक् ।
मात्रा द्वाविंशति शेषे चरणे यत्र विंशति ॥१५६॥

युग्मवह्निमिता मात्रा यस्या प्रत्यङ्घ्रिसस्थिता ।
बाणलेखा बाणगणै सा बाणा रिगणोदिता ॥१५७॥

चन्द्रलेखा मिश्रगणै तस्या ब्रूमः कलाविधिम् ।
आद्यपादद्वये वह्निवेदमात्रा( )पृथक पृथक् ॥
दस्रवेदास्तृतीयेऽङ्घ्रावित्येता सम्यगीरिता ॥१५८॥
॥ इति मतङ्गोक्तरतिलेखादिमात्रैलाचतुष्टयम् ॥

अथैते नन्दिनी नाम चित्रिणीति क्रमात्(द्) ब्रुवे ।
तृतीयपादग लक्ष्म यदि स्याच्चरणेऽग्रिमे ॥१५९॥

[1] cf S R 4 96 99 for 153 58 above

नादावत्यां संगता स्यात् त्रिविधा वासवी द्विधा ।
व्योमजा वारुणी व्योमवारुणी चेति संगता ॥१३७॥

एला रगणयोगेन वह्निजा वारुणी तथा ।
गणद्वयसमावेशात् प्राग्वदत्र प्रजायते ॥१३८॥

तृतीया वातसावित्री भेदमन्त्यं विना मता ।
हंसावत्यां संगता स्यात् त्रिविधा वासवी द्विधा ॥१३९॥

व्योमजा [1]वारुणी व्योमवारुणी चेति संगता ।
तगणस्य प्रतिक्षेपात्(द्) व्योमजा संगता भवेत् ॥१४०॥

यगणस्य समावेशात्(द्) वारुणीत्यभिधीयते ।
तगणे यगणे क्षप्ते सा भवेद् व्योमवारुणी ॥१४१॥

द्वाभ्यां भिदाभ्यां द्विविधा वासव्यन्त्यां भिदां विना ।
एवं शैलसुताप्रोक्ता भेदाः पञ्चदशोदिताः ॥१४२॥
॥ इति पार्वतीमते पञ्चदशैलाभेदाः ॥

विकृता एवमेवोक्ता भेदा अष्टोत्तरं शतम् ।
[2]मात्रागणैर्या रचिता सा मात्रैला प्रकीर्त्तिता ॥१४३॥

मात्रारूपं मया पूर्वं छन्दउल्लास ईरितम् ।
मात्रासंख्या-परिक्लृप्ता मात्रैला स्याच्चतुर्विधा ॥१४४॥

[3]तत्राद्येन्दुमती ज्योतिष्मती चैव नभस्वती ।
ततो वसुमतीत्येताश्चतस्रो नन्दिनोदिता ॥१४५॥
॥ इति नन्दिमते मात्रैलाचतुष्टयम् ॥

[4]अत्र या वर्णगणजा नादावत्यादयो मताः ।
मात्रागणैर्विरचिता इन्दुमत्यादयश्च याः ॥१४६॥

ताः स्वस्वगणभङ्गेन चतुर्मात्रीकृतैर्गणैः ।
मात्रानादावतीमुख्या(श्)चतस्र(ः) स्युरिमाः क्रमात् ॥१४७॥

गणाः पञ्च चतुर्मात्रा[5](स्)त्रिमात्रोऽन्ते यदा तदा ।
मात्रानादावती नाम सा भवेदर्जुने मते ॥१४८॥
॥ इति मात्रानादावती ॥

---

[1] A. B. धरणी । [2] cf. S. R. 4. 95.
[3] cf. S. R. 4. 99-100
[4] cf. S. R. 4. 102-104 for 146-52 above.
[5] A. B. चतुर्मात् ।

गणा सप्तचतुर्मात्रा लघ्वन्ताश्चेत्(द्) यदा तदा ।
मात्राहंसावतीत्युक्तार्जुनसम्मतवेदिना ॥१४९॥
॥ इति मात्राहंसावती ॥

लघ्वन्तका गणा सप्त चतुर्मात्रा यदा तदा ।
मात्रानन्दावती प्राह धनञ्जयमतानुग ॥१५०॥

गणाष्टक चतुर्मात्रमन्तस्फूर्जत्त्रिमात्रकम् ।
मात्राभद्रावतीकर्तृ जगत्कर्तृगणोदितम् ॥१५१॥
॥ इति मात्राभद्रावती ॥
॥ इत्यर्जुनोक्तमात्रैलाचतुष्टयम ॥

मात्रैलाना चतसृणां त्रिष्वङ्घ्रिषु यदा भवेत् ।
एकद्वित्रिचतुष्पञ्चमात्रावृद्धिस्तदा पुन ॥
एता विचित्रपूर्वा( ) स्यु( ) श्वेतवाहनसम्मता ॥१५२॥
॥ इत्यर्जुनोक्त विचित्रमात्रैलाचतुष्टयम ॥

मतङ्गोऽपि च [1]मात्रैलाचतुष्टयमभाषत ।
रते कामा च बाणा च चन्द्रा लेखा रवे परे (गणै परै ) ॥१५३॥

अश्विरामैर्युगरसै ऋतुनन्दैरनुक्रमात् ।
वसुदस्रेन्दुभिश्चैताश्चतस्र स्यु कला( ) करै ॥१५४॥

आद्ये पादे द्वितीये च यस्या रुद्रकला पृथक् ।
तृतीये दिङ्मिता सा स्याद्रतिलेखा रतेर्गणै ॥१५५॥

कामलेखा कामगणै पादयोराद्ययो पृथक् ।
मात्रा द्वाविंशति शेषे चरणे यत्र विंशति ॥१५६॥

युग्मवह्निमिता मात्रा यस्यां प्रत्यङ्घ्रिसस्थिता ।
बाणलेखा बाणगणै सा बाणा रिगणोदिता ॥१५७॥

चन्द्रलेखा मिश्रगणै तस्या ब्रूम कलाविधिम् ।
आद्यपादद्वये वह्निवेदमात्रा( )पृथक पृथक् ॥
दस्रवेदास्तृतीयेऽङ्घ्रावित्येता सम्यगीरिता ॥१५८॥
॥ इति मतङ्गोक्तरतिलेखादिमात्रैलाचतुष्टयम् ॥

अथैते नन्दिनी नाम चित्रिणीति क्रमात्(द्) ब्रुवे ।
तृतीयपादग लक्ष्म यदि स्याच्चरणेऽग्रिमे ॥१५९॥

---

[1] cf S R 4 96 99 for 153 58 above

शेषमङ्घ्रिद्वयं प्राग्व(द्) द्वयोरनियतैर्गणैः ।
रतिलेखाकामलेखेत्येवं मात्रैलयोरिह ॥
तदा संज्ञाद्वयं प्रोक्तं नन्दिन्यादि महीभुजा ॥१६०॥
॥ इति मात्रैलाद्वयम् ॥

कैश्चिच्चित्रा विचित्रा वेत्येवमेलाद्वयं क्वचित् ।
तद्बाणचन्द्रलेखाभ्यां न पृथक् सम्यगीक्षते ॥१६१॥
॥ इत्यष्टादशमात्रैलाः ॥

वर्णसंख्योपाधिभवोऽतिशयो यासु भेदकः ।
गणमात्राद्यनियतास्ता मात्रैला मताः सताम् ॥१६२॥

[1]षड्वर्णाच्चरणाद्यावदेकोनत्रिंशदक्षरम् ।
पादैश्चतुर्विंशति(:) स्युर्वर्णैला वर्णसंख्यकैः ॥१६३॥

मधुकर्यथो [2] सुमुखी करिणी सुरसा तथा ।
प्रभञ्जनी मदनवत्यथो स्यात् शशिनीति च ॥१६४॥

प्रभावती मालती च ललिताभोगवत्यपि ।
द्वादशी कुसुमवती कान्तिमती कुमुद्वती ॥१६५॥

कालिका कमलाख्या च विमला नलिनीति च ।
कालिन्दी विपुला विद्युल्लता चैव विशालिका ॥
सरला तरला चेति चतुर्विंशतिरीरिताः ॥१६६॥
॥ इति चतुर्विंशतिमात्रैलाः ॥

अत्र कान्तिमतीमुख्या या द्वादश मयोदिता(:) ।
मण्ठादितालमध्यास्तु तालेनैकेन केनचित् ॥१६७॥

द्रुता रागादिनियमरहितास्ता(:) परे विदुः ।
वर्णमात्राभिधा एता एलागानविवेचकाः ॥१६८॥
॥ इति वर्णमात्रैलाः ॥

यतिमात्रविभिन्नाया मतङ्गः पर्यभाषत ।
रमणी चन्द्रिका लक्ष्मीः पद्मिनी रञ्जिनी तथा ॥१६९॥

मालती मोहिनीत्येताः सप्तैलाः किल ता मया ।
न लक्षिताः पृथक्त्वेन [3]यतिर्यत्नेह लक्ष्मभित् ॥१७०॥
॥ इति वर्णैलाः ॥

---

[1] cf. S. R. 4 107-115 for 163-71 above.

[2] A. B. add स्यात् ।

[3] A. यतिर्यत्रेह ।

कर्णाटगौडलाटान्ध्रद्रविडाना तु भाषया ।
देशाख्यैला स्मृता पञ्चतालैर्मण्ठादिभिः कृता ॥१७१॥

यणैला एव या प्रोक्तास्तासा या देशभाषया ।
काचिन्निबध्यते सा तु देशाख्यैला निगद्यते ॥१७२॥

अनुप्रासविशेषेण तासां स्याद् बन्धचारुता ।
सोऽलंकारसमुल्लासे मया प्रागेव दर्शित ॥१७३॥

[1]आदिमध्यावसाने च सानुप्रासपदान्विता ।
कर्णाटैला स्मृता [2]गौडदेशैला तद्विवर्जिता ॥१७४॥

विभ्राजमानैकरसा वर्जिता यमकैरपि ।
रसैर्विराजिता लाटी प्रान्तानुप्रासभूषिता ॥१७५॥

आन्ध्रैला(ऽ)नेकयमकरागाशरसभाविता ।
प्राप्तप्राणा समानार्थै· प्राणै· सम्यजनप्रिया ॥१७६॥

द्राविडी स्यात् साश्रितो या नानाभावरसोत्कटा ।
अनुप्रासविनिर्मुक्ता युक्ता तज्जनरञ्जनं ॥१७७॥
॥ इति [3]पञ्चदेशाख्यैला(.) ॥

अन्यथा वर्णयाचक्रु [4] केचित् कर्णाटदेशजा ।
एलास्तन्मतमाश्रित्य तत्स्वरूप विविच्यते ॥१७८॥

याश्चतत्र पुरा प्रोक्ता नादावत्यादिका मया ।
कर्णाटैलास्तु ता एव वक्ष्यमाणविशेषणै· ॥१७९॥

यस्यामाद्याङ्घ्रियुगलमनुप्रासविभूषितम् ।
प्रत्येक तच्च रत्यन्तमदनद्वयनिर्मितम् ॥१८०॥

चतुष्कामगणैरादिमध्यान्तु-[5]प्राससुन्दरै ।
रतिप्रान्तै कृत· पादस्तृतीयो यत्र शकर· ॥१८१॥

गणनाथ· स्मृत· पूर्ववदनाज्जन्म वेधस· ।
यस्या नादवतीसाम्य शेषैर्लक्ष्मणि दृश्यते ॥१८२॥

---

[1] cf S R 4 116, 128, 129 for 174-77 above
[2] A B गौडदेशैतालद्विवर्जिता ।
[3] A. B पञ्चदशा०
[4] cf S R 4 116 26 for 178 92 above
[5] A B प्रासादसुन्दरै ।

नादावती [1]सुरेखाख्या कर्णाटैला तु सादिमा ।
यस्या मध्याद्यनुप्रासयुतमङ्घ्रित्रयं भवेत् ॥१८३॥

कामैश्चतुर्भि रचितं पृथक्(ग्) वेधा गणाधिपः ।
गायत्री देवता जन्म ब्रह्मपश्चिमवक्त्रतः ॥१८४॥

[2]स्मरलेखाह्वया नन्दावती सैला प्रकीर्त्तिता ।
नन्दावतीसमं शेषं कुलवर्णादिकं मतम् ॥१८५॥

चतुर्भिर्मन्मथगणैः प्रत्येकं चरणद्वयम् ।
आदिमध्यगतप्रासं, तृतीयश्चरणः पुनः ॥१८६॥

त्रिप्रासः, कामलेखाष्टकामा हंसावती तु सा ।
हरिर्गणाधिपो जन्म दक्षिणाद्वेधसो मुखात् ॥१८७॥

सावित्री देवता यस्यां कर्णाटैला तु सा मता ।
यस्या(:) पादद्वये बाणप्रान्ता(:) प्रत्येकत(:) स्थिता(:) ॥१८८॥

म(ा)न्मथा(:) षड्-[3]गणा(:) पादे तृतीयेऽष्टौ गणा(:)पुनः ।
म(ा)न्मथा आदिमध्यानुप्रासमङ्घ्रित्रयं पुनः ॥१८९॥

विधेरुत्तरवक्त्राब्जाज्जन्म यस्या गणेश्वरः ।
गन्धर्वो भद्रलेखेयमेला भद्रावती मता ॥१९०॥

रत्यन्ता(:) पञ्चकामा(:) स्युर्विरामे [4]मान्मथो गणः ।
प्रत्येकं त्रिषु पादेषु यदैतास्तां निबध्यते ॥१९१॥

चतस्रो(ऽ)प्युक्तरूपास्तु छन्दस्वत्यस्तदा स्मृताः ।
न्यूनाधिकगणाद्येन पुनरेता विनिर्मिता(:) ॥
एलाभासा भवन्तीति राजवाहनसम्मतम् ॥१९२॥
॥ इति कर्णाटैलाः ॥

वाक्यार्थपूर्णतां नेतुमाधातुं प्रयतामय ।
एकस्यान्ते द्वयोर्वान्ते त्रयाणामथवा ततः ॥१९३॥

यत्पदं रच्यते तज्ज्ञैरुद्ग्राहीणामधिकं क्वचित् ।
तिलापदमिति प्राहुरतस्य माम पुरा-विदा(ः) ॥१९४॥

---

[1] S. R. गुलेखा ।
[2] S. R. स्वरलेखा ।
[3] A. B. गुणा. ।
[4] A. B. मन्मथो गुण ।

तृतीयचरणादूर्ध्वं यदा तद्रच्यते तदा ।
मेलापकाभिधपदं कुर्यादूर्ध्वं शिखापदा(दम्) ॥१९५॥

इदं शिखापदं प्रायो मार्गेलाद्यासु युज्यते ।
गर्णेलासु न गातव्यं न शुद्धासु मुनेर्मतात् ॥१९६॥

शुद्धत्रिचरणा [1]यस्यां शुद्धेला सा मता सताम् ।
भवेत् शिखापदं यासु तासु नो पल्लवाभिधम् ॥१९७॥

ततः पल्लवनामास्मिन् पद एव शिखाभिधे ।
सर्वास्वेलासु गातव्या सकृदेवाङ्घ्रयस्त्रयः ॥१९८॥

वर्णेलासु पुनर्गेया द्विरिति प्राह राजराट् ।
सानुप्रासस्तृतीयोऽङ्घ्रिद्वाद्यौ प्रासवर्जितौ ॥१९९॥

द्वयोश्चरणयोः कार्यश्चितस्रो यतयः पुनः ।
तृतीयो द्वियतिस्तुल्यः कर्त्तव्यः पादयोर्द्वयोः ॥२००॥

ध्रुवाभोगौ च सततवर्णेलानां यदा तदा ।
चतुर्विंशतिसंख्याता वस्त्वेला इति ताः स्मृताः ॥२०१॥

शार्ङ्गदेवमते चात्र ध्रुवे चाभोग एव च ।
त्रिष्वङ्घ्रिषु चतस्र( ) स्युर्यतयस्तुल्यलक्षणा( ) ॥२०२॥

भद्रावतीमते वर्णगणजामेकिका यदा ।
षट्पञ्चाशदधिकशतसंख्यास्वेलासु कर्हिचित् ॥२०३॥

तुर्योऽङ्घ्री रच्यते तत्तदङ्घ्रिलक्षणलक्षितः ।
छन्दस्वत्यस्तदैता( ) स्युरेला( ) सर्वाः समासतः ॥२०४॥

दशवह्निगुणमिता( ) सर्वा( ) स्युर्मिता इमाः ।
युगाक्षिसंख्या एतासु [2]वर्णेला मेलयेद् बुधः ॥२०५॥

यतस्तल्लक्ष्मविधिना छन्दस्वत्यो न सम्मताः ।
स्युरित्थं मिलिताः सर्वा रसेषु गुण-[3]सम्मिताः ॥२०६॥

विस्तरत्रस्तचित्तेन संकीर्णा न समीरिताः ।
यतः परस्परं लक्ष्मसंकरे स्यादनन्तता ॥२०७॥

॥ इत्येलाप्रबन्धः ॥

---

[1] A B यस्मा ।
[2] A B वस्वेला ।
[3] B सम्मता ।

[1]स्वरैः पाटैः पदैर्बन्धतेनाभ्यां बिरुदैरपि ।
विशिष्टं चित्रमिश्राभ्यामष्टधा करणं स्मृतम् ॥२०८॥

एतेषां क्रमतो वच्मि लक्षणं लक्ष्मविन्मुदे ।
यत्र स्याता ध्रुवोद्ग्राहौ स्वरैरेव विनिर्मितौ ॥२०९॥

पादैराभोगनिर्माणं कविवर्ण्याभिधायुतम् ।
रासस्तालो [2]ग्रहस्त्विष्टे स्वरे न्यासोऽशकस्वरे ॥२१०॥

लयो द्रुतो भवेद्यत्र स्वराख्यं करणं तु तत् ।
ईदृग्लक्षणमन्येषां करणा(णं) नाम पीडितम् ॥२११॥

येऽत्र स्वरान् विशिषन्ति तानत्र ब्रूमहे क्रमात् ।
स्वरैः सकरपाटैः स्यात् करपाटैः स्वरान्वितैः ॥२१२॥

द्विविधं पाटकरणं विज्ञेयं लक्ष्मवेदिना ।
करणं तत्पदाद्यं स्याद् यत्स्वरैः सपदैः कृतम् ॥११३॥

मुरजाक्षरसंयुक्तैः स्वरैर्यद्गीयते विदा ।
तद्बन्धकरणं नाम यत्स्वरैः स्यात् सतेनकैः ॥२१४॥

तत्तेनकरणं बद्धं यत्स्वरैर्बिरुदैरपि ।
बिरुदाद्यं समाख्यातं करणं गेयवर्त्मनि ॥२१५॥

पदैः सहस्तपाटैश्च स्वरैः [3]समुरजाक्षरैः ।
यद् बद्धं गीयते चित्रकरणं तन्निगद्यते ॥२१६॥

स्वरः पाटैस्तेनकैश्च क्रमाद् बद्धं यदीर्यते ।
तन्मिश्रकरणं प्रोक्तं पाटव्यत्यासभेदतः ॥२१७॥

द्विधा यत्पाटकरणं तेनेदं नवधा स्थितम् ।
तत्सर्वं त्रिविधं ज्ञेयं [4]गानभेदेन तद्यथा ॥२१८॥

आनन्दवर्द्धनं कीर्त्तिलहरीसंज्ञकं परम् ।
मंगलारम्भसंज्ञं चेत्येवं प्रत्येकमीरणात् ॥२१९॥

सप्तविंशतिसंख्यानि स्युर्यया तद्विविच्यते ।
द्विरुद्ग्राहाभिधं गीत्वा सकृद् गायेद् ध्रुवं ततः ॥२२०॥

---

[1] cf. S. R. 4. 133-45 for 208-224 above.
[2] A. B. ग्रहस्ति ष्टेस्वर० ।
[3] A. B. समुद्गजाक्षरैः ।
[4] A. B. माग ।

ध्रुवार्द्धं पश्चिम गायेदाभोगध्रुवकौ तत ॥
उद्ग्राहो गीयते यत्र तत् स्यादानन्दवर्द्धनम् ॥२२१॥

[1] उद्ग्राहस्याद्यमर्द्धं च द्विर्गायेत्तदनन्तरम् ।
सकृद्ध्रुवमथोद्ग्राहप्रथमार्द्धं सकृत् पुन ॥२२२॥

आभोगध्रुवकोद्ग्राहा गीयन्ते चेत सकृत् सकृत् ।
तदा स्या(त्) कीर्तिलहरीसज्ञक करण स्फुटम् ॥२२३॥

द्विरुद्ग्राह् प्रगायाय ध्रुवाभोगौ सकृत् पुनः ।
ध्रुवोद्ग्राहौ सकृद्गायेन्मङ्गलारम्भसज्ञके ॥२२४॥

केचित्त्वपरया प्राहु प्रबन्धकरणाभिधम् ।
ध्रुतशेखरतालेन(?) तालेन करणेन वा ॥
नियम्य गानतस्तेषां न चमत्कृतिरुन्मतम् ॥२२५॥

॥ इति सप्तविंशतिकरणानि ॥

अथ ढेङ्कीगत लक्ष्म प्रवक्ष्ये लक्ष्मविन्मुदे ।
[2]द्विरुद्ग्राहदल पूर्वं पूर्वं गीत्वा तत परम् ।
तद्दल सकृदुच्चार्य प्रयोगपरिकल्पितम् ॥२२६॥

अथवा [3]पदसम्बद्ध गायेन्मेलापक तत ।
विलम्बितलयौ तालौ ढेङ्कीकङ्कालसज्ञकौ ॥२२७॥

उद्ग्राहमेलापकयोस्तावत्तालावितीतरे ।
त्रिदलोऽस्ति ध्रुवस्तत्र द्वे दले समधातुनी ॥२२८॥

किंचिदुच्च भिन्नधातुर्द्विदल स्यात् तृतीयकम् ।
ध्रुववत सकृदाभोग गीत्वा गायेद् ध्रुव पुन ॥२२९॥

तत्र न्यासो ढेङ्किका स्यादाभोगध्रुवयो पुन ।
लयाभ्यां द्रुतमध्याभ्यां ताल (ल)स्यादिलया(त्) पुन ॥२३०॥

मुक्तावली वृत्तमाला युग्मिनी वृत्तवन्धिनी ।
चतुर्द्धेति समाख्याता तल्लक्षणमथोच्यते ॥२३१॥

तत्र मुक्तावली ज्ञेया छन्दोभी[4] रहितै पदै ।
वृत्तैर्नानाविधैर्युक्ता वृत्तमालेति कीर्तिता ॥२३२॥

---

[1] B उद्ग्राह ।
[2] cf S R 4 146 53 for 226-37 above
[3] B पदसबन्ध ।
[4] A छन्दोभि । B छन्दोभि ।

वृत्ताभ्यां युग्मिनी ज्ञेया वृत्तेनैकेन च स्मृता ।
वृत्तबन्धनिका[1] तिस्रो वृत्तमालादिकाः क्रमात् ॥२३३॥

त्रिधा स्युर्वर्णिकाख्या च मातृकागणिकेति च ।
वर्णिका वर्णजैर्वृत्तैर्मातृका मातृकाभवैः ॥२३४॥

गणिका गणजैर्वृत्तैस्तदंशापि स्युस्त्रिधा पुनः ।
समालंकृतिकाद्या स्याद्विषमालंकृतिः परा ॥२३५॥

मिश्रालंकृतिकाप्येता(स्)तासां लक्ष्म प्रचक्ष्महे ।
समसंख्यैरलंकारैः समालंकृतिरुच्यते ॥२३६॥

आद्यैर्विषमसंख्यैस्तैर्विषमालंकृतिर्मता ।
मिथैरेकद्विसंख्यैस्तैर्मिश्रालंकृतिका मता ॥
एवं स्युर्मिलिता ढेङ्कास्त्रिंशच्छ्रुतिमनोहरा(ः) ॥२३७॥

॥इति त्रिंशत्(द्) ढेङ्काः॥

[2]यत्रोद्ग्राहध्रुवौ सान्द्रस्वरबद्धौ पदैः पुनः ।
आभो(ग)श्च तदन्ते स्याद्वर्त्तनी सा मता सताम् ॥२३८॥

विलम्बितलयस्तालो रासादन्योऽत्र युज्यते ।
स्वराद्यकरणस्यैव गानमस्यास्त्रिधा मतम् ॥२३९॥

प्रतितालः कुडकश्च कङ्कालो द्रुतमण्ठकः ।
रासकश्चेति पञ्चैते न ताला वर्त्तनीस्पृशः ॥२४०॥

॥ इति वर्त्तनी ॥

[3]एतै रचिता तालैश्च वर्त्तन्येव विवर्त्तनी ॥२४१॥

॥ इति (वि)वर्त्तनी ॥

तालशून्यस्वरालापो यस्मादेतद्गतो मतः ।
तस्मादालापपूर्वं स्यादेतद्वर्त्तनिकायुगम् ॥२४२॥

॥ इति वर्त्तनीविवर्त्तिन्यौ ॥

उद्ग्राहस्याद्यमर्धं द्विप्रगायार्धमन्तिमम् ।
सकृत्प्रयोगसहितमप्रयोगमथापि वा ॥२४३॥

---

[1] A. B. ॰धास्तिस्रो ।
[2] cf. S. R. 4. 154-69 for 238-63 above.
[3] A. B. एतैर्विरचि तालैश्च ।

ततो मेलापकं गीत्वा द्विर्गायेच्च ततो ध्रुवम् ।
ततश्च सकृदाभोगं गीत्वा न्यासो ध्रुवे यदा ॥२४४॥

तदा स्यात्(द्)झोम्बडस्तत्र ध्रुवमिच्छन्ति केचन ।
सालापं मण्ठतालेनाथवा चच्चत्पुटादिना ॥२४५॥

रचितं तत्र चाभोगं परमुद्ग्राहसन्निभम् ।
उद्ग्राहे न्यसनं केचिदस्मिन्निच्छन्ति तद्विदः ॥२४६॥

एवमेष त्रिधातुः स्याच्चतुर्धातुरिति द्विधा ।
मेलापकपरित्यागादाद्यः स्यात्तद्युतः परः ॥२४७॥

उदग्राहस्याद्यभागे स्यात्(द्) गमकोऽ-[१]स्मिंस्त्रिधातुके ।
तारजो(ऽ)तारजश्चेति द्विविधोऽपि पुनः स्मृतः ॥२४८॥

तारस्थानसमुद्भूतो ध्वनिस्तारज उच्यते ।
तारजस्तेन संयुक्तः स चापि सप्तधा मतः ॥२४९॥

उद्ग्राहमुख्यधातूना स्थानकस्य निवेशनात् ।
भेदा( ) स्युस्तत्र चत्वारश्चतुर्धातुषु ते त्रयः ॥२५०॥

त्रिधातुष्वत एवैकस्तारशून्यो भवेदिह ।
प्रतापतिलकस्तेषूद्ग्राहस्य स्थानके स्थितौ ॥२५१॥

मेलापस्थानकस्थित्या प्रतापः शृङ्गनामकः ।
ख्यातोऽचलप्रतापस्तु ध्रुवे स्वस्थानकस्थिते ॥२५२॥

प्रतापवर्द्धनो नामाभोगस्य स्थाननिर्मितौ ।
एत एव त्रयो भेदाः प्रतापशृङ्गवर्जिताः ॥२५३॥

त्रिधातुषु समाख्यातु झोम्बडेषु विचक्षणैः ।
प्रभूतगमकस्तोकगमकत्वविशेषणात् ॥२५४॥

ते पुनर्द्विविधा ज्ञेया नवापि नवबुद्धिना ।
पुनर्गणविशेषेण पञ्चभेदा भवन्ति ते ॥ २५५॥

प्रायोगिकः क्रमाख्यश्च ततः क्रमविलासकः ।
चित्रो विचित्रलीलश्च, तेषां प्रायोगिको भवेत् ॥२५६॥

चतुर्गण, क्रमाख्यश्च गणैः [२]पञ्चभिरन्वितः ।
षड्भिः क्रमविलास( ) स्याच्चित्रः स्यात् सप्तभिर्गणैः ॥२५७॥

[१] A B स्मिन् धातुके ।
[२] A B पञ्चरन्वितः ।

विचित्रोऽष्टभिरेव स्यान्नवभिस्त्वेवमेव ते ।
एवमेव गणैर्धातूनुद्ग्राहादिक्रमेण च ॥२५८॥

चतुराद्यैः प्रबन्धेषु प्रबन्धान् संप्रवर्त्तयेत् ।
केषांचन मते तावत् (द्) गणवल्प्तिरियं भवेत् ॥२५९॥

उद्ग्राहखण्डगः कैश्चिदुद्ग्राहसदृश(:) पुनः ।
भागाख्य इष्यते खण्डध्रुवादूर्ध्वं निवेशितः ॥२६०॥

ततो गेयौ ध्रुवाभोगौ लम्भके(ऽ)प्येवमेव च ।
उपमारूपकश्लेषैर्विनियुक्ता रसेषु ते ॥२६१॥

त्रयोदशप्रकाराः स्यु प्रत्येकं सर्व एव हि ।
वीरशृङ्गारयोर्ब्रह्मा नरसिंहोऽद्भुते रसे ॥२६२॥

चक्रेश्वरो रसे वीरे बीभत्से चण्डिकेश्वरः ।
हास्यशृङ्गारयोर्हंसो भैरवस्तु भयानकैः(के) ॥२६३॥

विप्रलम्भे तु सारङ्गः सिंहो वीरे भयानके ।
सम्भृङ्गारे च करुणे शेखरः परिकीर्त्तितः ॥२६४॥

शृङ्गारे पुष्पसारस्तु प्रचण्डो रौद्रसंज्ञिनि ।
विष्णुर्वीरे रसे शान्ते नन्दीशः परिकीर्तितः ॥२६४ए॥

एवं ते व्योमनन्दा(:)(९०)स्युर्विश्वघ्नसंख्यया(१३) स्फुटा(:) ।
खाब्धिरुद्रमितास्ते(११७०) च ज्ञेया कृतिविशेषतः ॥२६५॥

गद्यजाः पद्यजा गद्यपद्यजा इति ते यथा ।
सानुप्रासैः पदैर्देशभाषया संस्कृतेन च ॥२६६॥

गद्यजा झोम्बडा ज्ञेया पद्यजा अपि ते यथा ।
छन्दसा येन केनापि चारुत्वेन प्रपञ्चिताः ॥२६७॥

गद्यैः पद्यैर्विरचिता झोम्बडा गद्यपद्यजाः ।
खेन्दुबाणाग्निसंख्याः(३५१०)स्युरेवं ते गुणिता बुधैः ॥२६८॥

नन्दी गदाधरो रामो माधव पुरुषोत्तमः ।
सुधाकरश्च रेवन्तः कुसुमाकरषण्मुखौ ॥२६९॥

भृगुः कृष्णो रौहिणेयो भव(ग)श्वतविद्रूपकाः(कौ) ।
नारदश्च किरातेशः सापेक्षो रुद्रवासवौ ॥२७०॥

दामोदरो रूपकारयस्ततः कमलसंभवः ।
शान्तो [1]योगेश्वर इति चतुर्विंशतिझोम्बडा(:) ॥२७१॥

[1] B. योगीश्वर ।

उपमारूपकश्लेषैरलकारैरलकृता (न्) ।
उपमोपाधिकान्तेषु झोम्बडान् ब्रूमहे क्रमात ॥२७२॥

यत्रोपमीयते वर्ण्य सुरभूमीश्वरादिभि ।
गेयभुतिर्मुखे तज्ज्ञै स नन्दी झोम्बड स्मृत ॥२७३॥

नायकस्य जलक्रीडा स्त्रीभि सार्द्धं प्रगीयते ।
नारायणस्य गोपीभिरिव स स्याद् गदाधर ॥२७४॥

सभोगो विप्रलम्भश्च यत्र नेतु प्रगीयते ।
सीताया [1]राघवस्येव स रामो नाम झोम्बड ॥२७५॥

[2]माधवस्येव मालत्या प्रीतिर्दर्शनसभवा ।
[3]वर्ण्या कामिककामिन्यो यत्रासौ माधव स्मृत ॥२७६॥

सभोगलक्षणो नेतु शृगारो यत्र वर्ण्यते ।
हरिलक्ष्म्योरिव प्रीत्या तमाहु पुरुषोत्तमम् ॥२७७॥

निशाकरकरोद्योतितनिशान्तेषु महीभृताम् ।
विलासात् केलयो यत्र वर्ण्यन्ते स सुधाकर ॥२७८॥

तुरगममधिष्ठाय कुर्वाण कन्दुकोत्सवम् ।
नायको वर्ण्यते यत्र स रैवन्त प्रकीर्तित ॥२७९॥

यत्र षड्ऋतवो वर्ण्या वण्यमुद्दिश्य लीलया ।
तुष्ट्यर्थं भूमिपालाना तमाहु कुसुमाकरम ॥२८०॥

षण्मुखस्येव भूभर्तु सग्रामो यत्र वर्ण्यते ।
जयश्रीर्बहुरूपासौ षण्मुख सप्रकीर्तित ॥२८१॥

स भृगुर्झोम्बडो ज्ञेयो भूभर्तुर्यत्र गीयते ।
भृगोरिव विशेषज्ञैश्छुरिकायुद्धकौशलम ॥२८२॥

वर्ण्यते यत्र भूभर्तुर्नियुद्धकौशल रणे ।
कृष्णस्येव स विज्ञेयो झोम्बड कृष्णसज्ञक ॥२८३॥

यत्र प्रगीयते तज्ज्ञैर्बलस्येव महीभृता ।
मधुपानविलासोऽसौ रौहिणेयो निगद्यते ॥२८४॥

---

[1] A B रायवस्येव ।
[2] A B मायवस्येव ।
[3] A B वर्ण्या ।

गीयते यत्र [१]भूस्वामेर्गजारोहणकौशलम् ।
भगदत्तवदित्येव भगदत्तः स्मृतो बुधैः ॥२८५॥

यत्र नायकतुष्ट्यर्थं परस्यानुकृतिर्जनैः ।
गीयते परिहासाय स विदूषक उच्यते ॥२८६॥

भूभर्त्तुरग्रतो यत्र शस्त्रशास्त्रकलादिना ।
विवादो वर्ण्यते तज्ज्ञैर्नारदः स निगद्यते ॥२८७॥

भूजानेर्मृगयायाने गिरीशस्येव वर्ण्यते ।
किरातचरितं[२] यत्र स किरातेश उच्यते ॥२८८॥

यत्र क्षमाभुजामग्रे वाञ्छितार्थनिवेदि(द)कम् ।
विज्ञापनवचोगानं सापेक्षं तं प्रचक्षते ॥२८९॥

क्षोणीभर्त्तुः पुरो यत्र पुरारेरिव गीयते ।
वैरीपत्तनविध्वंसः स ज्ञेयो रुद्रसंज्ञकः ॥२९०॥

देवेन्द्र इव भूमीन्द्रस्त्यागभोगादिभिर्गुणैः ।
वार्यते सदसि प्राहुर्वासवं तं विदांवराः ॥२९१॥

यत्र भूमीमहेन्द्रस्य गोपवेषहरेरिव ।
बालक्रीडा(:) प्रगीयन्ते स स्याद् दामोदराभिधः ॥२९२॥

वस्तुना येन केनापि समीचीनेन रूपतः ।
स्तुत्यः संधूयते तज्ज्ञैः स ज्ञेयो रूपको बुधैः ॥२९३॥

पद्मसंभववद्वर्ण्यः संग्राहणकलादिना ।
वर्ण्यते वर्णनाविज्ञैः स स्यात्कमलसंभवः ॥२९४॥

राज्ञो राजमहिष्या वा रूपादिगुणकीर्त्तनम् ।
कीर्त्यते यत्र तद्विज्ञैः स कान्तो नाम कीर्तितः ॥२९५॥

निवृत्तिजनकं वाक्यमध्यात्मविषयं जनैः ।
यत्र प्रगीयते स स्याद् योगेश्वरसमाह्वयः ॥२९६॥

॥ इति चतुर्विंशतिझोम्बडाः ॥

[३]मण्ठश्च प्रतिमण्ठश्च द्वितीयो रासगारुगी ।
निःसारुकः [४]कुडुक्कश्च [५]त्रिपुटो यतिलग्नकः ॥२९७॥

---

[१] A. B. भूजामे० ।

[२] B. चरित्र ।

[३] cf. S.R. 4. 157-59 for 297-98 above.

[४] A. B. कटुक्कश्च । [५] A. B. त्रिपुरो ।

अड्डतालैकताल्यौ च ताल(ा)एकादश त्विमे ।
झोम्बडे नियता , केचित् पाक्षिक मण्ठक विदु ॥
केचित्(द्)झोम्बडतालेन प्रबन्ध झोम्बड विदु ॥२९८॥
॥ इति झोम्बडप्रबन्ध ॥

[1]एकखण्डो द्विखण्डो वा धातुरुद्ग्राहसज्ञक ।
यत्र स्यादेककृत्वो वा द्वि( )कृत्वस्तस्य वा भवेत ॥२९९॥

गान ततो ध्रुवा द्वि स्यादाभोगस्तु तत सकृत ।
ध्रुव गीत्वा पुनर्न्यासो यदा स्याल्लम्भकस्तदा ॥३००॥

भागोऽप्यत्र भवेदुक्तलक्षणो झोम्बडे यथा ।
भागादूर्ध्व ध्रुवाभोगध्रुवा ज्ञेया इतीतरे ॥३०१॥

सोऽष्टधा भिद्यते तत्र वक्ष्यमाणविशेषणै ।
यस्मि(न्न)ताल उद्ग्राह स स्यादालापलम्भक ॥३०२॥

आलापानन्तर यत्र स्यादुद्ग्राहोऽन्यधातुक ।
ध्रुवस्थाने सप्रलम्भ पदलम्भ स उच्यते ॥३०३॥

यत्र ध्रुवपद नाम रूपोद्ग्राहसमन्वितम् ।
त्रिचतुष्पञ्चवार वा गीयते तद्विदावरै ॥३०४॥

उपलम्भ स विज्ञेयो नानाभोगसमन्वितै ।
ध्रुवैर्बहुविधै साकमुद्ग्राहैर्यत्र गीयते ॥३०५॥

स भागलम्भो विज्ञेयो धातुद्वयविनिर्मित ।
यत्र ध्रुवपदादभागस्ततश्चोद्ग्राहवर्णनम ॥३०६॥

उपलम्भे भागलम्भे तथा च पदलम्भके ।
शार्ङ्गदेव(म)तादेषु नाभोगो गीयते त्रिषु ॥३०७॥

उद्ग्राहा बहवो यत्र ध्रुवाभोगविवर्जिता( ) ।
एक एव तथा धातुर्विलम्भ स तु कथ्यते ॥३०८॥

यत्रोद्ग्राहोऽन्यधातु स्या(द्) ध्रुवाश्चैवान्यथा पुन ।
सोऽनुलम्भ इति ख्यात कालसेनेन धीमता ॥३०९॥

इत्यष्टौ लम्भका( ) प्रोक्तास्तालै सालगसूडगै ।
यज्झोम्बडगत लक्ष्म गमकस्थानक विना ॥३१०॥

विशिष्टमार्गतालेन सदैव भजते(ऽ)त्र य ।
स रासक इति ख्यातस्त्रिधा कैश्चिदिहेष्यते ॥३११॥

---

[1] cf S R 4 170-82 for 299 320 above

गणैर्वर्णैश्च मात्राभिः स्याद्रासवलयोऽग्रिमः ।
द्वितीयो हंसतिलकस्तृतीयो रतिरङ्गक. ॥३१२॥

चतुर्थस्तत्र मदनावतार इति केचन ।
[1]छगणेनान्तिमस्तेभ्यो गणैर्मात्राभवैर्मत ॥३१३॥

षडक्षरादादिखण्डादेकैकाक्षरवृद्धितः ।
पञ्चविंशतिराख्याता रासका वर्णसंभवाः ॥३१४॥

अष्टमातृकमारभ्य यावत् स्यात् षष्ठिमातृकः ।
चरणस्तावदेते स्युस्त्रिपञ्चाशच्च मातृकाः ॥३१५॥

चतुर्गणाङ्घ्रिमारभ्य [2]यावदष्टगणाङ्घ्रिकम् ।
गणजः पञ्चधा [3]केचिद् गणस्यैकस्य वृद्धितः ॥३१६॥

संगिरन्तेऽत्र मदनावतार इति तद्विदः ।
एवमेते समाख्याता देव(वेद)दिग्गजसंमताः(८४) ॥३१७॥

सर्वे ते रासतालेन कलिता गानयोगिनः ।
आलापानन्तरोद्ग्राहं केचिदिच्छन्ति रासके ॥३१८॥

॥ इति चतुर्विंशतिरासकलक्षणम् ॥

द्विर्गीत्वोद्ग्राहक धातुं ततो ध्रुवपदं सकृत् ।
द्विर्वा(ऽऽ)भोगध्रुवौ गीत्वा न्यासे स्यादेकतालिका ॥३१९॥

गेया तालेनैकताल्या निर्मिता गानवेदिना ।
आलापमात्रमुद्ग्राहः स्यादस्यामिति केचन ॥३२०॥

॥ इत्येकताली । इति शुद्धसूडलक्षणम् ॥

अथ [4]स्वोपज्ञसूडस्य विवृतिं विवृणे स्फुटाम् ।
अष्टाविंशतिसंख्याकैः स प्रबन्धैर्निबध्यते ॥३२१॥

तदन्ते तस्य चाभोगा गेया एकैकशोऽथवा ।
प्रत्येकं रचिता(ऽ)भोगा वक्ष्यमाणप्रकारतः ॥३२२॥

पदान्यष्टौ दशापि स्युरत्र स्वेच्छानुरोधतः ।
नानार्थविग्रहलयतालरागोपबृंहिताः ॥३२३॥

---

[1] A. B. यगणेनास्तिवस्तेभ्यो ।
[2] A. B. यावदष्टि० ।
[3] A. B. केचिद् गणैस्यै० B. केचिन्नगणस्यै० ।
[4] A. स्वोपज्ञस्य ।

छायालगोपाधिवशात् शुद्धसादृश्यतोऽपि या ।
अस्य सूडस्य मिश्रत्वमभाषिष्ट महीपतिः ॥३२४॥

[1]छन्दसा येन केनापि गद्यैः पद्यैर्विनिर्मितः ।
ध्रुवः प्रतिपदं गेयः स एव हि विपश्चिता[2] ॥३२५॥

पदान्त्याभोगरचितस्तत. पाटस्वराञ्चितः ।
दशावतारकीर्त्याद्यधवलोऽयं प्रबन्धराट् ॥३२६॥

रागोऽत्र मध्यमादिः स्यादादितालो, विलम्बितः ।
लयः, स्यान्मागधी गीतिः शृङ्गारोऽत्र रसः स्मृतः ॥
कीर्तनं वासुदेवस्य विनियोगो नृपोत्सवे ॥३२७॥
॥ इति दशावतारकीर्तिधवलनामा प्रबन्धः ॥१॥

छन्दसा मङ्गलाख्येन रचनं गद्यपद्ययोः ।
आलापश्च प्रतिपदं नानागमकपेशलः ॥३२८॥

ध्रुवः प्रतिपदं रागो ललितस्ताल इष्यते ।
आदितालः स्वरास्तेनाः प्रबन्धान्ते प्रतिष्ठिताः ॥
स हरिविजयाद्यश्च मंगलाचार उच्यते ॥३२९॥
॥ इति हरिविजयमङ्गलाचारनामा प्रबन्धः ॥२॥

रचितो गद्यपद्याद्यैर्वसन्ते[3] पार्थिवोत्सवे ।
वसन्तरागे झम्पाह्वताले मध्यलयाञ्चिते ॥३३०॥

गमकालप्तिभूयिष्ठः पूर्णवल्प(:) प्रकीर्त्तितः ।
पूर्वा(र्त्ता र्गा?) पुनस्तेनपाटो स्वरराजिविराजितः ॥
माधवोत्सवकमलाकरनामा प्रबन्धराट् ॥३३१॥
॥ इति माधवोत्सवकमलाकरनामा [4]प्रबन्धः ॥३॥

यत्र स्याद् गूर्जरी रागस्तालो झम्पेति भागशः ।
यथाशोभं प्रयोगोऽपि गद्यपद्यान्तरान्तरः[5] ॥३३२॥

आभोगान्ते स्वराः पाटा पुनः पद्यानि कानिचित् ।
सामोदवामोदरादिप्रबन्धो भ्रमरं पदम् (भ्रमरत्वयम्) ॥३३३॥
॥ इति सामोदवामोदरभ्रमरनामा प्रबन्धः ॥४॥

---

1 Quotation in R P. reads. छन्दसा कीर्त्तिपूर्वेण धवलेन विनिर्मित ।
2 A. adds विसर्ग ।
3 A. ०र्वसन्तो B. ०र्वसन्तः ।
4 A. omits प्रबन्ध. ।
5 Quotation in R. P. reads. गद्यपद्याञ्चितान्तरः ।

रागो धन्नासिका यत्र तालो वर्णयति(:) स्मृतः ।
चम्पूबन्धः प्रयोगान्ते गमकानेक[1]-विस्तरः ॥३३४॥

तदन्ते स्युः स्वरास्तेना(:) पाटाः शुषिरसाञ्चिताः ।
प्रबन्धोऽयं मधुरिपोः पुरस्ताद्रत्नकण्ठिका ॥३३५॥
॥ इति मधुरिपुरत्नकण्ठिकानामा प्रबन्धः ॥५॥

गीतो भैरवरागेण ताले वर्णयतौ तथा ।
आभोगान्तस्थितैः पाटैः स्वरैः पद्यान्वितस्ततः ॥
अचलेशकेशवादिमकुञ्जरस्तिलकाभिधः ॥३३६॥
॥ इति अचलेशकेशवकुञ्जरतिलकनामा प्रबन्धः ॥६॥

रागो गौण्डकृतिर्यत्र प्रतिमण्ठपुरस्कृतः ।
आभोगान्ते तथा पाटस्वरौ[2] पद्यगणाञ्चितौ ॥३३७॥

शृङ्गाररससंपूर्णः कृष्णकेलिविराजितः ।
मुग्धमधुसूदनाद्यो हंसक्रीडः प्रबन्धराट् ॥३३८॥
॥ इति मुग्धमधुसूदनहंसक्रीड[3]-नामा प्रबन्धः ॥७॥

प्रतिमण्ठेन तालेन रागे देशाख्यसंज्ञके ।
पचात्तुर्याक्षरैर्युक्तः पदात् सप्तमतस्तथा ॥३३९॥

आकारोपचितालापगमकाकुलविग्रहः ।
आभोगा(त्) तेनकैः पाटैः प्रचुरैरतिपेशलः ॥
हरिवल्लभपूर्वोऽयमशोकपल्लवः स्मृतः ॥३४०॥
॥ इति हरिवल्लभ-अशोकपल्लवनामा प्रबन्धः ॥८॥

मालवश्रीः स्मृतो रागस्तालो निःसारसंज्ञकः ।
वाग्गेयकारनाभोगात् पदतस्तेनसंततिः ॥३४१॥

ततः पाटा(:) पदानि स्युः पञ्चपाणि रसोऽत्र च ।
शृङ्गारो वासुदेवस्य क्रीडनं रासकादिभिः ॥३४२॥

छन्दोऽपि रासको ज्ञेयं स्वेच्छया वा कृतं भवेत् ।
स्निग्धमधुसूदनोऽयं रागावसथनामकः ॥
प्रबन्धः पुण्यचोमत्रो प्रबद्धः[4] प्रीतये हरेः ॥३४३॥
॥ इति स्निग्धमधुसूदनरागावसथनामा प्रबन्धः ॥९॥

---

[1] B. ॰विस्तर ।
[2] A. omits वरौ ।
[3] B. ॰क्रीडे ।
[4] A. B. प्रबन्धः ।

निःसारुतालरुचिरो रागे केदारसंज्ञके ।
कविनामाङ्कितपदात् पाटैः स्वर(स्वल्प)तरैरचितः ॥३४४॥

ततः पद्यं विलासेनोल्लासितं जगतीपते ।
इत्यं हरिसमुदयात्(द्) गरुडपदसंज्ञकः ॥
प्रबन्धः पृथिवीभर्त्रा हरिभक्तेन वर्णितः ॥३४५॥
॥ इति हरिपदसमुदयगरुडपदनामा प्रबन्धः ॥१०॥

तालो यर्णयतिर्यत्र रागः केदारसंज्ञकः ।
पदानि कविनामाङ्काद गीत्वा द्वित्राणि गीयते ॥३४६॥

स्वराणां सन्ततिः पाटा आलापस्तेनका अपि ।
ततस्त्रिचतुराणि स्युः पद्यानि प्रीतये विभो ॥३४७॥

विप्रलम्भाख्यशृङ्गारे शृङ्गारिजनतुष्टये ।
साकाङ्क्षपुण्डरीकाक्षभ्रमराविरुताभिधः ॥
प्रबन्धः कृष्णभूभर्त्रा राजराजेन निर्मितः ॥३४८॥
॥ इति साकाङ्क्षपुण्डरीकाक्षभ्रमररुतनामा प्रबन्धः ॥११॥

मालवीयः( ) स्मृतो गौडो रागस्तालो(ऽ)[1]ड्डुतालकः ।
शृङ्गारो विप्रलम्भाख्यो रसो देवादिवर्णनम् ॥३४९॥

[2]पदसततितस्तेनाः पाटाः स्वरसमुच्चयः ।
ततः पद्यानि यत्र स्युर्लयमध्यममानतः ॥
स प्रबन्धवरो ज्ञेयो धन्यवैकुण्ठकुङ्कुमः ॥३५०॥
॥ इति धन्यवैकुण्ठकुङ्कुमनामा प्रबन्धः ॥१२॥

रागः स्यात् स्थानगौडाख्यस्तालो वर्णयती रसः ।
शृङ्गारो विप्रलम्भाख्यः प्रमदामदनाकुलः ॥३५१॥

[3]पदानामावलेः पाठा(टा ?) गुम्फिता यत्र गीतके ।
तद्गीतं हरिशरणकदलीपत्रसंज्ञकम् ॥३५२॥
॥ इति हरिशरणकदलीपत्रनामा प्रबन्धः ॥१३॥

श्रीरागो यत्र राग(ग) स्यात् तालस्तु द्रुतमण्ठकः ।
वर्णनं वासुदेवस्य रति(स)तद्विषये स्त्रियाः ॥३५३॥

---

[1] A B ०ड्डुतालकः ।
[2] A पदसततिस्तेनाः ।
[3] Quotation in R P reads पदनामावलेः पाटाः ।

पदेभ्यः पाटसंतानं स्वरास्तेनास्तथैव च ।
[1]प्रयोगश्च भवेद्यत्र स प्रबन्धवर(:)स्मृतः ॥
हरिरमितचम्पकवर्णेभ्यः शेखराभिधः ॥३५४॥
॥ इति हरिरमितचम्पकशेखरनामा प्रबन्धः ॥१४॥

द्रुतमण्ठेन तालेन द्रुतेनैव लयेन च ।
मल्हारे रसराजे स्यात् पदानां संततेः पुरः ॥३५५॥

स्वरग्रामस्तथा पाटास्तेना अपि यथाक्षरम् ।
हरिरसमन्मथाद्यस्तिलकः स प्रबन्धराट् ॥३५६॥
॥ इति हरिरसमन्मथतिलकनामा प्रबन्धः ॥१४॥

रागो वराटिका यत्र तालो वर्णयतिस्तथा ।
पदानि स्वेच्छयालापभूयितानि यथाद्युतिः(ति) ॥३५७॥

ततः स्वराश्च पाटाश्च ततः पद्यानि कानिचित् ।
इति नारायणपदान्मदनावासनामकः ॥
प्रबन्धः क्षितिनाथेन लोकनाथस्य निर्मितः ॥३५८॥
॥ इति नारायणमदनावासनामा प्रबन्धः ॥१७॥

तालो वर्णयतिर्मेघरागो देवादिवर्णनम् ।
[2]विप्रलम्भाख्यशृङ्गारो रसः करुणवेदनम् ॥३५९॥

कविनामाङ्कितपदप्रान्ते पाटस्वरावलिः ।
[3]द्वित्राण्यथ पदानि स्युरिति लक्ष्मीपतेः पुरः ॥
रत्नावलीप्रबन्धोऽयं निबद्धः कृष्णभूभुजा ॥३६०॥
॥ इति लक्ष्मीपरि(ति)रत्नावलीनामा प्रबन्धः ॥१७॥

नट्टो रागस्तृतीयाख्यस्तालो मध्यलयः क्वचित् ।
पदानां शोभया(ऽऽ)लापगुम्फनं गानहेतुकम् ॥३६१॥

अन्ते पाटाः स्वरास्तेनास्तदन्ते पद्यगुम्फनम् ।
एषो(ऽ)मन्दमुकुन्दाद्यमकरन्दाभिधानवान् ॥
प्रबन्धः प्रीतये गीत. श्रीपतेः कृष्णभूभुजा ॥३६२॥
॥ इत्यमन्दमुकुन्दमकरन्दनामा प्रबन्धः ॥१८॥

तालो वर्णयती रागा' यमादष्टादश स्मृताः ।
मध्यमादिश्च ललितो वसन्तो गुर्जरी तथा ॥३६३॥

---
[1] A. B. प्रयोगाश्च ।
[2] A. विप्रम्भाख्य । B. विप्रलम्भाख्य ।    [3] A. B. द्वित्राण्यथ ।

[1]धन्यासी भैरवो गौण्डकृतिर्देशाख्यिकापि च ।
मालवश्रीश्च केदारमालवीयादिगौडकौ ॥३६४॥

स्थानगौडश्च श्रीरागो मल्हारश्च वराटिका ।
मेघरागश्च नट्टा च धारिणी (धोरणी) नियता इमे ॥३६५॥

मायद्राग पदानि स्यु प्रान्ते पाटस्वराणि तु ।
क्वचित्क्वचिद्गतालापभूषितानि यथारुचि (चि) ॥३६६॥

विप्रलम्भाख्यशृङ्गारो रसो नायकवर्णनम् ।
नायिकायाश्च तत्र स्यात् स प्रबन्धवर स्मृत ॥३६७॥

चतुरचतुर्भुजपदात (द) रागराजिपदात पुर ।
चन्द्रोद्योताख्यगीतोऽय काललसेनेन निर्मित ॥३६८॥

॥ इति चतुर्भुजरागराजिचन्द्रोद्योतनामा प्रबन्ध ॥

आदिताल प्रथमत प्रतिमण्ठस्तत परम ।
चतुर्मात्राह्वमण्ठश्च तुर्य स्याद्द्रुतालक ॥३६९॥

तालो वणयति पश्चान्नवमात्रिकमण्ठक ।
नि सारुश्च तथा झम्पा द्रुतमण्ठश्च रूपक ॥३७०॥

प्रतितालस्त्रिपुटक एकतालीतिसज्ञया ।
त्रयोदश क्रमात्ताला प्रतिताल पदानि च ॥३७१॥

यथाशोभालप्तियुञ्जि तावन्त्येव तत परम ।
[2]काहलातुण्डुकिन्यौ च भुवका च शृङ्गशङ्खकौ ॥३७२॥

पटहश्च [3]हुडुक्का च [4]मुरज करटा(ऽ)पि च ।
रुञ्जा च डमरु ड(ढ)क्का पाटा एतत्समुद्भवा ॥३७३॥

नि सारो(रु) पटहो डक्का मर्दलो (ल्स)त्रिवणी तथा ।
करटेति तथतेषा प्रधानाक्षरयोजना ॥३७४॥

एकताल्या डक्कुली च त्रिवली दुन्दुभिस्तथा ।
घडसश्च चतुर्णां स्यादधिका पाटसन्तति ॥३७५॥

---

[1] A धन्नासी ।
[2] A B काहालातुण्डिकान्यौ ।
[3] A B तुडक्वे ।
[4] A B मुरूज ।

प्रतितालं प्रयोगोऽपि रागो नट्टा निगद्यते ।
शृङ्गारो विप्रलम्भाख्यो रस उत्तमनायकः ॥३७५ए॥

दूतीसंवादकथनं नायिकायामिहेष्यते ।
एतत् स्याल्लक्षणं यत्र प्रबन्धः स निगद्यते ॥
हरिहारतालराजिजलधरविलासितः ॥३७६॥

॥ इति हरिहारतालराजिजलधरविलसितनामा प्रबन्धः ॥२०॥

यथाशोभालप्तिमन्ति यत्राष्टादशसंख्यया ।
तालाः पदानि रागस्य पाटास्तेनाः क्रमस्थिताः ॥३७६ए॥

वर्णसाम्यमलंकारो रसः शृङ्गारनामकः ।
देवादिवर्णनं छन्दो नानायतिमनोहरम् ॥३७७॥

त्रिविधोऽपि लयो रीतिः कैशिकी वर्णनापि च ।
वाग्गेयकारसंज्ञा च क्रमाद्रागादि कीर्त्यते ॥३७८॥

घोरणी च तथा नट्टा मेघरागो वराटिका ।
तथा मल्हारिश्रीरागौ स्यानमालवगौडकः ॥३७९॥

केदारो मालवश्रीश्च देशाख्या [1]गौडकृत्यपि ।
वसन्तो मध्यमादिश्च ललितश्च क्रमादमी ॥३८०॥

चच्चत्पुटश्चाचपुटः षट्पितापुत्रनामकः ।
संपक्वेष्टाक उत्(द्)घट्ट आदितालस्तथैव च ॥३८१॥

प्रतिमण्ठश्च मण्ठश्चाड्डतालो वर्णयत्य(ा)पि ।
द्रुतमण्ठश्च निःसारुर्झम्पा च द्रुतमण्ठकः ॥३८२॥

रूपकः प्रतितालश्च तृतीयस्त्वेकतालिका ।
पञ्चवक्त्रोद्भवाः पाटा हस्तपाटा अलग्नकाः ॥३८३॥

हौडुक्किका हस्तपाटा(श्)चित्रपाटावपाटकौ ।
हुडुक्का ढवसं(सो)मण्डिडक्काभेरीसमुद्भवाः ॥३८४॥

कंसार(रि)घर्घरीकग्रामर्दलीसंभवास्तथा ।
क्रमादष्टादशपदेष्वेते पाटाः प्रतिष्ठिताः ॥३८५॥

द्वादशादिपदेष्वस्ति विशेषः सो(स) विधीयते ।
डक्काकुडुक्काकरटाप्रोद्भवा द्वादशोऽधिकाः ॥३८६॥

---

[1] B. गौण्ड० ।

त्रयोदशे सेलुकाजा निःसानोत्थाश्चतुर्दशे ।
षष्टोद्भवाः पञ्चदशे पदे सप्तदशेऽपि च ॥३८७॥

किरिकिट्टभवा अष्टादशे पाटा अमी स्थिताः ।
वीरदण्डधायनिभवा अधिकाः संप्रकीर्त्तिताः ॥३८८॥

रागाणां षाडवाद्यानां[१] ग्रामसंभवतापि च ।
वर्ण्या वाग्गेयकारेण तालरागार्णवः स च ॥
प्रबन्धः पृथ्वीभर्त्रा मुरारिप्रीतये कृतः ॥३८९॥
॥ इति तालरागार्णवमुरारिमङ्गलकुसुमनामाप्रबन्धः ॥२१॥

क्रमेण नट्टाकेदारः श्रीरागस्यानगौडकः ।
धोरणी मालवीयश्च वराटी [२]मेघरागकः ॥३९०॥

मालवश्रीर्देवशाखा गौण्डकृतिश्च भैरवः ।
धन्नासिका वसन्तश्च गूर्जरी च (म)ल्हारकः ॥३९१॥

ललितः सप्तदश(शो)मे रागास्तावन्ति च क्रमात् ।
पदानि तेषु तालाः स्युरिमे तन्नाम कीर्त्यते ॥३९२॥

आद्यत्रिसप्तदशमद्वादशे द्रुतमण्ठकाः ।
तृतीये नवमे चैकादशे चैव त्रयोदशे ॥३९३॥

पदे पञ्चदशे सप्तदशे रूपक ईरित ।
चतुर्थे मण्ठतालश्चाड्डुतालः पञ्चमे स्मृतः ॥३९४॥

त्रिपुटः षष्ठाष्टमयोः स्या(द्) द्रुतः प्रतिमण्ठकः ।
चतुर्दशे षोडशे च तेनाः स्युः प्रतितालकम् ॥३९५॥

मध्यमादौ पुनर्मुक्तिः शृङ्गारः साभिलाषयोः ।
स्त्रीपुंसोरुत्तमस्यात्र नायकस्योपवर्णनम् ॥३९६॥

कैशिकीरीतिमाश्रित्य पदानां रचना मता ।
छन्दः स्वेच्छाविरचितं रूपके यत्र दृश्यते ॥३९७॥

सोऽयं सानन्दगोविन्दरागश्रेणिपदात् पुरः ।
कुसुमास्तरणो नाम प्रबन्धः प्रीतिकृद्धरेः ॥३९८॥
॥ इति सानन्दगोविन्दरागश्रेणिकुसुमास्तरणनामा प्रबन्धः ॥२२॥

---

१ A. B षाडवाद्या च ।

२ A. मेघरागः ।

[1]ध्रुवश्च मण्ठकश्चैव प्रतिमण्ठो नि(ः)सारक ।
अड्डातालाभिधो रास एकतालीतिनामभि ।।४२१।।

सप्तभि सालगो नाम सूड प्रोक्तो महीभृता ।
रागतालग्रहलयरचना धातुमातुभि ।।४२२।।

अलंकारैश्च भिन्नेषु यस्त्वेवान्यस्य वस्तुन ।
छायेव लगतिच्छाया रक्तिमाधुर्ययोगत ।।४२३।।

तस्माच्छायालगानि स्युस्तानि गीतानि तत्त्वत ।
यत्रोद्ग्राहस्त्रिखण्ड स्यादावृत्तिद्वयपेशल ।।४२४।।

तत्र खण्डद्वय पूर्वमेकधातुक[2]-सम्मितम् ।
किंचिदुच्चतर ताभ्या पूर्वाभ्या गानमानयो ।।४२५।।

आभोगोऽपि त्रिखण्ड स्यात् क्वचित् खण्डद्वयाञ्चित ।
क्वचित् स्यादेकखण्डोऽपि तत्राप्युच्चोऽन्तिम स्मृत ।।४२६।।

स्तुत्यनामाङ्कितस्तस्याप्येकधातु(ः) किल स्वयम् ।
त प्रगायादिमे खण्ड उद्ग्राहस्य यदा भवेत् ।।४२७।।

न्यासस्तदा ध्रुवो ज्ञेय स च षोडशधा भवेत् ।
स्वरतालोपाधिभेदादेकैकाक्षरभेदितात् ।।४२८।।

एकादशाक्षरात् खण्डात् षड्विंशत्यक्षरावधि ।
प्रकृतध्रुवखण्डैस्ते जयन्त शेखरस्तथा ।।४२९।।

उत्साहो मधुरश्चैव मङ्गल कुन्तलस्तथा ।
कमलश्चारुसंज्ञश्च नन्दनश्चन्द्रशेखर ।।४३०।।

कामदो विजयाख्यश्च कन्दर्पो जयमङ्गल ।
तिलको [3]ललितश्चेति तेषां लक्षणमुच्यते ।।४३१।।

जयन्त आदितालेन रसे शृङ्गारनामनि ।
नायकश्रोतृगातृणामायु कीर्तिधनप्रद ।।४३२।।

नि सारे(रो) शेखरो वीरे गातु श्रीसुभगत्वद ।
उत्साह (ह) प्रतिमण्ठेन हास्ये यशोविवृद्धिद ।।४३३।।

---

[1] cf S R 4 313–31 for 421–42 above

[2] A B गनिमम् ।

[3] A. B तिलकपति ।

[1]मधुरः करुणे गेयो भोगदो हयलीलया ।
[2]शृङ्गारे निर्मलः(मङ्गलः)क्रीडातालेन तनुते द्युतिम् ॥४३४॥

लघुशेखरतालेन कुन्तलो विस्मये प्रिये ।
झम्पातालेन [3]कमलो विप्रलम्भे सुखावहः ॥४३५॥

निःसारो[4] हर्षवश्चारो(सौ) रसे वीरे प्रकीर्तितः ।
वीरशृङ्गारयोरेकताल्यां[5] सिद्ध्यै[6] च नन्दनः ॥४३६॥

शृङ्गारहास्यवीरेषु प्रतिमण्ठाख्यतालतः ।
चन्द्रशेखरनामायं [7]गायकालीष्टकामदः ॥४३७॥

[8]शृङ्गारे प्रतिमण्ठेन कामदोऽभीष्टकामदः ।
द्वितीयतालतो हास्ये [9]विजयो नेतुरायुषे ॥४३८॥

आदिताले शुचौ हास्ये कन्दर्पः करुणे तथा ।
शृङ्गारवीरयोस्ताले क्रीडाख्ये[10] जयमङ्गलः ॥५३९॥

एकताल्यां[11] रसे वीरे शृङ्गारे जयेषिणाम् ।
जयोत्साहप्रदः[12] पुंसां तिलकोऽन्वर्थनामभृत् ॥४४०॥

शृङ्गारे प्रतिमण्ठेन ललितः सर्वसिद्धिदः ।
खण्डयोराद्ययोर्वर्णनियमः स्याच्चतुर्षु वा ॥
सर्वखण्डेषु गमकाः केषुचिद्वा यथारुचि ॥४४१॥

यथालक्ष्म जयन्तादीन् ध्रुवान् यः शम्भुसद्मनि ।
गायति प्रयतो भूत्वा स यज्ञफलमश्नुते ॥४४२॥

[13]गानापूर्वस्य निवृ(र्वृ)त्यै [14]जयन्तादिध्रुवेष्विह ।
नियमो वर्णतालानां नान्यतालनिवृत्तये ॥४४३॥

तेन तालान्तरैर्गेया बुधैश्चच्चत्पुटादिभिः ।
अथ सामान्यलक्ष्माणो ध्रुवा ज्ञेया यदृच्छया ॥४४४॥

---

[1] B adds गणेशाय नम । A change in the handwriting is clearly marked here. There appears to be a fresh beginning.
[2] A B. शृङ्गारैर्निर्मल । C gives the above reading.
[3] B. कुसला । C. कसला । [4] A. नि सारे B. C. नि सारो ।
[5] B. C. ताम्या । [6] B सिद्ध्येव । [7] C. गायकामीष्ट० ।
[8] B. C. omit this line. [9] B. विजये । [10] B. क्रीडार्थे ।
[11] B. ताल्य । C. ताल्य । [12] A. ०प्रद ।
[13] A. गानात् पूर्वस्य । [14] A. जयन्त्यादि० ।

जयन्ताद्यास्तु नियता गातव्याः फलसिद्धये ।
ध्रुवद्वयशरीरा[1] स्यादेला खण्डैककेन च ॥
आभोगः[2], किन्तु निर्माणं तस्या धर्मान्तराप्तये ॥४४५॥

इति ध्रुवयश.प्राप्त्यै [3]कालसेनेन भूभुजा ।
षोडशध्रुवनिर्माणं यथाशास्त्रं विनिर्मितम् ॥४४६॥
॥ इति षोडशध्रुवाः ॥

[4]यस्मिन्नुद्ग्राहखण्डे स्यात् (द्) यतिद्वन्द्वमर्थैकिका ।
विरति-[5]र्ध्रुवखण्डस्य गानद्वैगुण्यमाश्रित ॥४४७॥

ततः [6]खण्डोऽन्तराख्यश्च पाक्षिकस्तस्य गानतः ।
ध्रुवगानं सकृत्तस्मादाभोगो यत्र गीयते ॥४४८॥

ध्रुवे न्यासः स मण्ठः स्यान्मण्ठतालेन निर्मितः ।
जयप्रियो मङ्गलश्च सुन्दरो वल्लभस्तथा ॥४४९॥

कलापः कमलश्चेति स मण्ठः षड्विधो भवेत् ।
[7]रचना ग्रहरागादि-[8]साम्येऽप्यस्य यदीक्षते ॥४५०॥

षड्विधत्वं तु मण्ठाख्यताल-[9]षाड्विध्यतस्तु तत् ।
जयप्रिय(:) स्यान्मण्ठेन जगणाख्येन वीरतः ॥४५१॥

शृङ्गारे मङ्गलो गेयो मण्ठेन [10]भगणात्मना ।
सगणाकारमण्ठेन शृङ्गारे सुन्दरो मत· ॥४५२॥

वल्लभः करुणे गेयो रगणाकृतिमण्ठतः ।
हास्ये रसे विरामान्तनगणेन कलापक ॥
विरामान्तद्रुतद्वन्द्वं लघुश्च [11]कमलोऽद्भुते ॥४५३॥
॥इति षण्मण्ठका ॥

यादृशं मण्ठस्योक्तमुद्ग्राहे लक्ष्म तादृशम् ।
प्रतिमण्ठादिपञ्चानां लक्ष्म सेयं विचक्षणै ॥४५४॥

---

[1] A. शरीर ।
[2] B. C omit विसर्ग ।
[3] B. C. कुम्भकर्णेन भूभृता ।
[4] cf. S. R. 4. 332-42 for 447-60 above
[5] A. B. C. विरति ध्रुव० ।
[6] B. C. खण्डान्तराख्यस्य ।
[7] A. रचनात् ।
[8] B. सामीप्यस्य ।
[9] A. षड्विध्यस्तु ।
[10] B. C. नगणात्मना ।
[11] A. B. C. कमले(ऽ)द्भुते ।

तत्राद्यत्रितये [1]रूपे भेदस्तालभिदात्मज ।
तथान्तिमद्वये भेदो रचनाहेतुको मत ॥४५५॥

एषां प्रातिस्विको भेदो[2] विशिष्य प्रतिपाद्यते ।
प्रतिमण्ठेन तालेन निर्मित प्रतिमण्ठक ॥४५६॥

अथ चतुर्विधस्तालचातुर्विध्यस्वरूपत ।
[3]तेषामाद्योऽमरस्तारो विचार कुन्द इत्यपि ॥४५७॥

[4]प्रतिमण्ठेनामर( )स्यात(द)गुरुणा तूज्ज्वले रसे ।
॥ इत्यमर ॥१॥

प्रतिमण्ठेन तालेन तार॰ स्याद्वीररौद्रयो ॥
विरामान्तद्रुतद्वन्द्वाल्लघुद्वन्द्वस्वरूपिणा ॥४५८॥
॥ इति तार॰ ॥२॥

विचार॰ स्याद्विरामान्तनगणात् करुणे[5] रसे ।
॥ इति विचार॰ ॥३॥

विराममध्य-[6]नगण कुन्द स्याददभुते रसे ॥४५९॥
॥ इति कुन्द ॥४॥

शुचावपि भवन्त्येते चत्वार प्रतिमण्ठका ॥४६०॥

यत्कैश्चिद्रुक्ता सगणे[7] भगणे प्रतिमण्ठता ।
तद्रूपादर्शनात्तेषां सा घटेत कथ तथा ॥४६१॥

उच्यते, पृथगेवैते तन्मते प्रतिमण्ठका ।
चत्वारस्तो पृथक तेभ्यो मण्ठकेष्वपि दर्शनात ॥४६२॥
॥ इति चत्वार॰ प्रतिमण्ठका ॥

[8]नि सारुतालरचितो नि सारुरिति गीयते ।
स षड्विध( ) स्यात्तालस्य नि॰सारो( ) षड्विधत्वत ॥४६३॥
[9]वैकुण्ठानन्दकान्तारसमरा वाञ्छितोऽपि च ।
विशाल इति, वैकुण्ठो [10]दद्वयाल्लद्वयात शुभे ॥४६४॥
॥ इति वैकुण्ठ॰ ॥१॥

---

[1] A रूप।    [2] B भेद।    [3] B तेषा प्रत्यमरस्तारे। C तेषाममरस्तारो।
[4] B गुरुणा प्रतिमण्ठेनामर( ) स्याद्दुत्कले रसे।
C गुरुणा प्रतिमण्ठेनामर( )स्यादुज्ज्वले रसे।
[5] A करुणा।    [6] A मगण।    [7] B सगणो।
[8] Cf S R 4 343 59 for 463 81 above
[9] S R वैकुन्द।    [10] A Omits द।

दद्यादानन्दमानन्दे[1] विरामान्तद्रुतद्वयात् ।
॥ इत्यानन्द ॥२॥

कान्तारो विप्रलम्भे स्याल्लघुगुर्वातमना स्थित· ॥४६५॥
॥ इति कान्तार· ॥३॥

विरामान्त[2] लघुद्वन्द्व वीरे समरनामानि ।
॥ इति समर· ॥४॥

नगणाद्[3]-द्वयेन स्याद् वाञ्छितो वाञ्छित[4]-प्रद ॥४६६॥
॥ इति वाञ्छित ॥५॥

शृङ्गारे स्याद विशालाख्यो लो दौ ल इति वर्त्मणा ॥४६७॥
॥ इति विशाल· ॥६॥

॥ इति षड्विधो नि सार[5] ॥
[6]अड्डतालो(ऽ)ड्डतालेन निबद्ध· परिगीयते ।
अड्डतालस्य षाड्विध्यात् षोढा(ऽ)यमपि कीर्त्तित· ॥४६८॥

नि शङ्कशङ्कौ[7] शीलश्च चारोऽय मकरन्दक ।
विजयश्चेति, तत्राद्या नि शङ्को विस्मये[8] भवेत ॥
लघुना गुरुणा चैव द्रुतद्वन्देन निर्मित ॥४६९॥
॥ इति नि शङ्क ॥१॥

शृङ्गारवीरयो· शङ्को द्वद्वयादादिगे लघौ ॥४७०॥
॥ इति शङ्क[9] ॥२॥

शान्ते रसेऽड्डतालेन विरामान्तद्रुतद्वयात ।
लघुना [10]शीलनामा(ऽ)ड्डतालोऽय परिकीर्त्तित ॥४७१॥
॥ इति शील· ॥३॥

द्वद्वयाल्लगुरुभ्या स्याच्चारो वीरेऽद्भुते रसे ।
॥ इति [11]चार· ॥४॥

---

[1] A B C ०मानन्दो ।
[2] B विरामान्त(I)ल्लघु० ।
[3] A नगणादद्वयेन ।
[4] A वाञ्छित प्रद । B C वाञ्छितप्रदा ।
[5] A B C निसार ।
[6] C अडडु ।
[7] B C नि शङ्काङ्कलीलाश्च ।
[8] A विस्मयो ।
[9] A शङ्कर ।
[10] B C शीत० । A शीलना शीलनामा ।
[11] A विचार ।

द्रुताभ्यां गुरुणा स्यातः शृङ्गारे मकरन्दकः ॥४७२॥

॥ इति मकरन्दः ॥५॥

[1] द्रुताभ्यां लघुना वीरे रसे स्याद्विजयाभिधः ॥४७३॥

॥ इति [2]विजयः ॥६॥

॥ इति षड्विधोऽड्डुतालः ॥

बद्धो रासकतालेन यः [3]स रासक उच्यते ।
कम्बुजो वरदाख्यश्च विनोदो नन्द इत्यसौ ॥४७४॥

चतुर्द्धा रचनाभेदाद् भिद्यते स यथोच्यते ।
चतुर्षु रासकेषु स्यादुद्ग्राहो द्विदलः[4] सदा ॥४७५॥

आदावाद्यन्तयोरन्ते ध्रुवस्यालापका यदि ।
भवन्ति रासकास्तर्हि कम्बुजाद्यास्त्रयः क्रमात् ॥
[5]करुणे विस्मये [6]देवस्तुतावन्यरसेष्वपि ॥४७६॥

॥ इति कम्बुजवरदविनोदाः ॥१-३॥

यत्रालापमयः खण्ड उद्ग्राहस्यादिमो भवेत् ।
स्यातां शुद्धौ ध्रुवा(ऽ)भोगौ स श्रिये नन्दरासकः ॥४७७॥

॥ इति नन्दः ॥४॥

॥ इति चतुर्विधरासकः ॥

या तालेनैकतालयैव बध्यते सैकतालिका ।
रमा च [7]चन्द्रिका चैव विपुलेति च सा त्रिधा ॥
तिसृष्वप्यासु कर्तव्यो नियतो[8] धातुरन्तरः ॥४७८॥

यस्यामेकविराम(ः) स्यादुद्ग्राहो धातुरन्तरः ।
पदात्मा सा रमा नाम गातृश्रोत्रोः श्रिये मता ॥४७९॥

॥ इति रमा ॥१॥

उद्ग्राहो द्विदलो[9] यस्यामालापैरञ्चितोऽन्तरः ।
सानुप्रासा भूरियतिश्चन्द्रिका सा घनद्रुता ॥४८०॥

॥ इति चन्द्रिका ॥२॥

---

[1] A. तादृम्या ।    [2] A. विज्ञेय ।
[3] C. omits स ।    [4] A. द्विलद. ।    [5] B. C. वरुणे ।
[6] A. C. देवस्तुनौ अन्य० ।    [7] A. चन्द्रका ।
[8] B. C. नियमो ।    [9] A. द्विरलो । C. द्विगलो ।

यस्यामालापमालप्य[1] तत उद्ग्राहवर्णनम् ।
[2]आलापाक्षरयोरन्यतरात्मा धातुरन्तरः ॥
विपुला विपुलानन्ददायिनी सैकतालिका ॥४८१॥

॥ इति विपुला ॥३॥

॥ इति त्रिविधैकताली ॥

रूपकं नाम तद्गीतं [3]यत्क्रीडातालनिर्मितम् ।

॥ इति रूपकम् ॥

यतितालेन यद्गीतं [4]तद्गीतं यतिसंज्ञकम् ॥४८२॥

॥ इति यतिः ॥

यद्यप्येतद्द्वयं लोके प्रसिद्धं लक्ष्मवर्त्मनि ।
तथापि मूलराहित्यान्न [5]मयाऽत्र प्रपञ्च्यते ॥४८३॥

यद्यप्यनेकशो भेदा मण्ठादेस्तालभेदतः ।
तथापि ते न तन्यन्ते [6]यतस्तालेषु सन्ति ते ॥४८४॥

[7]शुद्धधर्मैकनिष्ठत्वा(त्) मिश्रधृष्याभिगम्यतः ।
छाया लगति नो यावा यत्र स स्तात्जयी नृप ॥४८५॥

इति श्रीराजाधिराज-[8]महोमहेन्द्र-[9]श्रीकालसेनेन विरचिते [10]संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां गीतरत्नकोशे प्रबन्धोल्लासे सूडपरीक्षणं द्वितीयं समाप्तम् ॥

---

[1] A. ०लाप्य । [2] A. आलापाक्षर० ।
[3] A. यत्क्रीडा । [4] A. यद्गीत ।
[5] A. म... ..पञ्च्यते । [6] A. यतस्तालेषु ।
[7] A शुद्धे । [8] B. Omits महोमहेन्द्र । [9] B C. कुम्भकर्णविरचिते ।
[10] B. संगीतरत्नकोशे प्रबन्धोल्लासे षोडशसाहस्र्यां सूडपरीक्षणं प्रथमम् । C. संगीतराजे गीतरत्नकोशे प्रबन्धोल्लासे षोडशसाहस्र्यां संगीतमीमांसायां सूडपरीक्षणं द्वितीयं समाप्तम् ।

## आलिक्रम-प्रबन्धा नाम तृतीयं परीक्षणम्

यस्या आलिक्रमात् केलिकलनानां कला क्रमात्[1] ।
प्रतिगीत्युपचीयन्ते तां नमामि महेश्वरीम् ॥१॥

पञ्चवक्त्रोद्भवैस्तालैः पञ्चभिः क्रमयोजितैः ।
प्रतिबद्ध[2] प्रबन्धोऽयं [3]पञ्चतालेश्वराभिधः ॥२॥

[4]आलापः मार्गतालः स्यादेकताल्याऽथवा भवेत् ।
प्रतिताल द्विरभ्यस्तं पृथक् स्यात् पदपञ्चकम् ॥३॥

आद्येषु त्रिषु तालेषु द्वयो स्यादवशिष्टयो ।
षट्पदानि ततो गेया पदमानेन गानत ॥४॥

पृथक् पृथक् स्वरा पाटा यथास्व तालयोगिनः ।
तेन तेनैव तालेन ततो द्विगुणमानत ॥५॥

तत स्यात् पाटहं पाटैर्हुडुक्कैः शङ्खसमवं ।
कास्यतालोद्भवं पाटै-[5]र्मोरजैरन्तर क्रमात् ॥६॥

द्रुतमाना-[6]द्यथाभोग-[7]स्तत्र स्याद्रूपकाभिधा ।
वर्ण्यनाम तथा वाक्य मङ्गलाशी पुरःसरम् ॥७॥

[8]उद्घट्टेनैव तालेन न्यास आलाप ईरित ।
पञ्चभिर्मार्गतालैश्च सप्तविंशतिखण्डवान् ॥८॥

यस्मात प्रगीयते लोके पञ्चतालेश्वरस्तत ।
[9]पाटात्मत्वादन्तरस्य न खण्डत्वमिहोदितम ॥९॥

अन्वित स्वरतालाभ्यां [10]पदखण्डमिह स्मृतम् ।
केचित् प्रणिगदन्त्यत्र पूर्वमालाप इष्यते ॥१०॥

तत स्वरास्तत पाटा [11]पदानि स्युस्ततोऽपि च ।
अन्तरः [12]पाटरचितस्ततश्चान्ये स्वरादय ॥११॥

---

[1] B C कला ।
[2] A B omit विसर्ग
[3] B C पञ्चतालेश्वरस्त्विह ।
[4] cf S R 4 256 63 for 3 20 above
[5] C ०मोरजै० ।
[6] A तथाभोग० ।
[7] A भोगतत्र ।
[8] A उत्घटेनैव ।
[9] A पाटान्तरत्वाद० ।
[10] B C पद ।
[11] B C पादानि ।
[12] B पाटरचिता० ।

चत्वारः स्युः क्रमादत्र चतुरस्रादितालतः ।
स्वरपाटस्थिति केचित् प्राहुः प्रतिपदं बुधाः ॥१२॥

तत्र च स्वरपाटाभ्यां [1]पदान्तादथवा [2]पदात् ।
एवं खण्डाः क्रमात् (ज्) ज्ञेयाः सान्तराः सप्तविंशतिः ॥१३॥

ततोऽन्तरस्थपाटेभ्यः स्वरपाटा [3]विलक्षणाः ।
न ततः श्रुतिवैरस्यमन्तरा यत्पदस्थितिः ॥१४॥

अथवा विरसत्वादौ न मुनीनामिहाग्रहः ।
[4]स्वरपाटादनु यदा पदगानं विधीयते ॥१५॥

तदा स्वरानन्तरास्ते पाटा यैरन्तराः[5] कृताः ।
पदादिगाने येनैव तालो मानेन गीयते ॥१६॥

अन्तरेषु तत. कार्यस्तालो द्विगुणमानतः ।
वीरावतारश्शृङ्गारतिलकश्चेत्ययं द्विधा ॥१७॥

वीरावतारस्तत्र स्याद् बद्धो वीररसेन यः ।
यः शृङ्गाररसे बद्धः शृङ्गारतिलकस्तु सः ॥१८॥

रसतालवदित्यत्र न रागा नियता मताः ।
नियतान् केचिदिच्छन्ति नट्टा तोण्डी[6] वराटिका ॥१९॥

हिन्दोलो दीपकश्चैव याडवश्चेतिसंज्ञया[7] ।
इत्येष विधिदृष्टत्वात् [8]सर्वदेवप्रियंकरः ॥२०॥

॥ इति पञ्चतालेश्वरनामा[9] प्रबन्धः ॥१॥

[10]गद्येनैवाथ पद्येन रागेणैकेन केनचित् ।
तालार्णवः स्वेच्छया स्यात्तालैर्भूरिभिरन्वितः ॥२१॥

॥ इति तालार्णवः ॥२॥

[11]यत्र स्युर्भूरयो रागाः स स्याद् रागकदम्बकः ।
नन्द्यावर्त्तः स्वस्तिकश्च [12]पद्मपत्रस्तृतीयकः ॥२२॥

अन्तर्गर्भश्चतुर्थः[13] स्यात्(द्) भ्रमराम्रेडितावपि ।
इत्येवं गदितः षोढा [14]तल्लक्षणमथोच्यते ॥२३॥

---

[1] A. पदान्तरादथवा । [2] B. भवेत् ।
[3] A. B. विचक्षण. । C. विलक्षणात् । [4] A. स्वरः ।
[5] A. omits विसर्ग । [6] B. C. तोडी । [7] A. सज्ञय ।
[8] B. omits सर्व......स्यात् (verse 20-21) C. सर्वदेवप्रियकर. ।
[9] C. omits नामा । [10] cf. S. R. 4. 264.
[11] cf. S. R. 4. 253-56 for 22-25 above. [12] A. पद्मपत्रक० ।
[13] A. C. omit विसर्ग । [14] A. तल्लमथो० ।

नन्द्यावर्त्तश्चतुर्वृत्तो[1] रागराजिविराजित ।
तालैश्चतुर्भिर्गातिव्य स्वेच्छया परिकल्पितै ॥२४॥

अन्ये भवन्ति पूर्वस्मात् पूर्वस्मादुत्तरोत्तरम् ।
पञ्चापि द्विगुणैस्तालैर्वृत्तैश्च [2]स्वस्तिकादय ॥२५॥

एतेषां बिरुदैर्युक्त आभोग[3] स्यात पदान्तरै ।
उद्ग्राहेण भवेन्न्यासस्तालमानद्वयेन वा ॥२६॥

स्वरै पाटैश्च तेनैश्च व्यस्तैर्वापि समस्तकै ।
द्वितीयेन युत वापि [4]वृत्तमत्रोच्यते बुधै ॥२७॥

बिरुदान्याहुरत्रैके प्रतिवृत्तमतस्त्रिधा ।
प्रत्येकमेकको भेद एषां सपद्यते स्फुटम् ॥२८॥

स्वरादेर्ग्रथनादत्र खण्ड[5] वृत्तेन वर्ण्यते ।
निगद[6] निगदन्त्यत्र तालानामिव तद्विद ॥२९॥

रागाणा नियम तच्च न हि सर्वसमञ्जसम् ।
षड्भिरङ्कैरुपेतोऽप्य रागैर्गेयो यथारुचि ॥३०॥

नन्द्यावर्त्तादिकान् प्राहुश्चतुरोऽभिधयान्यथा[7] ।
सगरो वासवनृपो महत्तर इति क्रमात ॥३१॥

[8]द्वीप भानु तथैवाहुरभिधे त्ववशिष्टयो ।
तौ सप्तभिर्द्वादशभि[9] खण्डै स्याता क्रमेण च ॥३२॥

तालैश्च खण्डसख्याकै शार्ङ्गदेवादयस्त्विमम् ।
वृत्तैरेव समाचख्युर्गद्येनैन परे जगु ॥३३॥

कश्चिद् गद्येन रचित तालेनैकेन केनचित् ।
नन्द्यावर्त्ताभिध प्राह नानारागविराजितम् ॥३४॥

॥ इति [10]रागकदम्बनामा प्रबन्ध ॥३॥

यत्र वाग्गेयकारेण स्वरै षड्जादिसादिकै[11] ।
अर्थो निबध्यतेऽभीष्ट स स्वरार्थो निगद्यते[12] ॥३५॥

---

[1] A B ०वृत्तौ ।
[2] A स्वास्तिका० ।
[3] A omits विसर्ग ।
[4] A वृत्तमात्रो० ।
[5] A खण्डवृत्तेन B खण्ड वृत्तैनं C खण्डवृत्तेनं ।
[6] C निगदन्ति गदन्यत्र ।
[7] A (ऽ) भिद्ययानया । (ऽ) भिधयान्यया can also be a possible reading
[8] A B दीप ।
[9] A omits विसर्ग ।
[10] B कदम्ब । C रागकदम्ब ।
[11] A C omit विसर्ग ।
[12] cf S R 4 223 24

स द्विधागादि शुद्धत्वमिश्रत्वोपाधिभेदतः ।
एकादिसप्तपर्यन्तषड्जाद्याद्य(?)क्षरावलिः ॥३६॥

दृश्यतेऽर्थवती यत्र स शुद्ध इति गीयते ।
स्वरवर्णः समस्तो वा व्यस्तो वा यत्र गीयते ॥३७॥

पदान्तरेण संयोज्यः[1] स मिश्र इति कीर्त्यते ।
स सप्तधा भवेदेकद्व्यादिकैर्ग्रथितः स्वरैः ॥३८॥

[2]तत्रानेकप्रकाराः स्युः क्रमात् क्रमनियोजितैः ।
भेदा द्वित्रिस्वरादीनां स्वरैरर्थवशानुगैः ॥३९॥

सर्वत्र ध्रुवकोद्ग्राहौ कार्यौ [3]गीतानुसारतः ।
उद्ग्राहे न्यास आभोगः कर्तव्यः स्यात् पदान्तरैः ॥४०॥

यावन्तः स्यु(ः) स्वरा यस्मिन् [4]रागे तावद्भिरेव तैः ।
शुद्धो मिश्रश्च कर्तव्यः स्वरार्थ(ः) स्वरकोविदैः ॥४१॥

अत्र वाग्गेयकारेण मात्राढ्यया करणेन वै[5] ।
गतार्थता यतस्तालनियमो न विवक्षितः ॥४२॥

॥ इति स्वरार्थः[6] प्रबन्धः ॥४॥

[7]मातृकावर्णपूर्वाणि क्रमतः[8] स्युः पदानि चेत् ।
अर्थवन्ति तदा ज्ञेया मातृका सा त्रिधा मता ॥४३॥

दिव्या च मानुषी [9]दिव्यमानुषी चेति भेदतः ।
दिव्या संस्कृतबन्धेन मार्गतालैश्च गीयते ॥४४॥

मानुषी[10] प्राकृतपदैस्तालैर्देशीगतैः स्मृता ।
देवमानुषभाषाभिर्मिश्राभिर्या प्रगीयते ॥४५॥

मार्गदेशीगतैस्तालैः सोच्यते दिव्यमानुषी ।
सा [11]पुनर्द्विविधा ज्ञेया निबद्धा [12]चानिबद्धका ॥४६॥

पद्यैर्विरचिता तत्र निबद्धा कीर्तिता बुधैः ।
गद्यबद्धानिबद्धा स्यात् येदृशं मातृका स्मृता[13] ॥४७॥

---

[1] A. omits विसर्ग ।
[2] B. ते चानेक॰ ।
[3] B. C. गाता॰ ।
[4] A. रागे. ।
[5] C. वो ।
[6] A. B. स्वरार्थप्रबन्ध ।
[7] cf. S R. 4. 218-52 for 43-9 above.
[8] A. C. omit विसर्ग ।
[9] A. दिव्यामानुषी ।
[10] B. C. मानुषे. ।
[11] A. पुनर्द्विधा ।
[12] C. चानिबद्धिका ।
[13] B. adds विसर्ग ।

आभोगेऽन्यपदैरत्र न्यास उद्ग्राहमाश्रित ।
केचित्तु प्राकृता भाषामत्र नेच्छन्ति सूरय ॥४८॥

सर्वमन्त्रमयी [1]ह्येषा गातव्या वेदपारगै ।
राजभिस्तु विशेषेण तथान्यै-[2]र्निर्मलात्मभि ॥४९॥

पुनाति कीर्तनादेव मातृका भुवनत्रयम् ।
यतो ब्रह्मादिका देवा अस्यामेव प्रतिष्ठिता ॥
शब्दब्रह्मनिदान च पराविद्येयमेव हि ॥५०॥

॥ इति मातृका ॥

[3]अपाद [4]पादसघातो गद्यमुक्त मनीषिभि ।
तच्च षोढा वृत्तगन्धि चूर्णमुत्कलिकाभिधम ॥५१॥

ललित खण्डक चित्रं, तल्लक्षणमथोच्यते ।
वृत्तभागयुत यत् स्याद् वृत्तगन्धि तदुच्यते ॥५२॥

चूर्णक [5]यत्पदैर्द्वित्रै(श)चतुष्पञ्चैस्तथाकृतम् ।
पदैर्दीर्घसमासैर्यत्तत् स्यादुत्कलिकाभिधम् ॥५३॥

ललित पञ्चषैं(षै)र्ज्ञेय पदैर्व्यस्तै समस्तकै ।
तत् खण्ड यत्समारब्धरीतिभङ्गेन निर्मितम् ॥५४॥

चम्पूबन्धकृत यत्स्यात्तद्गन्ध चित्रमुच्यते ।
सर्वं गद्यमिद ज्ञेय सामवेदसमुद्भवम् ॥५५॥

वृत्ति स्याद् भारती रीति पाञ्चाली [6]वृत्तगन्धिनि ।
वृत्ति स्यात सात्वती रीतिर्वैदर्भी चूर्णसज्ञिनि ॥५६॥

वृत्तयो [7]रीतयो यत्र सर्वास्तच्चित्रमुच्यते ।
वैदर्भी कैशिकीति द्वे चित्रे [8]रीती इतीतरे ॥५७॥

वृत्तिरारभटी गौडी रीतिरुत्कलिकाभिधे ।
ललिते कैशिकीवृत्ति पाञ्चालीरीतिरिष्यते ॥५८॥

खण्डे[9] स्यात् [10]सात्वतीवृत्तिर्वैदर्भी-[11]रीतिरद्भुता ।
द्रुता विलम्बिता मध्या तथा द्रुतविलम्बिता ॥५९॥

---

[1] B C ह्येषा ।  [2] B निखिलात्मभि ।
[3] cf S R 4 185 99 for 51-74 above  [4] C पद० ।
[5] B C यत्पदैर्बद्ध द्वित्रैस्त्रिचतुरैरथ ।
[6] A B वृत्तगन्धिनी C वृत्तिगन्धिनी ।  [7] A रीतयोर्यत्र ।
[8] B रीति ।  [9] B C खण्ड ।
[10] A B सत्वती० ।  [11] B C वृत्ति० ।

द्रुतमध्या तथा मध्यविलम्बेति षडीरिताः ।
गद्यस्य गतयस्तत्र बहुभिर्लघुभिः कृता ॥६०॥

गतिर्द्रुताभिधा[1] ज्ञेया स्वल्पैस्तैः स्याद् विलम्बिता ।
समस्तैः स्याद्गतिर्मध्या गतिर्द्रुतविलम्बिता ॥६१॥

लघुभिः स्यात् पृथग्भूर्गुरुभिः स्यात् [2]पृथग्विधैः ।
द्रुतमध्या गतिर्मध्यविलम्बेति च तैरिह ॥६२॥

मिश्रितैः स्याल्लघुगुरुभिर्गतय[3] षडीरिताः ।
एवं प्रत्येकमेतेन गतिषट्केन[4] भेदतः ॥६३॥

षोढा गद्ये कृते जाता षट्त्रिंशद्गद्यजाभिधाः ।
शान्ते रसे वृत्तगन्धिचूर्णके द्वे प्रकीर्तिते ॥६४॥

वीरे तु स्यादुत्कलिका शृङ्गारे ललितं पुन ।
हास्ये खण्ड तथा [5]चित्रं शृङ्गारे परिकीर्तितम् ॥६५॥

स्यातामाद्ये पीतवर्णे श्वेते ललितखण्डके ।
रक्तमुत्कलिकासंज्ञं चित्रं स्याच्चित्रवर्णयुक्[6] ॥६६॥

मुनिर्ब्रह्मा च रुद्रश्च कामसिद्धीशविष्णवः ।
वृत्तगन्ध्यादिगद्येषु क्रमात् स्युर्देवता इमाः[7] ॥६७॥

वेणीमिश्रमिति द्वन्द्वक्षिप्ता(:)कैश्चित् प्रगीयन्ते[8] ।
गद्यस्याष्टौ भिधा(दा)स्तत्र वेणी स्यात् सर्वभेदजा ॥६८॥

मिश्रं स्याच्चूर्णकैर्वृत्तगन्धिभिश्च प्रपञ्चितम् ।
अथ गानविधिस्तस्य सप्रकारो निरूप्यते ॥६९॥

आदौ विधाय प्रणवं नानागमकपेशलम् ।
सालकारमताल च विलम्बितलयाञ्चितम् ॥७०॥

[9]आद्यन्तस्वरभूयिष्ठं नानापाटाक्षरान्वितम् ।
एवमाद्यं पद गीत्वा पदद्वन्द्व पृथक् ततः ॥७१॥

प्रबन्धाङ्गं सताल च विलम्बितलयाञ्चितम् ।
प्रत्येकं द्वि.प्रगायाय प्रयोगो[10] यत्र गीयते ॥७२॥

---

[1] A ०भिधेया ।
[2] B C तथाविधैः ।
[3] A B C गुरुभिरेव रीति (A रीति) ।
[4] A गति षड्जेन ।
[5] A. विचित्र ।
[6] B वर्णकम् ।
[7] A. गणा ।
[8] A B. C ०यते ।
[9] A B आद्य च । B Omits verse 71 and the first half of 72
[10] A. प्रयोगे ।

विलम्बितेन मानेन [1]गातृनेत्रभिधायुत [2]।
अविलम्बितमानेन सताल तदद्वय पुन ॥७३॥

गीत्वा न्यसेद विलम्बेन गद्य मानेन गद्यवित ।
केचित्ताल तथा वर्णं तेनपाटस्वरान्[3] जगु ॥७४॥

॥ इति गद्यम ॥६॥

[4]येन केनापि तालेन विचित्रलयसयुत ।
पदै स्वरैश्च मिलित प्रबन्धो दण्डकाभिध ॥७५॥

क्वचिदादौ क्वचिन्मध्ये क्वचिदन्ते स्वरैर्युत ।
दण्डकच्छन्दसा [5]ज्ञेयस्तस्य भूरितरा भिदा ॥७६॥

गदितप्रछन्दउल्लासे ततो ज्ञेया विचक्षणं ।
प्रकीर्णकेष्विम प्राहु प्रबन्धक दण्डक परे ॥ ७७ ॥

॥ इति दण्डक ॥७॥

तालद्वयशरीरत्वे ध्रुवोदग्राहायतालका ।
सममात्राकृतयतिर्मेलापकविनाकृता[6] ॥
ढेङ्कीवदन्यसर्वाङ्गा गदिता ध्वनिकुट्टनी[7] ॥७८॥

॥ इति ध्वनिकुट्टनी ॥८॥

[8]यस्यां द्वादशमात्रान्ते दलान्ते वा स्वरावलि ।
द्विर्गेयमेव पूर्वार्द्धमुत्तरार्द्धं स्वरान्वितम् ॥७९॥

धात्वन्तरेण गातव्यमाभोगस्तु पदान्तरं ॥
मुक्तिरुदग्राहखण्डन सा(ऽऽ)र्या(ऽऽ)यजनवल्लभा ॥८०॥

तालरागार्थनियुतो तद्भेदान कतिचिद ब्रुवे ।
लक्ष्मी ऋद्धिस्ततो बुद्धिर्लीला लज्जा क्षमा तत ॥८१॥

दीर्घा गौडी[9] च [10]रात्रिश्च ज्योत्स्ना छाया च कान्तिका ।
मही मतिश्च कीर्तिश्च ततो ज्ञेया मनोरमा ॥८२॥

---

[1] B Omits गातृ युत ।
[2] A Omits विसग ।
[3] A ०स्वरा ।
[4] Cf S R 4 280 81
[5] B गेय० ।
[6] B C कृतम् ।
[7] cf S R 4, 225
[8] cf S R 4 226 31 for 79 85 above
[9] A गौडीश्च । S R गौरी ।
[10] S R राजी ।

रोहिणी च विशाला च वसुधा च ततः शिवा ।
हरिणी च ततश्चक्रा सारसी कुररी तथा ॥८३॥

हंसी वधूरिति ज्ञेया आर्याः[1] षड्विंशतिः क्रमात् ।
षष्ठं गणं परित्यज्य गणैरन्यैर्गुरूकृतैः ॥८४॥

लक्ष्मी, शेषाः क्रमात् कार्या एकैकगुरुभङ्गतः ।
अस्यास्तु छन्दउल्लासे भेदाः कोटिश ईरिताः ॥८५॥

अनेन गानविधिना ते गेया गीतकोविदैः ।
केचिदार्याप्रबन्धस्य गानमन्यादृशं जगुः ॥८६॥

आलापः प्रतिमण्ठेन [2]कार्यो गेयस्ततः परः ।
पूर्वार्धप्रथमो भागः[3] स्वरैर्गेयस्तत परः[4] ॥८७॥

पाटैस्तृतीयस्तेनैः स्यात् तुर्यस्तु गमकाकुलः ।
बिरुदानि ततः पश्चादाभोगस्तु पदान्तरैः ॥
कार्यो रागैश्च तालैश्च वाञ्छितैरिति [5]तत् कथा ॥८८॥

॥ इति आर्याः ॥९॥

[6]बद्धा प्राकृतभाषाभिर्गाथार्येव निगद्यते ।
सा त्रिपदी पञ्चपदी षट्पद्यपि च कथ्यते ॥८९॥

गुरुभङ्गसमुद्भूता[7] गाथा[8]-स्त्वार्यावदी-[9]प्सिताः ।
भेदा [10]लक्ष्म्यादयः [11]शेषमार्यावल्लक्ष्म कीर्त्तितम् ॥९०॥

॥ इति गाथा ॥१०॥

छन्दसा द्विपथेन स्याद् [12]द्विपथो नाम रूपकम् ।
स [13]संस्कृतैर्द्विपथको दोहकः[14] प्राकृतः स्मृतः[15] ॥९१॥

पदान्तरैः कृताभोग इष्टतालकृतस्थितिः ।
तालमानद्वयेनास्य न्यासः स्याद्यदा स्वरैः ॥९२॥

---

[1] A. omits विसर्ग ।
[2] B. कार्या ।
[3] A. भोग. B. भागैं ।
[4] B. परम् ।
[5] A. तन् ।
[6] cf. S. R. 4. 232-33.
[7] B. C. ॰समुद्भूत ।
[8] A. ॰स्त्वार्या॰ ।
[9] C. ॰रिता ।
[10] A. ल्ह्मयादय ।
[11] A. B. शेषा॰ ।
[12] C. द्विपादो ।
[13] A. स्वष्टतै॰ ।
[14] B. C. दोहका ।
[15] cf S. R. 4. 233,35.

[1]अताल केचिदिच्छन्ति गानमेतस्य तद्विद ।
तालहीन [2]सतालो वा प्रबन्धोऽय चतुर्विध ॥९३॥

आद्य [3] स्वरैर्युतस्तत्र द्वितीयो गमकैर्युत ।
सस्वरैर्गमकै [4] प्रोक्तस्तृतीयस्तु[5], चतुर्थक ॥९४॥

[6]गमकस्वरहीन स्यात्, प्रत्येक नवधा तु स ।
सारसो भ्रमरो [7]हसक्रीडोऽप्यय मयूरक [8] ॥९५॥

[9]छन्दउल्लास एतेषा लक्षण गदित मया ।
चरणव्यत्ययेऽप्येषां भेदा( ) स्यु सारसादय ॥९६॥

[10]एतेषामेकक पाद द्वौ वा त्रींश्चतुरोऽपि वा[11] ।
द्विपथानां प्रगायेच्च सकृत् (द्) द्विर्वा यथारुचि ॥९७॥

॥ इति द्विपथक ॥११॥

[12]वर्णतालेन गातव्यो वर्ण कर्णाटभाषया ।
मिश्रदैरन्विता[13]-भोगस्तालत्रैविध्यतस्त्रिधा ॥९८॥

आद्य स्यात् त्र्यस्रतालेन चतुरस्रेण तत्पर ।
तृतीयो मिश्रवर्णेन त्रिधति गतिरीरिता ॥९९॥

॥ इति वर्ण ॥१२॥

[14]पदै पाटै स्वरैस्तेनैर्वाञ्छितक्रमयोजितै ।
रचना यस्य त वर्णस्वरमाहुर्मनीषिण ॥१००॥

पदादेरादिविन्यास[15]-भेदादेव चतुर्विधम् ।
तेनकन्यासमिच्छन्ति यथाशोभ-[16]प्रयोगिणम् ॥१०१॥

॥ इति वर्णस्वर ॥१३॥

---

1 cf S R 4 234
2 A समालोक ।
3 A B omit विसर्ग ।
4 A गमक ।
5 B C ०तृतीयश्च ।
6 A गमक स्वरहीनस्या B C गमक ।
7 A B C हस क्रीडो० ।
8 cf S R 4 235, 36 The five varieties which have been omitted above are —हस , कुरर चन्द्रलेखक, कुञ्जर, तिलक ।
9 cf S Raj I 3 3 61 62
10 B C एतेषामेकक ।
11 B C च ।
12 cf S R 182 84 for 98-101 above
13 B C ०रन्वितो भोग ।
14 A C पादै ।
15 A भेदान्ते ।
16 B प्रयोगिनम ।]

[1]क्रमेण व्युत्क्रमेणापि [2]द्विपद्या तेनकैरपि ।
यस्य पूर्वोत्तरार्द्धे[3] स्तः स घटस्तेनमुक्तिकः[4] ॥१०२॥

॥ इति घटः ॥१४॥

[5]पाटैर्यस्य ध्रुवोद्ग्राहौ [6]पदैर्बिरुदसंयुतैः ।
आभोगश्च प्रहन्यासः स कैवाड इति स्मृतः[7] ॥१०३॥

स [8]द्विधा [9]पाटसार्थक्यानर्थक्योपाधिभेदतः ।
[10]प्रत्येकं स पुनर्द्विधा शुद्धमिश्रविभेदतः ॥१०४॥

केवलैर्हस्तपाटैर्यः स शुद्ध इति गीयते ।
पाटान्तरान्वितैस्तैर्यो निर्मितो मिश्र एव सः ॥१०५॥

पाटानामर्थवत्ता(ऽ)त्र[11] पदोपाधिकृता[12] यतः ।
निरर्थकेषु तेष्वर्थवत्त्वमत्र[13] कुतो भवेत् ॥१०६॥

पदैर्विना ततस्तेषां पदकैवाड इत्यसौ ।
अस्याभोगस्तु बिरुदैः कर्त्तव्यो गीतवेदिना ॥
एवं न व्यभिचारोऽस्ति लक्षणा [14]करणस्य हि ॥१०७॥

॥ इति कैवाडः ॥१५॥

[15]आर्यैव यदि गीयेत तालेन गजलीलया ।
गजलीला तदा गद्यपद्यजेति द्विधैव सा ॥१०८॥

पद्यजा तत्र विज्ञेया चतुर्द्धा तद्विविच्यते ।
स्वरैराद्यं दलं गीत्वा बिरुदैर्गीयते परम् ॥१०९॥

सतालैरेकिकास्तिस्रः परा(:) स्युः क्रमतो यथा ।
पूर्वार्द्धे चोत्तरार्द्धे चोभयार्द्धे तालयोगतः ॥११०॥

॥ इति गजलीला ॥१६॥

---

[1] A. C. क्रमण ।
[2] B. C. द्विपद्या ।
[3] B. ०रार्द्धे ।
[4] B. मुक्तिदः ।
[5] B. पटै० ।
[6] A. C. पादै० ।
[7] cf. S. R. 4.200-09.
[8] B. C. द्वेधा ।
[9] B. पार्थ० C. यार्थ० ।
[10] B. C. omit this line.
[11] C. ०वत्तत्र ।
[12] B. कृतो ।
[13] B. C. ०मर्थ ।
[14] A. B. करणस्य ।
[15] cf. S. R. 4. 211-13. The above varieties have been spoken of under हयलीला in S. R.

[1]हयलीलेन तालेन हयलीलापि गीयते ।
अन्यलक्षणमेतस्या गजलीलावदिष्यते ॥
छन्दसा हयतालेन केचिदेतां विदुर्बुधः[2] ॥१११॥

॥ इति हयलीला ॥१७॥

[3]वीररौद्ररसैर्बद्धा बिरुदैरङ्कचारिणी ।
पदान्तरे कृताभोगा यर्ष्यनामसमन्विते ॥११२॥

तालैरिष्टे प्रगातव्या वासवी कलिका तथा ।
वृत्ता वीरवती वेदोत्तरा जातिमतीति च ॥११३॥

षट्प्रकारेयमुदिता तालभेदविभागत ।
एकद्वित्रिचतुष्पञ्चसङ्ख्यैस्तालैः क्रमादिमाः ॥११४॥

गातव्या वासवीमुख्या पञ्चाद्यो[4] बिरुदक्रम[5] ।
बिरुदैरष्टभि पूर्वा परा षोडशभिस्तु तैः ॥११५॥

द्वात्रिंशता तृतीया द्वापञ्चाशद्भिश्चतुर्थिका ।
चतुर्युक्तशतेन स्याद् बिरुदाना च पञ्चमी ॥११६॥

न तालबिरुदैर्जातिमत्या नियममाश्रिते ।
[6]एकैकबिरुदस्यान्ते स्वरा पाटाश्च तेनका ॥११७॥

गातव्या[7] केचिदिष्यन्ते रागास्ताला इवेति च ।
नियता एव वर्ण्यन्ते न क्वचिद बहुसम्मतम् ॥११८॥

॥ इत्यङ्कचारिणी ॥१८॥

क्रमाद् वेदाङ्गनामादिसूर्यनामभिरञ्चितैः ।
पदैर्द्वादशभिश्चैत्रमासादीशाभिधायुतैः ॥११९॥

स्वरै पाटै प्रतिपद समुत्तैर्गीयते यदा ।
रागैर्द्वादशभि स स्यात् स्तवसूर्यप्रकाशक ॥१२०॥

[8]वेदाङ्गो भानुरिन्द्रश्च रविनामा गभस्तिमान ।
यम सुवर्णरेताश्च ततश्चैव दिवाकर ॥१२१॥

मित्रो विष्णुश्च वरुण सूर्यश्चेति क्रमादमी ।
चैत्रादिकाना मासानामधिपा द्वादश स्मृताः ॥१२२॥

॥ इति स्तवसूर्यप्रकाश ॥१९॥

---

[1] cf S R 210 [2] B ०र्बुधा ।
[3] cf S R 4 201 5 for 112 17 above
[4] B C पञ्चाद्यो । [5] B ०क्रमम् ।
[6] A एकैकस्य । [7] A C omit विसर्ग । [8] A वेदा भोगानु० ।

[1]छन्दसा वृत्तसंज्ञेन तालेनेष्टेन गीयते ।
वृत्तं तदन्तपादान्तपाक्षिकस्वरसंयुतम् ॥१२३॥

[2]पादान्तरकृताभोगं केचिदेवं विधानतः ।
वृत्तजातं जगुर्गेयमस्वरं याथ केचन ॥
वृत्तस्य लक्षणं सर्वं छन्दःप्रस्ताव ईरितम् ॥१२४॥

॥ इति वृत्तम् ॥२०॥

[3]स्वरैश्च बिरुदैः पाटैस्तेनकैश्च समन्वितः ।
पाटन्यासः स शृङ्गाररसो हरविलासकः ॥
स स्याद्धरविलासादिवर्णनीयविभूषितः ॥१२५॥

॥ इति हरविलासः ॥२१॥

[4]द्विपदी करणाख्येन तालेन परिगीयते ।
साष्टधा तत्र शुद्धाद्या [5]पूर्णा मात्रादिका, पराः ॥१२६॥

खण्डा तारा मानवी च चण्डिका धृतिरष्टमी ।
एकस्मिन् चरणे तस्यामेकः[6] स्याच्छगणः परे ॥१२७॥

पञ्च चागुरुरन्तेऽत्र [7]जौ स्तः षष्ठद्वितीयकौ ।
चतुर्भिरीदृशैः पादैः शुद्धा द्विपदिकोच्यते ॥१२८॥

सैव [8]गुर्वधिकैः पादैः पूर्णा मात्राह्वया पुनः ।
शुद्धाया जगणः षष्ठो यदा लद्वयवर्जितः[9] ॥१२९॥

तदा स्यात् शुद्धलक्ष्मार्द्धलक्षणा खण्डिकाह्वया ।
चतुर्भिर्यगणैर्मध्ये आद्यौ छे [10]चान्तगे गुरौ ॥१३०॥

[11]तारा स्यात्(न्) मानवी छेन चद्वयेन कृताङ्घ्रिका ।
पयुग्मा[12] छगणश्चान्ते[13] लगाभ्यां [14]चन्द्रिका भवेत् ॥१३१॥

छाच्चैस्त्रिभिर्विरचितश्चरणश्चेत् तदा धृतिः ।
अर्द्धान्ते चरणान्ते वा द्विपदीनां स्वरान् क्षिपेत् ॥१३२॥

---

[1] cf. S. R. 4. 246-47. [2] B. पदा० । [3] cf. S. R. 4. 284.
[4] cf. S. R. 4. 214-20 for 126-32 above.
[5] A. B. पूर्ण । [6] A. ०मेत । [7] A. ज्ञौ ।
[8] B. C. गुर्वाधिकैः । [9] B. C. ०जितः ···। [10] A. धान्तगे ।
[11] A. रागा । [12] A ०युग्म ।
[13] B. ०स्यान्ते । [14] A. चण्डिका ।

गमकानपि केऽप्याहुराभोगस्तु पदान्तरं ।
उद्ग्राहेण भवेन्न्यासस्तालमानद्वयेन वा ॥१३३॥

॥ इति द्विपदी ॥२२॥

[1]तोटकस्तोटकेन स्याच्छन्दसा चरणान्तगैः[2] ।
स्वरैरेव न वृत्तेन प्रसज्येत [3]द्विरुक्तिता ॥१३४॥

यतस्तत्र तदन्ते स्युः स्वरा लक्षणभेदकाः ।
अथवा यन्मते[4] वृत्तं नाम छन्दोऽस्ति तन्मते ॥
ततोऽन्येन प्रबन्धा(ः) [5]स्युर्वृत्तसामान्यलक्षणा(ः) ॥१३५॥

॥ इति तोटकः ॥२३॥

[6]पूर्वपूर्वपदस्यान्ते ये वर्णास्ते परस्य चेत्[7] ।
भवन्त्यादौ पदस्यात्र चक्रवालस्तदोच्यते ॥१३६॥

गद्यपद्यप्रभेदेन द्विविधः स [8]प्रकीर्तितः ।
पदान्तरैरिहाभोगो न्यासस्तालद्विमानतः ॥
स्वेच्छया तालरागौ च भवेतामत्र रूपके ॥१३७॥

॥ इति चक्रवालः ॥२४॥

खण्डैस्तालैस्तथा[9] रागैरष्टभिर्यो निगद्यते ।
स स्यात् शरभलीलाख्यः स्वरपाटयुतः पदम् ॥१३८॥

खण्डशब्देन विज्ञेयमत्र रागकदम्बवत् ।
आभोगो न (वा) पदैरन्यैः स प्रबन्धविशेषकृत् ॥१३९॥

[10]तालः शरभलीलश्च छन्दः शरभलीलकम् ।
स्वरपाटयुतः कैश्चित् प्रबन्धोऽयं प्रकीर्त्यते ॥१४०॥

बिरुदं तेनकश्चेति द्वयं यस्मान्न विद्यते ।
चतुरङ्गं ततः प्राहुरिमं शरभलीलकम् ॥१४१॥

॥ इति शरभलीलः ॥२५॥

[11]छन्दसा कलहंसेन तालैर्सम्पादिभिश्च यः ।
निबध्यते प्रबन्धोऽसौ कलहंसः स च द्विधा ॥१४२॥

---

[1] cf S R 4 244
[2] B C ०न्तिगैः ।
[3] A विरु ता ।
[4] B यन्मतम् ।
[5] A स्युः लक्षणा ।
[6] A C पूर्वं ।
[7] cf S R 4 220 21
[8] B सप्रकीर्तितः ।
[9] A omits तथा ।
[10] A तारः B C लालः ।
[11] cf S R 4 242 43

मात्राभवो वर्णजश्च प्रत्येकं तावुभौ द्विधा ।
गद्यपद्योपाधिवशात् तत्र स्याद् गद्यजे विधिः ॥१४३॥

आदौ गीत्वा स्वरान् पश्चात् पादानां स्यान्निवेशनम् ।
पद्यजे तु पदं पूर्वं गीत्वा पश्चात् स्वरावलिः ॥१४४॥

पदैरन्यैः स्वरान्तैः [1]स्यादत्राभोगचतुर्ष्वपि ।
तथा चतुर्ष्वप्येतेषु स्वरैर्न्यासो विधीयते ॥१४५॥

॥ इति कलहंसः ॥२६॥

[2]यः क्रौञ्चपदसंज्ञेन छन्दसा मुक्तकोऽथवा ।
प्रतितालेन तालेन स्वरन्यासो [3]विधीयते ॥
स क्रौञ्चपदसंज्ञोऽयं [4]प्रबन्धः स्वेष्टरागवान् ॥१४६॥

॥ इति क्रौञ्चपदः ॥२७॥

[5]कर्णाटलाटगौडादिभाषाविरचितैः पदैः ।
पाटैश्च यस्य [6]बन्धः स्यादाभोगो बिरुदान्वितः ॥१४७॥

यत्र वीरो रसः कन्दः स ज्ञेयः पाटमुक्तिकः[7] ।
अतालः, कन्दुकं[8] केचित्तालमाहुस्तद्विदः ॥१४८॥

छन्दसा कन्दसंज्ञेन यतोऽयं रच्यते बुधैः ।
ततः कन्द इति ख्यात आर्यागीतिशरीरवान् ॥१४९॥

पूर्वार्द्धमुत्तरार्द्धं च यदा गुर्वधिकं भवेत् ।
आर्याया(:) स भवेत् कन्दः शेषमार्यावदिष्यते ॥१५०॥

भेदाः[9] स्युरस्य पवनो [10]रविर्मदनपावकौ ।
इन्द्रः समुद्रो वरुणश्चन्द्रोऽग्निर्मधुमाधवौ ॥१५१॥

कामध्वजो जयन्तश्च मधुरः शुकसारसौ ।
केकी हरिश्च हरिणो गजः कादम्बकूर्मकौ ॥१५२॥

नयश्च विनयश्चैव विक्रमोगाहसंभवौ ।
[11]धर्मोऽर्थः [12]काम इत्येव एकोनत्रिंशदीरिताः ॥१५३॥

---

[1] A. स्यादत्रा०  [2] cf. S. R. 4. 222.  [3] B. C. निबध्यते ।
[4] C. गलस्य ।  [5] cf. S. R. 4. 205-10 for 147. above.
[6] A. बद्ध ।  [7] B. C. ०मुक्तिकः ।  [8] A. कन्दुकः ।
[9] A. C omit विक्रमं ।  [10] A. रविर्मदनपावकौ ।
[11] B. धर्मार्थे ।  [12] A. omits काम ।

त्रिंशद् गुरून्[1] समारभ्य क्रमाद् गुर्वयुगावधि ।
एकैकस्य गुरोस्त्यागात् क्रमादत्र भवन्त्यमी ॥१५४॥

॥ इति कन्द ॥२८॥

यत्रोद्ग्राहादिभागेषु समा या विषमा रसा[2] ।
[3]निबध्यन्ते प्रबन्धोऽसौ रससन्दोहनामक ॥१५५॥

॥ इति रससन्दोह ॥२९॥

चतुर्षु क्रमतो यत्र धातुषूद्ग्राहकादिषु ।
स्वरा पदानि पाटाश्च तेनाश्चैव स्युराविगा ॥१५६॥

धातवोऽपि क्रमादेव गीयन्ते यत्र रूपके ।
राजचूडामणिस्तालो [4]जयश्रीर्जयमङ्गल ॥१५७॥

विजयश्च क्रमादेते ताला रागा क्रमादमी ।
श्रीरागो मध्यमादिश्च देशवालश्च गौडक[5] ॥१५८॥

शृङ्गारश्च तथा वीरो हास्यश्चाद्भुतसञ्ज्ञक ।
[6]क्रमेणैते रसा ज्ञेयान्याभोगे बिरुदानि च[7] ॥१५९॥

पदस्थाने प्रबन्धोऽय राजचूडामणि कृत ।
[8]स्वोपक्रमक्षमाभर्त्रा राजराजेन धीमता ॥१६०॥

॥ इति राजचूडामणि ॥३०॥

राजानो वाहनीभूय प्रभु पर्युपासते ।
स राजवाहनो जीयान्नरवाहनजित[9] धिया ॥१६१॥

आलयो य सदालिस्या पर्युपासत ईश्वरम् ।
आलिप्रबन्धास्तेनेमे निर्मिता [10]कृष्णभूभुजा ॥१६२॥

इति [11]श्रीराजाधिराजमहीमहेन्द्रश्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्या संगीतमीमांसायां [12]गीतरत्नकोशे प्रबन्धोल्लासे आलिक्रम-प्रबन्धपरीक्षण [13]तृतीय समाप्तम् ।

---

[1] A गुरू ।
[2] A omits विसर्ग ।
[3] A निबध्यते ।
[4] A जय० ।
[5] B C गौडका ।
[6] A C क्रमेणेति ।
[7] A B तु ।
[8] B C स्वापक्रम ।
[9] B ०श्रियाजित ।
[10] B C कुम्भ० ।
[11] B महाराजाधिराजकुम्भकर्णमहीमहेन्द्रेण C राजश्रीकुम्भकर्णमहीमहेन्द्रेण ।
[12] B omits गीतरत्नकोशे ।
[13] B द्वितीय ।

